**अम्बुसारा** । स्त्री । कदलीवृक्षे।भा पू १भ फ व।

**अम्बुसाह्वः** । पुं । कुन्दपुष्पवृक्षे । वै निघ ।

**अम्भ** । पु । जले। रा नि व १४।

**अम्भःपा** । पु । चातकपक्षिणि ।

**अम्भ सार** । पु । मुक्तायां । वै निघ ।

**अम्भ सू** । स्त्री । धूम्के । मं धुकें।

**अम्भोजम्** । क्ली । पद्मे । वारिविलसी ।

**अम्भोजनाल** । पु । पद्मनाले । वै निघ ।

**अम्भोजा** । स्त्री । वल्लीयष्टीमधुनि । वै निघ ।

**अम्भोद** । पु । भद्रमुस्तायाम् । रा नि व ६। च द यक्ष्म चि एलादिमन्थे । प्रपौण्डरीके । प मु ।

**अम्भोधिपल्लव** । पु । प्रवाल । मं पोंवलें। रा नि व १३ ।

**अम्भोरुहम्** । क्ली । पद्मे । च द र पि चि ।

**अम्भोरुहकेशरम्** । क्ली । पद्मकेशरे । च द र पि चि ।

**अम्र** । पुं । आम्रवृक्षे । आम् गाछ । रा नि । See आम्र । माचिकायां । पुदिना । हि मोइया । अम्लवेतसे । रा नि ।

**अम्रम्** । क्ली । आम्रफल ।

**अम्रगन्धहरिद्रा** । स्त्री । (Curcuma reclinata) आम्रहरिद्रायाम् । आमहलुद । हि आमहलदी ।

**अम्रवेतस** । पु । अम्लवेतसे ।

**अम्रसार** । पु । अम्लवेतसे । रा नि ।

**अम्रात (क)** । पु । (Spandias mangifera) Hogplum आम्रातकवृक्षे । आमडा गाछ । हि अम्बाडा । मं अंबाडाचे झाड । अ मा । पिका । See आम्रातक ।

**अम्ल** । पु । षड्रसान्यतमरसे । अम्ल रस । स च जम्बीरमातुलुङ्गफलादिषु व्यक्त । गुणा —लघु, उष्ण , रुचिकर, दीपिकर ,हृदयतर्पण , वाता नुलोमन , वन्य कण्ठदाहकरश्च । रा नि व २०। तद्विपाकोऽम्ल तद्विपाकगुणस्तु पित्तकृत् वातघ्नश्च रोगघ्नश्च । सु सू । प्रीतिकर पाचन मार्दवक रश्च । अतिसेवनात् भ्रान्तिकुष्ठकफपाण्डुकार्श्यकास जनक। रा नि व १२। पाचन रुचिकर पित्तल कफजनकी रक्तवर्द्धक लघु लेखन उष्णवीर्य स्पर्शशीतल सन्दीपन क्लेदनी वातघ्न स्निग्ध तीक्ष्ण सारक शुक्रविवन्धानाहदृष्टिघ्न हर्षणश्च। अतिसेवने—भ्रमदवडदाहतिमिरज्वरघ्न शोथवि स्फोटकुष्ठपाण्डुलक्षण । भा पू १भ । लघुत्व पाच कत्व पित्तश्लेष्मवातनिक्लेदत्वमुष्णत्वं वातघ्नत्वम। राज।

**अम्लम्** । क्ली। अम्लवेतसफले । काञ्जिके । घोले। रा नि। बदरफले । सि यो अरोचक चि । वर्वर चन्दने। रा नि व १२ ।

**अम्लक** । पु । लकुचवृक्षे । श र ।

**अम्लकरञ्ज** । पु। करञ्जविशेषे। टककरञ्जा। तत्फलगुणा —पिपासाघ्नं गुरु रुचिकरं पित्त करश्च। राज ।

**अम्लका** । स्त्री । पालङ्कशाके । পালং শাক। प मु । पलाशीलतायाम् । रा नि व ४ ।

**अम्लकाञ्जिकम्** । क्ली । काञ्जिके । কাঁজি। च द ग्रहणी चि मह्यषट्पलघृते ।

**अम्लकाण्ड** । पु । शूकरशीर्षे । वै निघ। क्ली। लवणतृणे । নোণা ঘাস । रा नि व ८ ।

**अम्लकुचि** । पु । वृक्षविशेषे ।

**अम्लकेशर** । पु। मातुलुङ्गे । টাবালেবু গাছ। प मु । दाडिम्बवृक्षे । [लेवु वै निघ ।

**अम्लकेसरी** । पु । अम्लरसनिम्बुकवृक्षे। গোঁড়া

**अम्लकोश (शाक)** । पु । तिन्तिडीवृक्षे । मद व ६ । [मं अवटवाक । वै निघ ।

**अम्लगोरस.** । पुं। अम्लतक्रे। টক্ দোল।

**अम्लचाङ्गेरी** । स्त्री। चाङ्गेरीभेदे । টক্ আম রুল। च चि ३ष भगु तैले ।

**अम्लचुक्रिका** । स्त्री। चिञ्चाम्ले। তেঁতুলের অম্বল। रा नि व ११ । See चिञ्चासारः।

**अम्लचूड** । पु । शाकाम्ले । चिञ्चासारे। তেঁতুলের অম্বল। रा नि व ११ । अम्लशाके । চুকা পালং। रा नि ।

**अम्लजम्बीर** । पु । अम्लरसनिम्बूकवृक्षे।

टक् लेबु गाछ। मं इडलिंबू। रा नि.व ११। See निम्बुक ।

**अम्लटकः** । पु । अश्मन्तकवृक्षे । अम्र कुचाइ ।

**अम्लत्वक्** । पु । प्रियालवृक्षे । म चारोली ।

**अम्लदीलक** । पु । चुक्रे । चूका पालङ् । मं थवीती । वै निघ. ।

**अम्लद्रवः** । पु । बीजपूरादिरसे । भा म १म जिह्मकज्व चि.। "अम्लद्रव सशमयेद्रसज्ञा"

**अम्लद्रव्यम्** । क्ली । बीजपूरादौ तक्रे वै निघ।

**अम्लनायकः** । पु । अम्लवेतसे । थैकल् । म आम्लवेतस । रा नि व ६ ।

**अम्लनिम्बुकः** । पु । महाम्लनिम्बुके । गोंडा लेबु । म मोठे इरलिंबू । वै निघ ।

**अम्लनिशा** । स्त्री । शठ्याम् । शटी । रा नि ।

**अम्लपञ्चकम्** । क्ली । १ कोलदाडिमवृक्षाम्ल चुक्रिकाम्लवेतसेषु।२जम्बीरनारङ्गाम्लवेतसतिन्तिडी बीजपूरेषु । रा नि व.२१ । See पञ्चाम्लम् ।

**अम्लपचः** । पु । दण्डालुके । थाम् आलु । वै निघ । अश्मन्तकवृक्षे । रा नि व.९ । क्षुद्रपत्र तुलसीवृक्षे । र.मा ।

**अम्लपत्रम्** । क्ली । चुक्रशाके । रा नि व ७ ।

**अम्लपत्रकः** । पु । मेण्डायाम् । अश्मन्तकवृक्षे । अम्र कुचाइ, आबुटी । रा नि व.९ । मद व १ । अम्ललोणिकायाम् । आमरुल । भा पू १व ।

**अम्लपत्रा** । स्त्री । शुक्रपर्णायां । ढकुडा । प म ।

**अम्लपत्रिका** । स्त्री । चाङ्गेर्याम् । क्षुद्र मूनी । मूनी इति लोके । चावेता इति हिन्दी । रा नि व ५ ।

**अम्लपत्री** । स्त्री । पलाशीलतायाम् । रा नि व. ४ । चाङ्गेर्यां । रा नि व ५ । क्षुद्राम्लिकायाम् । क्षुद्र मूनी ।

**अम्लपनसः** । पु । लिकुचवृक्षे । ডেলো, मां न्दार गाछ। मं चोटीचे भाड़ । वै निघ. ।

**अम्लपर्णिका**, **अम्लपर्णी** । स्त्री । वृक्षविशेषे । सुरपर्ण्याम् । भा.। गुणा —अम्लपर्णी वात कफशूलघ्न च विनाशिका । वै.निघ. ।

**अम्लपादप**. । पु । वृक्षाम्ले । তেঁতুল गाछ । म कोकवी । वै निघ ।

**अम्लपित्तम्** । क्ली । रोगविशेषे । तल्लक्षणम्— *विरुद्धदुष्टाम्लविदाहि पित्तप्रकोपि पानान्नमुजी* विदग्ध । पित्त स्वहेतूपचित पुरा यत्तदम्लपित्त प्रवदन्ति सन्त ॥ अविपाक क्लमोत्क्लेश तिक्ताम्ली द्गारगौरवे । हृत्कण्ठदाहारुचिभिरम्लपित्त वदेद्भि षक् ॥ तच द्विधा—अधोगमूर्द्धगञ्चेति । मा नि ।

**अम्लपित्तान्तकमोदकः** । पु । अम्लपित्ते योगविशेष । अत्र शुण्ठी ८ प पिप्पली ८ प. गुवाकचूर्ण ८प घृत ४श एकत्र पाक । पाकसिद्धौ एषा प्रक्षेप यथा लवङ्गचूर्णं वचाचूर्णं कुष्ठचूर्णं नागकेसरचूर्णं यमानीचूर्णं रक्तचन्दनचूर्णं रास्ना चूर्णं कृष्णजीरकचूर्णं यष्टिमधुचूर्णं देवदारुचूर्णं त्रिफलाचूर्णं तेजपत्रत्वगेलाचूर्णं सैन्धवं हबुषाफल चूर्णं शटीमदनफटफलचूर्णं जटामांसीचूर्णं अभ्र रङ्ग रौप्य तालीशचूर्णं पद्मकाष्ठचूर्णं मूर्वाचूर्णं वराहक्रान्ताचूर्णं वंशलोचन पिप्पलीमूलचूर्णं श तावरीचूर्णं शतपुष्पाचूर्णं पीतझिण्टीमूलचूर्णं जा तीकोषचूर्णं जातीफलचूर्णं काकोलीमुस्तकपिप पलीकर्पूरविडङ्गवनयमानीनां चूर्णं बलागुडूच्यपा मार्गबीजगोक्षुरबीजचन्दनदेवताडानां चूर्णं लौह कांस्यचेति द्रव्यजात प्रत्येक २ तो स्वर्णं १ तो । भैष ।

**अम्लपित्तान्तकरसः** । पु । रसोऽयमम्लपि त्तघ्न । रसे चि । अत्र तुल्या पथ्याभिति सर्वं चूर्णसमां हरीतकीम् । र.सा स । सतमृताकौ हाना तुल्यां पथ्यां विमर्दयेत् । मापमात्र लिहेत् चौद्रेरम्लपित्तप्रशान्तये ॥ भैष ।

**अम्लपुरम्** । क्ली । वृक्षाम्ले । रा नि.व ६ ।

**अम्लपुष्पिका** । स्त्री । आरण्यशणवृक्षे । वना शण । मं रानताग । वै निघ ।

**अम्लपूरम्** । क्ली । तिन्तिड्याम् । তেঁতুল । मं कोकमो । रा नि व ६ ।

**अम्लफलः** । पु । आम्रवृक्षे । रा नि व ११ ।

**अम्लफलम्** । क्ली । वृक्षाम्ले । তেঁতুল । रा नि व ६ । [कियारी । वै निघ ।

**अम्लफला** । स्त्री । कर्काटकायाम् । मं लघु

**अम्लबदर** । पु । अम्लकोलिकायाम् । টক কুল । ध मू ४ष । [চুকা পালঙ। वै निघ ।

**अम्लभेदनः** । पु । अम्लवेतसे । रा नि । शुक्रि ।

**अम्लमारीष** । पु । अम्लशाकविशेषे । অম্বল নটিয়া । हि मारसा । गुणा —"अम्लमारीषको दोषकोपनो मधुर पटु ।" वै निघ ।

**अम्लमूलकम्** । क्ली । व्युषितकाञ्जिकपक्कमूल के । 'काञ्जिक व्युषित पक्क मूलक त्वम्लमूलकम्।' प म श्ख । च द सग्रहणी चि वृहच्चुक्र ।

**अम्लमेह** । पु पित्तजन्यमेहरोगभेदे । अत्र रोगी अम्लरसगन्ध मेहति । सु नि ६ष ।

**अम्ल०हा** । स्त्री । मालवदेशप्रसिद्धनागवल्लीभेदे । गुणा —रुचिकरी दाहघ्नी गुल्महरी आध्मानहरी च । रा नि ।

**अम्ललोणिका** } स्त्री । (Oxalis cornicu
**अम्ललोणी** } lata) चाङ्गेर्य्याँ । আমরুল শাক । म चुका । ध टी । गुणा —दीपनी रुक्षा रुचोष्णा कफवातघ्नी पित्तला अम्ला ग्रहण्यर्श कुष्ठातीसारघ्नी च । भा पू १भ । भाषा २—२ माषा । पालङ्कविशेषे । চুকা পালঙ । र मा ।

**अम्लवती** । क्ली । चाङ्गेर्य्याम् । আমরুল । रा नि व ५। क्षुद्राम्लिकायां । थूमे थूनी ।

**अम्लवर्ग.** । पु । चाङ्गेरी लकुचा अम्लवेतस जम्बीरक बीजपूरक नागरङ्ग दाडिम कपित्थाम्लवी जाम्लकाम्बष्ठा करमर्द्दक तिन्दुककाल तिन्तिडीषु । अम्बष्ठासहित द्विरेतदुदितं पञ्चाम्लक तद्द्वयं, विशेष करमर्द्दनिम्बुकयुत स्यादम्लवर्गाद्वयम् । रा नि व २२। अम्लवेतसजम्बीरलुङ्गाम्लचणकाम्लका । नाग रङ्ग तिन्तिडी च चिञ्चाफलञ्च निम्बुकम् । चाङ्गेरी दाडिमश्चैव करमर्द्द तथैव च । एष चाम्लगणः प्रो क्ता वेतसाम्लसमायुत ॥ र सा स । [रा नि व ७।

**अम्लवल्ली (ल्लिका)** । स्त्री । चिपर्णीकन्दे ।

**अम्लवाटक.** । पु । आम्रातकवृक्षे । म आंबा डा । वै निघ ।

**अम्लवाटा**
**अम्लवाटिका** } स्त्री । नागवल्लीभेदे । পান বিশেষ । म अवाडे पर्ण ।
**अम्लवाटी** } रा नि.व.११। See नागवल्ली।

**अम्लवातकः (वाडक)** । पु । आम्रातक वृक्षे । আম্ড়া গাছ ।

**अम्लवाप्य.** । पु । मं आवटमाठ ।

**अम्लवासुकः** । पु । चाङ्गेर्य्याम् । আমরুল । मं चुका । वै निघ ।

**अम्लवास्तु(स्तू)कम्** । क्ली । चुक्रनामपत्र शाके । অম্লবেতুয়া, টাঙ্গাবেতো इति भाषा । रा नि व ७।

**अम्लविदुल** । पु । अम्लवेतसे । वै निघ ।

**अम्लवीजम्** । क्ली । वृक्षाम्ल । তেঁতুল । रा नि व ६ । See तिन्तिडी । [भा पू १भ ।

**अम्लवृक्ष (कम्)** । क्ली,पु । वृक्षाम्ले । তেঁতুল ।

**अम्लवेतस (क)** । पु, क्ली । (Rumex vesicarius) country sorrel स्वनामख्यात क्षुपे । অম্লবেতস । हि आमलटास । चूकल इति च द. । च द ज्व चि । सिन्धुकूलषणै साम्लवेतसै । च सू २ष । गुणा —अत्यम्ल कषायोष्ण वातघ्न कफार्शोगुल्मारोचकहरश्च । भोटदेशे प्रसिद्ध । रा नि व ६ । लघुदीपनमत्यम्लं भेदनं हृद्रोगशूल गुल्मघ्नं पित्तलं लोमहर्षणं रुक्षं विण्मूत्रदोषहरं प्लीहोदावर्त्तघ्नं हिक्कानाहारुचिश्वासकासाजीर्णवान्ति हरं वातकफजरोगघ्नं छागमांसद्रवकरं चणकाम्ल तुल्यगुणं लौहसूचीद्रावकञ्च । भा पू १भ । तस्य कफलगुणा —दोषघ्नं गुरु दारकञ्च । राज । शुभे । চুকা পালঙ্ । हि चुकेका शाक । प शु । अम्ललोण्याम् । च द काद्याय गु ।

**अम्लशाकम्** । क्ली । वृक्षाम्ल । তেঁতুল । रा नि व ६। पु । चुक्रनामपत्रशाक । অম্লচুচাই, টক পালঙ্, চুকা পালঙ্ । गुण —अत्यम्लं वातघ्न दाहश्रमघ्नञ्च । सशर्करस्य तस्य गुण —दाहपित्त कफहरत्वम् । रा नि व ७।

**अम्लशाकाख्यम्** । क्ली । चुक्रनामकपत्रशाके । টক পালঙ্ । म थारचुका । रा नि व ७।

**अम्लष्टा** । स्त्री । चाङ्गेर्य्याम् । मं चांवीती ।

**अम्लसरा** । स्त्री । नागवल्लीभेदे । रा नि व ११।

**अम्लसारः** । पु । अम्लवेतसे । रा नि व ६। निम्बुके । रा नि व ११। हिन्तालवृक्षे । रा नि व.८।

**अम्लसारं (कम्)** । क्ली । काञ्जिके । चुक्रनामककाञ्जिकभेदे । रा नि.व.१५ ।

**अम्लस्कन्धः** । पुं । वा.सू १०।२२५ ।

**अम्लस्तम्भनिका** । स्त्री। तिन्तिड्यां। वै.निघ।

**अम्लहरिद्रा** । स्त्री । शट्याम् । रा.नि.व.६ ।

**अम्ला** । स्त्री । चाङ्गेर्य्यां । आमरुल । रा.नि व.५ । वनमातुलुङ्गे । अम्लवेतसे । रा नि.व.६ । श्रीवल्लीवृक्षे । वर्षामल्लिकां । रा नि व.८ । तिन्तिड्यां । रा.नि व ११ । भा.पु १म.फलव ।

**अम्लाङ्कुशः** । पुं । अम्लवेतसे । रा.नि.व.६ ।

**अम्लाटनः** । पुं । महासहावृक्षे । मे. झाँटी विशेष । आम्रना इति च भाषा । ऋि कटसर्या लालगुलमखमल। आयनाट् इति दक्षिणदेशे। वाणपुष्प इति च गौडे ख्यातः । गुणाः—कषायो मधुरस्तिक्त उष्णवीर्य्यः स्निग्धश्च । भा.पू.१म पु.व । ४ख.म.भ.योनिरो.चि. । चि.श क.वल्ली.गर्भवेद नाड़रयोगे ।

**अम्लाढ्यः** । पुं । करुणनिम्बुके । नारांगी लेबुर गाछ । प.मु. । [१म पु व. ।

**अम्लातः (कः)** । पुं । अम्लाटनवृक्षे । भा.पू.

**अम्लातकी** । स्त्री। पलाशीलतायां। रा.नि व.४।

**अम्लादानः** । पुं । कुरण्टकवृक्षे । पीयावांसा इति प्रसिद्धे । वाणपुष्प इति गौडे ।

**अम्लादिः** । पुं । तिन्तिड्याम् । रा.नि.व.६ । चुक्रनामकपत्रशाके । रा.नि.व.७ ।

**अम्लाध्युषितः** । पुं, क्ली । सर्व्वगताक्षिरोगे । लक्षणम्—"श्याव लोहितपर्य्यन्तं सर्व्वमक्षि प्रपच्यते । सदाहशोथं सास्रावमम्लाध्युषितमम्लतः ॥" मा नि. । करुणनिम्बुके ।

**अम्लानः** । पुं ।(Gomphrena globosa.) बन्धुजीवकवृक्षे । वाङ्कुलीवृक्ष । चिका । झिण्टिकाभेदे । अम्लानो झिण्टिकाभेदे । विश्व. । अम्लाटनवृक्षे । आम्रना इति भाषा । भा.म. ४म. योनिरो.चि. । "बदंष्ट्रमधुकत्वद्राम्लानैः ।" महासहायाम् । मे.नवकं । महाराजतरुणीवृक्षे । रा. नि.व १० ।

**अम्लानम्** । क्ली । पद्मे । श.र. ।

**अम्लाना** । स्त्री । महासेवन्तीपुष्पवृक्षे । बड़बन सेउती । मं घोर रायशेवंती । वै.निघ ।

**अम्लानिनी** । स्त्री । पद्मसमूहे । पद्मिन्याम् । चिका. । [रा.नि.व.६ ।

**अम्लाम्ला** । स्त्री । चाङ्गेर्य्यां । आमरुल शाक ।

**अम्लायनी** । स्त्री । मल्लिकाभेदे । मं नेवाली । वै निघ. ।

**अम्लिका** । स्त्री । तिन्तिडीवृक्षे । प.मु.रा.नि. व.११ । आमे । रा नि व २३ । पलाशीलतायां । माचिकायाम् । पुदिना । रा.नि.व.२३। श्वेताम्लिकायाम् । चाङ्गेर्य्याम् । रा नि.व २३ । अम्लोद्गारे । मे. । अम्लरोगे तिन्तिड्यर्थे, एवं सर्व्वत्र दीपनयोगे । पुरीषसंग्रहणादौ पुनरम्लिका ख्यामच्छदहृद्दारके । सि.यो अग्निमुखचूर्णे द्वन्दः । सि.यो. मरीच-चि. । [वै.निघ. ।

**अम्लिकाकन्दः** । पुं । मं अम्लनालिकायाम् ।

**अम्लिकापानम्** । क्ली । तिन्तिडीपानके । तेँतुलपाना । पक्वतिन्तिडीकां वारिमर्द्दितं शर्करामरिचलवङ्गकर्पूरमिश्रितं पानकमुच्यते । "अम्लिकायाः फलं पक्वं मर्द्दितं वारिणा दृढम् । शर्करामरिचैर्मिश्रं लवङ्गेन्दुसुवासितम् । अम्लिकाफलसम्भूत पानकं वातनाशनम् ।" भा.पू.पानकवर्ग. ।

**अम्लिकावटकः** । वटकविशेषे । अम्बवड़ा । भीतीवरा इति लोके । "अम्लिकां स्वेदयित्वा तु जलेन सह मर्द्दयेत् । तन्नीरे क्रतसंस्कारे वटकान् मज्जयेत्ततः। अम्लिकावटकास्ते तु रुच्या वह्निप्रदीपनाः ॥" भा ।

**अम्ली** । स्त्री । अम्लवेतसे । वै निघ २म.मदात्यय. चि.खर्ज्जूरादिमन्थे । चुक्रिकायां । टकपालड़ । तिन्तिड्याम् । रा.नि.व.११ । भा.पु १म.फलव । चाङ्गेर्य्याम् । मि खड्गिकं ।

**अम्लीका** । स्त्री । तिन्तिड्याम् । च.टी. । "हृद्याम्लीकदाडिमे ।" सि यो.मदात्यय.चि. । अम्लोद्गारे । सु.नि.६ष. ।

**अम्लीकाफलम्** । क्ली । तिन्तिडीफले । तद्गुणाः—गुरु सदीपनं भेदन उष्णार्द्र लघु कफवा-

शयी, पथ्यच। वा.सू.६च।"चस्री हि चाम्रफलम विपक्व तदग्रपित्तामकरं विदाहि। वातामयि ग्रल गदि प्रग्रल पक्व तथा शीतगुणोपपन्न॥" चनि.१०च।

**अम्लीयः** । पुं । अम्लवेतसे । वै.निघ. ।

**अम्लोटकः** । पुं । अम्लकहचे खनामैव प्रसिद्धे । हिं आमरोडा । अम्लकुडाई । रत्ना. ।

**अम्लोटजः** । पुं । चाङ्गेर्य्याम् । बड आमरूल पीता । च.द चातुर्थ ज्व.चि । "चम्लोटजसद्रसेन द्रवेन ।"

**अम्लोत्तमम्** । क्ली । दाडिमे । प.मु ।

**अयनम्** । क्ली । मासषट्क व्याप्य भानोर्दक्षिणतो वा गतौ । मे नचिक । तच्च द्विविधम् — उत्तरायण दक्षिणायनञ्च । तयोराद्य वर्षाशरद्धेमन्तात्मकं, तत्र भगवानाप्याय्यते सोमोऽम्लवणमधुराश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमभिवर्द्धते । द्वितीयञ्च शिशिरवसन्तग्रीष्मात्मकं तत्र भगवानाप्याय्यतेऽर्कः तिक्तकषायकटुकाश्च रसा बलवन्तो भवन्त्युत्तरोत्तरञ्च सर्व्वप्राणिनां बलमपहीयते । सु.सू ।

**अयस्** / **अयसम्** क्ली । लौहमात्रे । रत्ना । च द पाण्डु चि । कान्तलौहे । प.मु । मुण्डलौहे । रा.नि व १३ ।

**अयस्कान्तः** । पु । कान्तलौहे । रा नि,व.१३। लौहचुम्बके । कान्तपाषाणे । चुम्बक पाथर । गुणा — लेखन, शीतो मेदोविषघ्नश्च । मद व.४ ।

**अयस्कान्तशिला** । स्त्री । लौहचुम्बके । चुम्बकपाथर । वै निघ ।

**अयस्कारः** । पु । जङ्घायभागे । त्रिका. ।

**अयस्कीट.** । पुं । लौहकिट्टे । वै निघ ।

**अयानम्** । क्ली । स्वभावे । हारा ।

**अयाह्नम्** । क्ली । कांस्यधातौ । काँसा । वै निघ ।

**अयुक्छदः** । पु । सप्तपर्णवृक्षे । छातिमगाछ । हेच ।

**अयुग्मक.** । पु । सप्तपर्णवृक्षे । वै निघ. ।

**अयुग्मच्छदः** । पु । सप्तपर्णवृक्षे । छातिम गाछ । च टी ।

**अयुग्मपत्रः** / **अयुग्मपर्णः** पुं । सप्तपर्णवृक्षे । वै निघ. ।

**अयोगः** । पु । विश्लेषे । कठिनोद्यमे । कूटे । मे गचिकं ।

**अयोगुडः** । पु । लौहगुडिकायां । "वरसाम्रो विषविष कथित तासमेव वा । पीतमत्यग्निसन्तप्तो भवितो वाप्ययोगुड ॥" च. । [वै निघ. ।

**अयोच्छिष्टम्** । क्ली । लौहकिट्टे । मण्डूर ।

**अयोमलम्** । क्ली । लौहमले । लोहार गु वा मण्डूर । प मु । "अयोमलन्तु सलम ।" सि यो. पाण्डु चि हन्द । च द पाण्डु चि ।

**अयोरजः** । क्ली । लौहकिट्टे । मण्डूर । लौह चूर्णे । च.द पाण्डु चि.नवायसचूर्णे ।

**अयोवस्तिः** । पु, स्त्री । वस्तिकर्म्मविशेषे । यथा—एरण्डमूल नि.क्वाथ्य मधुतैल ससैन्धवम् । एष युक्त अयोवस्ति सवचापिप्पलीफल ॥" भा.।

**अरकः** । पु, क्ली । शैवाले । हारा । वै निघ।

**अरक्तः** । पु । लाक्षायाम् । ला । रा नि व ६ । See चलक्त ।

**अरग्वधः** । पु । (Cassia fistula) महाकर्णिकारवृक्षे । बड सोन्दालि, लड़िया सोनाल, राखाल नडी, वानर नडी इति । मं बडिलु वा हव्याचे भाड । क हेगगके । तै रेलचेट्टु । त्त सुनारि । हि आमलटा,धनवहेडा । गुणा.—चति मधुर शीतल शूलघ्न ज्वरकण्डूकुष्ठमेहकफविट्बन्धघ्न । रा.नि व.९ । स्रसन गुरु हृद्रोगशोदावर्त्तघ्न । एतत्फल स्रसनगुणयुक्त रुच्य पित्तकुष्ठकफघ्न कोष्ठशुद्धिकर ज्वरे हितञ्च । भा पू. १भ. । "पर्णानि रेचकानि स्यु कफमेदोहराणि च । पुष्पाणि स्वादुशीतानि तिक्तानि ग्राहकाणि च । सुवराणि विजानीयात् । मज्जा च मधुरा पाके स्निग्धा चाग्निविवर्द्धनी । रेचका पित्तवातानां नायका समुदाहृता ।" द्रव्य.गु वै.निघ. । See चारग्वध । [दग्निसुखचूर्णे ।

**अरग्वधम्** । क्ली । स्वर्णालुफले । सि यो हृ-

**अरङ्गः (गा) (गी)** । पु,स्त्री । मत्स्यविशेषे वै निघ. । मधुशिग्रु । रत्ना ।

**अरङ्गरः** । पु । कृत्रिमविषे । वै निघ. ।

**अरङ्गुटी** । स्त्री । माधवीलतायाम् । वै निघ. ।

**अरजा** । स्त्री । घृतकुमार्य्याम् ।

**अरटुः** । पु। अरलुवृक्षे । শোনা গাছ। अ टी.।

**अरणः** । पु । चित्रकवृक्षे । वै.निघ ।

**अरणिः** । पु। क्षुद्राग्निमन्थवृक्षे । ছোটগণিরি । वा टी १५अ. । हिमा वीरतर्व्वादौ । अरणिर्वह्नि मन्थे ना द्वयोर्निर्मथ्यदारुणि। मे चत्रिक । श्योणा कवृक्षे । चित्रकवृक्षे ।

**अरणिका** । स्त्री । अग्निमन्थवृक्षे । वा.सू.१५अ "वेल्लन्तरादिव। 'वेल्लन्तरारणिकवुकवृषाश्मभेद ।"

**अरणी** । स्त्री । क्षुद्राग्निमन्थे । ছোট গণিরি । म लघुऐरण । रा नि व ८ ।

**अरणीकेतुः** । पु । महाग्निमन्थवृक्षे । বড গণিরি । मं थोरऐरण । रा नि व.८ ।

**अरण्यः** । पु । कट्फलवृक्षे । কট্‌ফলের গাছ। अ.च. । शालभेदे । वै.निघ. ।

**अरण्यम्** । क्ली । कानने । বন । म रान । क अटवि । उद्यानमहावनोपवनप्रमदवनभेदात् स चतुर्विधम् । तत्रोद्यान यत्र रागिण क्रीडन्ति । नृपालयेषु यत्र पुरोचित वन प्रमदवनम् । उप वन पुर प्रान्तस्थवनम् । रा.नि व २ ।

**अरण्यकः** । पुं । महानिम्बे । মহানিম্। म बकाननिम्ब । वै निघ ।

**अरण्यकणा** । स्त्री । कटुजीरके । জীরা বিশেষ । वै निघ. । वनपिप्पल्याम् ।

**अरण्यकदली** । स्त्री । गिरिकदल्याम् । বন কদল্যাম্ । বোচেকলা, বুনো কলা, দয়া কলা इति च भाषा । म रानकेल । रा नि व ११ । गुणा —शीतला मधुरा बल्या वीर्य्यवृद्धौ रुच्या दुर्जरा गुरु' दाहशोषपित्तनाशिनी । तत्फल तुवर मधुर गुरु च । वै निघ ।

**अरण्यकर्कटी** । स्त्री । वनजातकर्कट्याम् । বুনো কাঁকুড় । म रानतवसं । गुणा —"अरण्य कर्कटी चोष्णा रुक्षे तिक्ता च भेदका । पाके कटी कफकृमीपित्तकण्डूज्वरापहा । वै निघ. ।

**अरण्यकाकः** । पुं । वनकाके । দাঁড়কাক । म रानकावला । द्रव्य गु वै.निघ ।

**अरण्यकार्पासी** । स्त्री । The wild cotton. वनकार्पासे । বনকাপাসী । म रानकापासी । तें पत्ति । गुणा —व्रणघ्नी शस्त्रघातघ्नी रुच्या च । रा.नि व ४ ।

**अरण्यकुक्कुटः** । पु। वनकुक्कुटे । বনকুক্‌ড়ো । हि कौमुडा वनमोर्गा । म रानकोंबडे । तन्मांस गुणा —हृद्य लघु श्लेष्महरञ्च । रा नि व.१७ । बृंहण स्निग्ध वीर्य्योष्ण वातघ्न गुरु च । मद व १२ ।

**अरण्यकुलित्थिका (त्था) (त्थी)** । स्त्री । कुलत्थायाम् । বন কুর্ত্তিকলায় । रा नि व.५ । A blue stone used as a collyrium कुल त्थाञ्जनी । कृत्रिमाञ्जनविशेष । रा.नि.व.१३ । हि कालसुमा । See कुलत्थाञ्जन ।

**अरण्यकुसुम्भः** । पु । वनकुसुम्भक्षुपे । বন কুসুম । म रानकर्डई, रानकुसुम्भ । गुणा —पाककटु श्लेष्मघ्न दीपनञ्च । रा.नि.व.४ ।

**अरण्यकोलिः** । स्त्री । वनवदरे । বনকুল ।

**अरण्यगवयः** । पु । वनगवये । अय कूलचर- जातीय । सु सू ४६अ । कूलचरशब्द पश्य ।

**अरण्यघोली (लिका)** । स्त्री। वनघोलीति प्रसिद्धपत्रशाकविशेषे । घोलीशाके । रा नि व.९ । मन्थनदण्डे ।

**अरण्यचटकः** । पुं । वनचटकपक्षिणि । বন চটা পাখি, গুড়গুড়ে, নাগরভড়ুই, ছাতার इति च । तन्मांस—लघु हिमावह चटकसमगु णञ्च । वै निघ द्रव्यगु. ।

**अरण्यचम्पकः** । पुं । वनचम्पके । বনচাঁপা । गुणा —शीतल लघु रुक्षह्निकर वलकरञ्च । रा- नि व १० ।

**अरण्यच्छागः** । पुं । वनछागे । বুনো ছাগল ।

**अरण्यजः** । पु । तिलकवृक्षे । हे च. ।

**अरण्यजार्द्रका** । स्त्री । Wild ginger. वनार्द्रके । বন আদা । मं रानआले । गुणा — कटु रुच्य वह्निकर वल्य वातप्रदञ्च । रा नि व ६ ।

**अरण्यजीरम्(कम्)** । क्ली । वनजीरके, कटु

जीरके। वनजीरा। म कडुजीरं। तें जीरकव। गुणा —"अरण्यजीरकश्चोष्ण तुवरं कटुकं मतम्। स्तम्भवातं कफञ्चैव व्रणञ्चैव विनाशयेत्।" वै निघ। द्रव्य.गु.।

**अरण्यतुलसी**। स्त्री। वनतुलस्यां, कृष्णवर्वर्याम्। वनतुलसी। हि कालावावरी। म राण तुलस, वैजयन्तीतुलसी। सा द्विधा कृष्णदीर्घभेदात्। गुणा —"आरण्यतुलसी चोष्णा कटुका च सुगन्धिका। वातलन्दोषवीसर्पविषञ्चैव विनाशयेत्॥ आरण्यतुलसी क्षुद्रा कटुी चोष्णा च तिक्तका। रुच्याग्निदीपनी हृद्या विदाही लघुपित्तला। रुच्या कण्डूविषहृदिकुष्ठज्वरविनाशिनी। वात कृमीन् कफ दद्रु रक्तदोषञ्च नाशयेत्। बीजञ्चास्या दाहशोषनाशकं परिकीर्तितम्।"वै निघ.।द्रव्य.गु.।

**अरण्यत्रपुसकः**। पु। वन्यत्रपुषे। वनकाँकुड, वनशशा। म गोडशेंदनी। वै.निघ।

**अरण्यत्रपुसी**। स्त्री। इन्द्रवारुण्याम्। राखालशशा। महाकाललतायाम्। माकालफल। वै निघ अपक्वा चि.नस्ये।

**अरण्यधान्यम्**। क्ली। नीवारे। उडिधान। म देवभात। रा नि व.१६।

**अरण्यधेनुः**। स्त्री। वनजातायां गवि।

**अरण्यपलाण्डु**। पु। वनजातपलाण्डौ। वनपेयाज। गुणा —मूत्रविरेचन. श्लेष्महरणी स्नुष एव च। मात्रातिरिक्ताद्भवति वान्तिकृन्मलभेदन। अतिमात्रं प्रयुक्तोऽसौ विषवन्मारयेन्नर शोथे श्वासे च कासे च मूत्रकृच्छ्रे प्रयुज्यते॥ अचि।

**अरण्यपिप्पली**। स्त्री। वनपिप्पलीनामक्षुपे वनपिप्पुल। रा नि.व ६।

**अरण्यमक्षिका**। स्त्री। Gad fly. वनमक्षिकायाम्। डाँशमाछि। श र.।

**अरण्यमुद्गः**। पु। वनमुद्गे। घोड़ामुग। रा नि व.१६। See मकुष्ठक। मुद्गपर्ण्याम्।

**अरण्यमुद्गा**। स्त्री। मुद्गपर्ण्याम्। मुगानी। रा नि व २।

**अरण्यमेथी**। स्त्री। वनमेथिकायाम्। वन मेथि। म राणमेथि। वै निघ।

**अरण्यरजनी**। स्त्री। वनहरिद्रायां। वनहलुद। मं राणहलद। वै.निघ.।

**अरण्यवायसः**। पु। Raven. अरण्यकाके। डोमकाक। म डोमकावला। रा नि व १९।

**अरण्यवासिनी**। स्त्री। अश्वगन्धपर्णीलतायां। अमर वेल इति लोके। रा.नि.व ३।

**अरण्यवास्तुकः**। पु। कुष्णज्वरक्षुपे। वन वेतो। म राणचाकवत। रा नि व.५। See कुष्णज्वर।

**अरण्यशालिः**। पु। Wild rice. नीवारधान्ये। उडिधान। म देवभात। रा नि व.१६

**अरण्यश्वनः**। पु। वनकुकुरे। नेकड़ेबाघ। वै निघ.।

**अरण्यसूरणः**। पु। वनजसूरणे। बुनो ओल। म गोडासूरण। रा नि व ७। [चित्रकव्याघ्रे।

**अरण्यश्वा**। पु। कपौ। वानर। हे च।

**अरण्यसम्भूतः**। पु। कर्कटके काँकरोल।

**अरण्यहलदीकन्द.** (पु) **अरण्यहरिद्रा** (स्त्री) वनहरिद्रायाम्। वनहलुद। हि वन हर्दि। गुणा —कुष्ठघ्न वातरक्तघ्न। भा पु १भ ह व.। कटु मधुरा रुच्या अग्निदीपनी तिक्ता कुष्ठवातघ्ना रक्तदोषविषश्वासकासहिक्काश्च नाशयेत्। वै निघ।

**अरतिः**। स्त्री। अनिच्छायाम्। अप्राप्य चित्तयात्यर्थमरति कथ्यते बुधै। भा। औदासीन्ये पित्तरोगे।

**अरत्नि**। पु। निष्कनिष्ठमुष्टौ। विस्तृत कनिष्ठाङ्गुलि मुष्टि। रा.नि व १८।

**अरमः**। पु। नेत्ररोगविशेषे। वै निघ। चर्मग्रन्थ पत्र। [वम.।

**अरलः**। पु। श्योणाकवृक्षे। शोणा गाछ।

**अरला**। स्त्री। त्रसपान्याम्।

**अरलु (क)**। पु। श्योणाकवृक्षे। शोना गाछ। हिं अर्लु। म टेंटु टिंडा। श्योनापाठा इति भा म १भ अतिसा चि गङ्गाधरचूर्णे। "पाठारपाठारलुधातकीकुसुमे।" च द गर्भज्वरे। वै निघ अतिसा,चि अम्बष्ठादि। वेतसवृक्षे।

**अरलुपुटपाकः** । पुं । श्योणाकत्वक्कृतपुटपाके । साधनविधिः कुटजपुटपाकवत् । "अरलुत्वक्कृतथैव पुटपाकोऽग्निदीपनः । मधुमोचरसाभ्याञ्च युक्तः सर्व्वातिसारजित् ॥" शार्ङ्ग.म.ख १अ. ।

**अरविन्दम्** । क्ली । पद्मे । प मु । रा नि व. १०। ताम्रे । रा.नि.व १३। कोकनदे । वक्रकमल। नीलोत्पले । रा.नि.व.१०। पुं। सारसपक्षिणि।अम।

**अरविन्ददलप्रभम्** । क्ली । ताम्रे । তামা। वै निघ.। [नलिन्याम् । श.र ।

**अरविन्दिनी** । स्त्री । पद्मसमूहे । र.मा ।

**अरालः** । पुं । Resin, सर्जरसे । धूना । हिं धुना । मं राल । शालवृक्षे । मत्तदन्तिनि । मे. ।

**अरिः** । स्त्री । स्वनामख्यातखदिरे। थदिरविशेष। मं भारि । कं शोगुरि । गुणाः—कषाया कटुका तिक्ता रक्तपित्तघ्नी च । रा.नि व ८ ।

**अरिपुरिमः** । पुं। विट्खदिरे । গুয়েবাবূলা। मं गंधीहिंवर । वै.निघ. ।

**अरिमः** । पुं । विट्खदिरे । গুয়েবাবূলা । रजा । भैष.मुखरी.चि. ।

**अरिमर्द्दः** । पुं। कासमर्द्दक्षुपे । কালকাশন্দা। मं कासविंदा । रा.नि.व.४ । एतत्पत्रं रुचिकरं वृष्यं विषकासरक्तघ्नं मधुरं वातकफघ्नं पाचकं कण्ठशोधनं विशेषेण कासहरं विषघ्नं धारकं लघु च । भा.पू.१भ ।

**अरिमेदः (कः)** । पुं । (Accacia farnesiana, syn mimosa.) विट्खदिरवृक्षे । বিট্খয়ের, গুয়েবাবূলা, দুর্গন্ধখদির । मं गंधीहिवर । कं करर्यवेलु । हिं गन्धाबुल । प.मु.। गुणाः—कषाय उष्णः तिक्तः भूतघ्नः शोफातिसारकासघ्न विसर्पघ्नश्च । रा.नि.व.८ । मुखदन्तरोगघ्नः कण्डूविषश्लेष्मक्रिमिकुष्ठव्रणघ्नश्च । मद.व.५। कषायः उष्णः मुखरोगदन्तरोगरक्तदोषकण्डूक्रिमिकफविषकुष्ठव्रणघ्नश्च । भा.पू.१भ.वटादिः । भैष.मुखरी.चि. । च.सू.४भ. । माषा १ तो. ।

**अरिमेदाद्यतैलम्** । क्ली । मुखरोगे हितम्। मूर्च्छिततिलतैलं ४श.क्वाथार्थं खण्डीकृतारिमेदत्वक् (বিট্খদির, কাঁটানাশেখর বা গুয়েবাবূলা) १२। श. वारि ६४ श. पादशेषः १६ श । कल्कद्रव्याणां मञ्जिष्ठादीनां प्रत्येकं २ तो. । ततो वस्त्रपूतक्वाथकल्काभ्यां तैलपाकविधिना तैलं पचेत् । च.द.मुखरो.चि. ।

**अरिष्टः** । पुं । Soapberry plant (Sapindus trifoliatus.) रीठावृक्षे । रीठाकरञ्जे । रा.नि व.९ । রিটে গাছ । मे. । गुणाः—"अरिष्टः कटुकः पाके तीक्ष्णश्चोष्णश्च लेखनः । गर्भपातकरः भेत्ता लघुः स्निग्धस्त्रिदोषहा । ग्रहपीडादाहशूलनाशनश्च प्रकीर्त्तितः । वै.निघ. । लशुने । प.मु. । रा.नि.व.२१ । भा.पू १भ. । निम्बवृक्षे । रा.नि व २३। प.मु.वा सू.१५अ.गुडूच्यादिः । "गुडूचीपद्मकारिष्ट— ।" च.द.पित्तश्लेष्मज्व.अमृताष्टके— । "गुडूचीन्द्रयवारिष्ट— ।" सु.सू.४३अ. संशोधने । काके । হারা. । कङ्कपक्षिणि । मे. । सुराविशेषे । "औषधयुक्तैर्मद्याकारैः कृतं मद्यमासवः । स एव क्वथितौषधैररिष्टः ।" वा टी.हेमाद्रिः । क्वाथसिद्धो वारिष्टः । शार्ङ्ग. । अरिष्टः क्वाथसिद्धः स्यात् । प.प्र.२ । तद्गुणाः—यथाद्रव्यगुणोऽरिष्टः सर्वो मद्यगुणाधिकः । ग्रहणीपाण्डुकुष्ठार्शःशोषशोफोदरज्वरघ्नः । गुल्मक्रिमिघ्नः कषायः कटुवातलश्च । वा. मद्यव. । इक्षुविकारसहिताभयाचित्रकदन्तीपिप्पल्यादि भूरिभेषजक्वाथादिसंस्कारवानरिष्टोऽभिधीयते । गुणः—अर्शःशोथग्रहणीश्लेष्मरोगहरत्वम् । राज. । भाजनेऽम्बु सुरया सम्यक् द्रव्याणि विविधानि च । सप्ताहान्ते परिस्राव्य रसं वस्त्रेण गालयेत् । एषोऽरिष्टोऽभिधानेन भिषग्भिः परिकीर्त्तित. ॥ अत्रि. । पक्वौषधाम्बुसिद्धं यत् मद्य तत्स्यादरिष्टकम् । अरिष्टकं त्रिदोषघ्नं गर्भस्रावकं ग्रहदोषघ्नञ्च । भा.पू मद्य व. । क्ली । पादजलेन त्रिभागदधिकृते तक्रे । ঘোল । रा नि.व.१५ । सूतिकागारे । रत्ना.। आसवे । मरणचिह्ने । त्रि । अशुभे । सर्व्वत्र मे. । मद्यसामान्ये । रा.नि.व.१४ ।

**अरिष्टकः** । पुं। फेनिलवृक्षे । त्रि.यो.दाहज्वरे. शोकाख्यः। "फेनेनारिष्टकस्य च।" निम्बवृक्षे । अत्र निम्बकोमलपल्लवः । च.द.पित्त-ज्व शिरोलेपे । रीठाकरञ्जे । मद.व.५ । सरलद्रुमे । रत्ना. । क्ली । मद्ये । भा. ।

**अरिष्टत्रयम्** । क्ली । स्वप्नारिष्टं वेधारिष्टं कोटारिष्टञ्चेति अष्टारिष्टत्रये। तत्र स्वप्नारिष्टं पञ्चविधं तद्यथा— भीजनारिष्ट छायारिष्ट दर्शनेन्द्रियाद्य-

रिष्ट श्रवणेन्द्रियारिष्ट रसनेन्द्रियारिष्टा । तत्र प्रथमे रोगं विना हीनवर्णता दुर्मनस्कता भोजनानिच्छा च भवति । द्वितीये छायापराङ्मुखता विगता सच्छिद्रता वा भवति । तृतीयादौ नासामेढ्राक्षिपायुभ्योऽकस्मात् रक्तस्राव, श्रवणादिबाधिर्य्यं जिह्वा कठिना स्तब्धा च भवति। वेधारिष्ट वेधाल्पोपसर्गज । स च शरदि रवितापेन, प्रावृषि शालाभावाच्च जायते । तस्मिंश्च जाते सज्वरता सर्वांसुखता श्वासकासौ सम्वाहतादि भवति। कीटारिष्ट वाजिनां जठरे कीटगुच्छा जायन्ते, तेन वाजिन सीदन्ति । जयदत्त २१ २५श ।

**अरिष्टफलः** । पु । कटुनिम्बवृक्षे। रा नि व ८।

**अरिष्टलक्षणम्** । क्ली। मृत्युलक्षणे। "रोगिणो मरणं यस्मादवश्यम्भावि लक्ष्यते। तल्लक्षणमरिष्टं स्यादिष्टञ्चापि तदुच्यते।" भा.।

**अरिष्टा** । स्त्री । कटुकायाम् । रा नि व ६ । च सू ४श । प सु । र मा. । वै निघ २भ । विषमज्वर पटोलादौ । नागबलायां । रा नि व ४ । मद्ये ।

**अरिष्टाङ्ग.** । पु। रीठाकरञ्जे। रीठे। वै निघ २भ उन्मा चि ।

**अरु. (स्)** । पु । आरग्वधवृक्षे। সোন্দাল গাছ। रक्तखदिरे। व्रणवृक्षे। मर्म्मणि। सन्धिस्थाने। उ. ।

**अरुक्** । त्रि । सुस्थे ।

**अरुग्ण.** । त्रि । सुस्थे।

**अरुङ्मेष.** । स्त्री । नेत्ररोगविशेषे ।

**अरुचि.** । स्त्री। स्वनामख्यातरोगे। আরুচি রোগা, অবোচক রোগ। सत्यामपि बुभुक्षायां भोजनासामर्थ्ये । भोजनानिच्छायाम् । भा म,१भ ग्रभज्व। See अरोचक ।

**अरुज.** । पु । आरग्वधवृक्षे। वड সোনাল। रा नि व.९ । क्ली । कुङ्कुमे। सिन्दूरे ।

**अरुण.** । पुं । कोकिलाक्षभेदे। कूलेखाड़ा। अतिविषायाम् । श्योणाकवृक्षे । प सु । मञ्जिष्ठायां। अर्कवृक्षे । मे । पुन्नागवृक्षे । रा नि व.१० । गुडे । रा नि व १४ । चित्रकक्षुपे । मद व ९। रक्तापामार्गे । रक्तकरवीरे । वै निघ । कुष्ठभेदे । लक्षणम्—वातनारुणाभानि तनूनि विसर्पीणि तोदभेदस्वाप युक्तानि अरुणानि। सु नि ५श. । त्रि । रक्तवर्णे।

**अरुणम्** । क्ली । अहिफेने । वै निघ। रक्तोत्पले। रक्तवर्णतायाम् । वा टी हेमाद्रि । कुङ्कुमे । रा नि व १२। सिन्दूरे । रा नि व १३ । माणिक्यभेदे । वै निघ.२भ क्षयरोग.त्रैलोक्य चिन्तामणिरसे ।

**अरुणकपिश.** । पु । द्राक्षाभेदे । किस्मिस् विशेष । म फकीरीद्राक्ष । वै निघ ।

**अरुणकमलम्** । क्ली । कोकनदे । वडकमल। रा नि व १० । [वै निघ. ।

**अरुणचूड.** । पु । ताम्रचूडपक्षिणि । कुकुडा।

**अरुणतण्डुलीयम्** । क्ली । रक्ततण्डुलीयशाके। वाड़ा नटे । च.द. ।

**अरुणनाग.** । पु । सुद्राग्रहे । अत्रि ।

**अरुणनेत्र** । पु । पारावते । पायरा । कोकिले । वै निघ ।

**अरुणपुष्पी** । स्त्री । बन्धुजीवकवृक्षे । दुपुरि फूल । म रक्तदुपारी । वै निघ. ।

**अरुणमक्षिका** । स्त्री । रक्तमक्षिकायाम् । लाल माछि । वै निघ ।

**अरुणलोचन.** । पु । पारावते । पायरा । हि खबूतर । रा नि व १९ । कोकिले । वै निघ।

**अरुणसर्पः** । पु । तक्षकसर्पे। वै निघ ।

**अरुणसारः** । पु । हिङ्गुले । वै निघ ।

**अरुणा** । स्त्री । अतिविषायाम् । मे । रा नि व ६ । भा.४भ बाल ज्व चि महाभल्ला गुडे । "घनकृष्णारुणाशृङ्गी ।" भैष प्रदरारिरसे । कृष्ण त्रि.। मञ्जिष्ठायां । मे । रा नि व ६ । भा म १भ ज्व चि लाक्षातैले।"लाक्षा दक्षाक्षा लकुचा वड्वचा।" प्रपौण्डरीके । प सु । त्रिवृतायां । मे । अशायाम् । मद व २ । अरुणात्रिविधा श्यामा मञ्जिष्ठा त्रिवृता च । श्यामालतायाम् । मे. । इन्द्रवारुणीलतायाम् । गुञ्जालतायाम् । रा नि व ३ । पुनर्णवायां । मुण्डीर्याम् । रत्ना । [मं सोंक । वै निघ. ।

**अरुणात्मिका** । स्त्री । कुमार्य्ये । लड़ाम्ब्रि।

**अरुणाभम्** । क्ली । बज्रलौहे ।

**अरुणार्क.** । पु । रक्तार्के । प सु । म मन्दार । क मन्दार वडे । रा नि.व १० । गुणा —स्त.

वातकुष्ठकण्डुविषव्रणघ्न प्लीहगुल्मार्श कफोदरमल क्रमिहरश्च। कटुतिक्तोष्ण कफघ्नो मेदघ्नो विषघ्न वातकुष्ठव्रणघ्न शोथकण्डुविसर्पहरश्च। पुष्प मधुर तिक्त धारक क्रमिकुष्ठकफार्शोविषरक्तपित्तघ्न गुल्म शोथहरञ्च। भा पू १भ।

**अरुणोपल** । पु। अरुणवर्णमणिविशेषे। चुनि इति भाषा। पद्मरागमणौ। हे च।

**अरुन्धती** । स्त्री। निद्रायां। वै निघ।

**अरुप** । पु। व्रणे घोटके। वै निघ।

**अरुषिका** । स्त्री। चुद्ररोगान्यतमकपालरोगे। शिरोव्रणे। अथ कफरक्तक्रमिकोपतो भवति। 'अरु षि बहुवक्त्राणि बहुक्लेदीनि मूर्द्धि तु। कफासृ क्कृमिकोपेन नृणां विद्यादरु षिकाम्' ॥ मा नि।

**अरुष्क** । पु। भल्लातकवृत्त। ভেলা গাছ। म विववा। भा पू १भ। रा नि व ११।

**अरुष्कर** । पु। भल्लातकवृत्ते। प सु। रा नि व.११। भा पू १भ। मद व १। अरु विकायाम्। त्रि। व्रणकृति। मे रचतुष्क।

**अरुष्करम्** । क्ली। भल्लातकफले। च द अर्श चि। भैष कुष्ठ चि पञ्चतिक्त घृते। 'सनागराऽरुष्करइदारकम्' । सि यो चतु समलौहे। च सू ४अ कुष्ठघ्न। [आमक्ष। रा नि व ५।

**अरुया (टा)** । स्त्री। भूम्यामलक्याम्। भूँई

**अरोकदन्त** । त्रि। क्षणदन्त। वै निघ।

**अरोचक** । पु। अरुचिरोगे। स पञ्चविध —वातपित्तकफसन्निपातागन्तुभेदेन। मा नि। मनस्तापज आगन्तुक इति शाङ्ग पू ७अ। लक्षण यथा—प्रक्षिप्तन्तु मुखे चान्न जन्तोर्न स्वदते मुहु। अरोचक स विज्ञेयो भक्तद्वषमथो शृणु ॥ चिन्त यित्वा तु मनसा दृष्ट्वा श्रुत्वा तु भोजनं। द्वेषमाया ति यो जन्तुर्भक्तद्वेष स उच्यते ॥ यस्यान्न न भवे च्छ्रद्धा स भक्तच्छन्द उच्यते। विजयरक्षिते भोज। एते त्रिविधा अपि रोगा चरकसुश्रुताभ्यां एक एव धृता। वातादिभि शोकभयातिलोभक्रोधैर्मनो घ्नाशनरूपगन्धैः। अरोचका स्यु परिहृष्टदन्त कषायवक्त्रश्च मतोऽनिलेन ॥ मा नि। पथ्यं यथा— वस्ति समीरणे पित्ते विरेको वमनं कफे। सर्व्वजे सर्व्वकामार्थे हर्षण स्यादरोचके ॥ भा। वर्तिर्वि रेको वमन यथाबलं धूमोपसेवाकवडग्रहस्तथा। तिक्तानि काष्ठानि च दन्तघर्षणं चित्तान्नपानानि हिते कृतानि। गोधूममुद्गारुणशालिषष्टिका मास वराहाजशशैणसम्भव। चेङ्गी भषाण्ड मधुरालिके झिश प्रोष्ठी खलिश कवयी च रोहित। काका कवेत्राग्रनवीनमूलक वार्त्ताकुशोभाञ्जनमोचदाडि म। भव्य पटोल रुचक घृत पयो बालानि ताला नि रसोनसूरणम्। द्राक्षा रसाल नलदम्बुकाञ्जिक मद्य रसालादधितक्रमार्द्रकम्। कक्कोलखर्जूरपि यालतिन्दुकं पक्व कपित्थ वदर विकङ्कतम्। तालास्थिमज्जा हिमबालुका सिता पथ्या यमानी मरिचानि रामठम्। स्वाद्वम्लतिक्तानि च देहमार्ज्जना वर्गोऽयमुक्तोऽरुचिरोगिणे हित। इति पथ्यम्। कासोद्गारक्षुधानत्रवायुवेगविधारणम्। अहृद्यान्नम सृक्स्रावं क्रोध लोभ भय श्रमम्। दुर्गन्धरूपसेवा च न कुर्यादरुचौ नर ॥ इति अपथ्यम्।

**अर्क** । पु। (Calotropis gigantea, Syn, Asclepias gigantea) स्वनामख्यातोपविष जातीयक्षुपे। আকন্দ গাছ हि मान्दार। म रुइ। क अक्के। तें जिल्लेटुचेट्टु। अर्क श्वतरक्तभेदेन द्विविध। तयोर्विशेषपर्यायाश्च सम्या। गुणा —कटु उष्ण वातजित् दीपनीय शोफघ्न व्रण घ्न कण्डुकुष्ठक्रमिघ्नश्च। रा नि व १०। सारक वातघ्न कुष्ठकण्डुव्रणप्लीहगुल्माश कफोदरमलक्रमि घ्नश्च। पुष्प—मधुरं तिक्त धारक कुष्ठक्रमिकफा र्शोविषरक्तपित्तगुल्मशोथघ्नञ्च। भा पू १भ। अर्कद्वय शङ्खवातकुष्ठकण्डूविषव्रणान्। निहन्ति प्लीहगुल्मार्शो यकृच्छ्लेष्मोदरक्रमीन्। मद व १। स्यात् २ २ राज्ञ। इति रावणकृतचिकित्साशास्त्रे। ताम्रे। मे कद्विक। मैलोक्यडम्बररसे। वै निघ वा ख्या चि चिन्तामणिरसे। स्फटिके। मे कद्विक। अर्क पार्के। प मु भा पू १भ। आदित्यपत्रक्षुपे। रा. नि व ४। "अर्कोरक्तपुष्प प्रसिद्ध।" सु सू ३७अ अर्कादिव। ३९अ शिरो चि।

**अर्ककान्ता** । स्त्री। आदित्यभक्तायाम्। হুড হুড়িয়া। रा नि व ४। मद व १।

**अर्कगन्धिका** । स्त्री। क्षीरविदार्याम्। দুধ ভূমিকুষ্মাণ্ড। प मु।

**अर्कचन्दनम्** । क्ली। रक्तचन्दने। रा नि व १२।

**अर्कच्छदनम्** । क्ली। अर्कमूले ।

**अर्कतैलम्** । क्ली। कुष्ठाधिकारे। अत्र कटुतैलं पलाष्टकं अर्कपत्ररसस्य पलाष्टक निशाया पलं मन शिलायाश्च पलम्। च द.कुष्ठ.चि । सा कौ ।

**अर्कदल.** । पु। आदित्यपत्रक्षुपे। रा नि व ४। अर्कवृक्षे । [भा ।

**अर्कनामा** । पु। रक्तार्के। लाल आकन्द।

**अर्कपत्र** । पु। आदित्यपत्रक्षुपे। रा नि व ४। च द । अर्कवृक्षे

**अर्कपत्रा (त्री) (त्रिका)** । स्त्री। ईश्वर मूलवृक्षे। ऐशेर मूल। प सु र मा ।

**अर्कपर्ण** । पु। रक्तार्कवृक्षे। लाल आकन्द। मं सूर्य्यमन्दार। भा पू १भ । [माषाणी।

**अर्कपर्णिका (र्णी)** । स्त्री। माषपर्ण्याम्।

**अर्कपाद** । पु। सूर्यकान्तमणौ। निम्बवृक्षे। वै निघ । [क्षुपे।

**अर्कपादप.** । पु। निम्ववृक्षे। त्रिका । अर्क

**अर्कपुष्पा** । स्त्री। क्षीरकाकोल्याम्। क्षीर काँकला। See क्षीरकाकोली।

**अर्कपुष्पिका** / **अर्कपुष्पी** स्त्री । (Gygandropsis penta-phylla, Syn, Cleome pentaphylla) सूर्य्यवल्ल्याम्। श्वेत हुड़हुड़िया। अर्कहुलीति भाषा। अर्कसदृशपुष्पी लता। हि अम्बाइली दधियार क्षीरहम्। मं भ्रिर दोडी। भा ४भ बालरोग चि। गुणा —अर्कपुष्पी क्रमिघ्नश्च मेहपित्तविकारहृत्। कद व १। क्रमि कफमेहमलोविकारघ्नी। भा पू १भ। रक्तापराजि तायाम् रवा । क्षीरकाकोल्यां। र मा ।

**अर्कप्रभागुड़िका** । स्त्री। रसायनाधिकारे। अस्या पाठ यथा—रस निष्कद्वय ग्रह निष्कैक सा मचूर्णक । त्रिफामूलफलक्काथे यामं खल्ले विमर्द येत्। तद्गोल बन्धयेद्वस्त्रे दोलायन्त्रेषु तत्रके। त्रि फाफलयुते पश्चाच्चतुर्यामात्समुद्धरेत्। वटिकार्कप्र भा नाम जरामृत्युविनाशिनी। सवत्सरप्रयोगेषु सू र्य्यतुल्यो भवेन्नर । पश्चाम्रबीजतैलञ्च कर्षमेक गवां पय । अनुपानमिदं पाता दमनायवली भवेत्॥ । प्रयोगा रसायना. ।

**अर्कप्रिया** । स्त्री। आदित्यभक्तायाम्। हुड हुड़िया गाछ। जवायाम्। रा नि व १०।

**अर्कभक्ता** । स्त्री। ब्राह्म्यां। ब्राह्मीशाक। आ दित्यभक्तायाम्। हुड़हुड़िया, सुर्ग्ये इति च भाषा। हि हुलहुल। म सूर्य्यफुलवल्ली। रा नि व ४। र मा ।

**अर्कभूति:** । स्त्री। ताम्रभस्मनि। वै निघ २भ. क्षीरताम्ररसे, सयहगी चि. ।

**अर्कमूर्त्तिरस:** । पु। रसोऽयं सान्निपातिक ज्वरे प्रयोज्य । द्रव्याणि चास्य रसगन्धकलौह विषाणि। अत्र लौहस्याष्टौ भागा पारदस्य भाग द्वय, गन्धको द्विगुण, विषस्य चषोडशांशो ग्राह्य। अयमेव त्रिदोषदावानल कथ्यते यदाय ताम्रपात्र स्थापित पुन निम्बुकरसपित्तवर्गकट्काथार्द्रक रसैर्भाव्यते। भैष ज्व चि ।

**अर्कमूलम्** । क्ली। तन्नामकवृक्षमूले। च द अग्निमा चि चारगुडे।

**अर्कमूला** । स्त्री।(Aristolochia Indica.) ईश्वरमूल्याम्। ऐशेर मूल। रवा ।

**अर्कलवणम्** । क्ली। अर्कक्षारे। वै निघ ।

**अर्कवल्लभ.** । पु। बन्धुजीववृक्षे। वान्धुलिवृक्ष, दुपुरे फुटी। म दुपारी। रा नि व १०।

**अर्कवल्ली** स्त्री। आदित्यभक्तायां। हुड़हुडे। वै निघ । [सु । रा नि व ६।

**अर्कवेदम् (धम्)** । क्ली। तालीशपत्रे। प

**अर्कसुता** । स्त्री। कृष्णापराजितायां। वै निघ।

**अर्कसुधा** । स्त्री। अर्कक्षीरसुधायाम्। आक न्देर चुण। गुण —गुल्मरोगस्य नाशिनी। वै निघ।

**अर्कहिता** । स्त्री। आदित्यभक्तायाम्। हुड़ हुड़िया। मं सूर्य्यफुलवल्ली। रा नि व ४।

**अर्कक्षीरम्** । क्ली। अर्कदुग्धनिर्यासे। आक न्देर आटा। गुणा —क्रमिघ्न मघघ्न कुष्ठार्शाद रेषु च हितम्। राज । तिक्तलवणमुष्णवीर्य्यं लघु स्निग्धं गुल्मोदरकुष्ठहर विरेचने हितञ्च। भा पू १भ.। च द अर्श चि ।

**अर्कादिगण.** । पु। अर्कालर्कनागदन्तीवि शल्याभार्गीरास्नावृश्चिकालीप्रकीर्य्याप्रत्यक्पुष्पीपीत

स्वगुतारसोनकल्कादिकम् । "स्वेदपानानि नस्यञ्च भोज्यान्यनिलहन्ति च । उपनाहाश्च शस्यन्ते स्वेदश्च तथार्द्दिते ॥" "तन्नामकाश्वरोगविशेषे । तच्च यं—हनुद्वयस्य विक्षेपात् घोणाभेदाच्च वृद्धिमान् । नासापुटविकाराच्च अर्द्दितं रोगमादिशेत् ॥" जयद.५१अ. ।

**अर्द्धम्** । क्ली । समांशे । पुं । खण्डे । मे. ।

**अर्द्धकः** । पुं । जलसर्पे । वै निघ. ।

**अर्द्धकपाटसन्धिकः** । पुं । बाह्यदीर्घकपालोत्तराध्यपालिकर्णबन्धाकृतिविशेषे । सु.सू.१६अ. ।

**अर्द्धकेशिकी** । स्त्री । छेदनार्थे शस्त्रधाराविशेषे । सु.सू.८अ. ।

**अर्द्धखारी** । स्त्री । खारीमानार्द्धे १२८ श. ।

**अर्द्धचन्द्रः** । पुं । मयूरपिच्छे । मयूरपुच्छेर चाँद । इ.च. ।

**अर्द्धचन्द्रम्** । क्ली । अङ्गुलित्राणे । हारा. ।

**अर्द्धचन्द्रा** । स्त्री । त्रिवृति । रा.नि.व.६। कृष्णत्रिवृति । कालतेउड़ी । भा.पू.१भ. ।

**अर्द्धचन्द्राननः** । पुं । भल्लमुखनामकविषाक्ताले । भम. ।

**अर्द्धचन्द्रिका** । स्त्री । कर्णस्फोटालतायां । रा.नि.व.३ । कृष्णत्रिवृति । मद.व.१ ।

**अर्द्धलोचकः** । पुं । कुर्पासे । काँचुली । हारा.

**अर्द्धतिक्तः** । पुं । किराततिक्ते । भा.पू.१भ.

**अर्द्धधारकम्** । क्ली । शस्त्रविशेषे । तच्च छेदनभेदनार्थम् । सु.सू.८अ. ।

**अर्द्धनारीश्वररसः** । पुं । रसोऽयं सान्निपातिकज्वरे गुञ्जामात्रं नस्यकर्मणि योज्यः । अपरे जीर्णविषमज्वरे नस्यमित्याहुः । तेन तत्क्षणमेव वामाङ्गज्वरो नश्यति । अथ द्रव्याणि रसगन्धकविषटङ्कणानि समभागानि कन्यकौषधत्वा कृष्णसर्पमुखाभ्यन्तरे स्थापयित्वा तन्मुखं सदा संनिरुध्य भाण्डे स्थापयेत् । ऊर्ध्वाधो लवणदानपूर्वकं ततो भाण्डमाण्ड गोमयै ॥ प्रहरं पचेत् । भैष.। अत्र "हिङ्गुं पारदञ्च गन्धकम्"मिति मिलितरसगन्धकयोः समम् । "जैपालं तत्सममिति" द्विगुणं जैपाल देयम् । "मरिचञ्च चतुर्गुणमिति" एकमात्रापि

च्चया मरिचस्य चातुर्गुण्यम् । श्रीकण्ठः । सोमेश्वरस्तु मिलितरसगन्धकापेक्षया चातुर्गुण्यमित्याह । व्यवहारोऽप्यनेनैव । "रसगन्धौ समौ शुद्धौ विषं पादञ्च तत्समं । जैपालं तत्समं ग्राह्यं मरिचञ्च चतुर्गुणम् । त्रिफलाद्यैः रसैर्मर्द्यं भावना पञ्चधा स्मृता ॥" र.सा.सं जीर्णं विषम ज्व चि. । अन्यः पाठः शुद्धसूतं तथा गन्धं विषं तालस्य भस्म च । समभागेन संग्राह्य वारिणा पेषयेद्दृढं । चक्राकारसमं कृत्वा सर्पतुण्डेन संन्यसेत् । तन्मुखलेपनं कृत्वा रौद्रे दद्याद्दिनत्रयं । स्थाल्यन्ते लवणं किञ्चित्तस्योपरि च गोलकं । ततो लवणकं दत्त्वा सिकताभिः प्रपूरयेत् । चतुर्भिः प्रहरैर्ज्वालामन्दमध्यखरक्रमात् । शीते तद्गोलकं नीत्वा दूरीकृत्य च लेपनं । मध्ये संगृह्य यत्नेन खल्ले कुर्याद्विमर्द्दनं । यवमात्रन्तु सम्मुखे नस्ये दद्यात्तुरेऽदरि ॥" प्रयोगा.ज्व चि. ।

**अर्द्धपलम्** । क्ली । कर्षद्वये । ४ तो.। व्याख्यार्थ्यामर्द्धपलम् । प.प.१ख. ।

**अर्द्धपाटा** । स्त्री । भूम्यामलक्याम् । वै.निघ. ।

**अर्द्धपारावतः** । पुं । वनकुक्कुटे । चित्रकण्ठपारावते । मुक्तिपायरा। तित्तिरपक्षिणि । चन्दि.।

**अर्द्धपुष्पा** । स्त्री। महाबलायाम् । पीतबेरेला। वै.निघ. । [थाओआ ।

**अर्द्धभोजनम्** । क्ली । अर्द्धाशने । आधपेटे।

**अर्द्धमात्रिकः** । पुं । निरूहाधिकारे तन्नामक वस्तौ । "दशमूलीकषायेण शताह्वां प्रपेषयेत् । सैन्धवाद्यञ्च मधुनो द्विपलं द्विपलं तथा । तैलस्य पलमेकन्तु फलस्यैकञ्च योजयेत् । अर्द्धमात्रिकसंज्ञोऽयं वस्तिर्देयो निरूहवत् । न च स्नेहो न च स्वेदः परिहारविधिर्न च । आत्रेयानुमतो ह्येष सर्वरोगनिबर्हणः ॥ इति च.द. ।

**अर्द्धमासूरी** । स्त्री । छेदनार्थशस्त्रधाराविशेषे। सु.सू.८अ. ।

**अर्द्धवीरच्छा** । स्त्री । लघुदूर्वायाम् ।

**अर्द्धश(स)फरः** । पुं । स्वल्पनामात्स्यमत्स्यविशेषे । पोड़िया वा डानकोणा माछ । हारा.।

**अर्द्धशरावः (कः)** । पुं । मानविशेषे । ३२ तो. । प.प्र.१ख । भा. । [वै निघ ।

**अर्द्धसहः** पुं । पेचके । पैंचा । मं घुबड़।

**अर्द्धांशीनजलम्** । क्ली । अर्द्धांशेन हीने पक्क जले । इदं वातपित्तघ्नम् । रा नि व १४ ।

**अर्द्धालिङ्गः** । पु । जलसर्पे । वै निघ ।

**अर्द्धावभेदकः** । पु । शिरोरोगभेदे । आद् कपाले धरा । निदानलक्षणे— 'रुचाशनाध्यश नप्राग्वातावश्यायमैथुनैः । वेगसन्धारणायासव्यायामैः कुपितोऽनिलः । केवलः सकफो वार्द्धं गृहीत्वा शिरसो बली । मन्याभ्रूशङ्खकर्णाक्षिललाटार्द्धेऽतिवे दनाम् । शस्त्रारणिनिभां कुर्य्यात्तीव्रां सोऽर्द्धावभेद कः ॥'' मा नि ।अपिच यशोत्तमाद्धार्द्धमतीव जन्तो स्सम्भिदतीदममुलजुष्ट । पचाद्‌शाहादयवाव्यक्त आसत्साद्धेभेदं चितयाद्वावसेत् ॥ सु उ २५अ ।

**अर्द्धाशनम्** । क्ली । अर्द्धभोजने । श च ।

**अर्द्धेन्दु** । पु । अतिप्रौढस्त्रीयोनौ अङ्गुलियोज ने । मे दनिक ।

**अर्द्धेन्दुमकला** । स्त्री । नासारोगविशेषे । क पालरोगभेदे । ओष्ठरोगे । अर्ब्बुदरोगे गलरोगे तालुरोगे । कर्णरोगे । वै निघ. ।

**अर्द्धोदकक्षीरम्** । क्ली । अर्द्धोदकाश्रितदुग्धे । अर्द्धजले सिद्धं दुग्धं । "अर्द्धोदकं पयः शिष्टमा माहृतर शृतम् ।'' हेमाद्रौ चारपाणि ।

**अर्भः (क.)** । पु । बालके । रा नि व १८ । कृशे । मे दनिक । पचजातशिशौ । रा नि व १८

**अर्भा** । स्त्री । गुग्गुलौ । गुग्गुल । ' अर्भाचूर्णं सहगुलम् ।'' प्रयोगा भग्न चि ।

**अर्मण.** । पु । द्रोणपरिमाणे (३२ सेर) । प प्र १ख । च द ष सा चि कुटजावलेहे ।

**अर्म्मन्** । क्ली । नेत्ररोगविशेषे । चक्षूरोग । तत्र पञ्चविधम्—प्रस्तार्य्यर्म्म, शुक्लार्म्म, रक्तार्म्म, मांसार्म्म, स्नाय्वर्म्म चेति । लक्षणं स्वस्वपर्य्याय मन्यम् ।

**अर्यमा** । पु । अर्कवृक्षे । रा नि व १० । सूर्य्ये ।

**अर्व्वण**
**अर्व्वा (न्)** } पु । अश्वे । भा पू ।

**अर्व्वती** । स्त्री । वडवायाम् । कुभदायाम् । मे दनिक ।

**अर्ब्बुदः** । पु क्ली । पुरुषे । दशकोटिपरिमाणे । मे दनिक । मांसकीलकाकाररोगविशेषे । आव् । हि रसौली । वातजपित्तजकफजरक्तजमांसजमेदो जाध्यर्ब्बुदविद्रध्युदमेदेनाष्टौ । लक्षण—गात्रप्रदेशे क्वचिदेव दोषाः सम्मूर्च्छिता मांसमसृक् प्रदूष्य । वृत्तं स्थिरं मन्दरुजं महान्तमनल्पमूलं चिरवृद्ध्यपा कम् । कुर्व्वन्ति मांसोच्छ्रयमत्यगाधं तदर्ब्बुदं शास्त्र विदो वदन्ति । वातेन पित्तेन कफेन चापि रक्तेन मांसेन च मेदसा वा । तज्जायते तस्य च लक्षणानि ग्रन्थेः समानानि तदा भवन्ति ॥ मा नि । सु नि ११अ. । "दोषः प्रदुष्टो रुधिरं शिरास्तु सम्पीड्य सङ्कोच्य गतस्तु पाकम् । सत्रावमुन्नह्यतिमांसपिण्डं मांसाङ्कुरैराचितमाशु वृद्धिम् । स्रवत्यजस्रं रुधिरं प्र दुष्टमसाध्यमेतद्रुधिरात्मकं स्यात् ।'' इति रक्तरोग भेदे । नेत्ररोगभेदे । तालुरोगे तल्लक्षण—तालु मध्ये रक्तज पित्तलक्षण पद्मकर्णिकावल्केसरैरिव पार्श्वतो दीर्घमांसाङ्कुरैर्वेष्टितं शोथं अर्ब्बुदं विद्या त् । ' पद्माकारं तालुमध्ये तु शोथं विद्याद्रक्ताद र्ब्बुदं पित्तलिङ्गम् ।'' भा म ४भ मुखरो चि ।

**अर्ब्बुदाकार** । पु । बहुवारवृक्षे । চালিতা গাছ । वै निघ ।

**अर्ब्बुदाद्रिज** । पु । मेषशृङ्ग्याम् । মেড়া শিঙা । म सुरदारुणि । वै निघ ।

**अर्ब्बूरम्** । क्ली । आहुल्यनामवृक्षे । काश्मीरे तडवड इति प्रसिद्धे । म तड़वड़ । वै निघ १भ. सयइणी चि तालीशादिचूर्णे ।

**अर्श** । क्ली । The piles or hoemorrhoids स्वनामख्यातगुदरोगविशेषे । लक्षणम्— दोषास्त्वङ्मांसमेदांसि सन्दूष्य विविधाकृतीन् ...मिता या नाडी गुदमिति कथ्यते । सा गुदनाडी शङ्खावर्त्तनिभवलित्रययुक्ता । तथा सार्द्धाङ्गुलिमि तानी गुदौष्ठ । गुदौष्ठादङ्गुलिमितोऽग्र प्रथम स्रोणाम प्रथमा वलिः, तदुपरि सार्द्धाङ्गुलिमितो ऽग्रे विसर्ज्जनीनाम द्वितीया, तदूर्द्ध्वं सार्द्धाङ्गुलिमि तोऽग्र प्रवाहणीनाम तृतीयावलिरुच्यते । तासु मांसाङ्कुरा जायन्ते । तदर्शः षड्विधं वातजादि भेदात् । प्रकरणमिदं गुदार्शःपरं बोध्यम् । तन्नि दानं यथा—"दोषास्त्वङ्मांसमेदांसि सन्दूष्य विवि धाकृतीन् । मांसाङ्कुरानपानादौ कुर्व्वन्त्यर्शांसि तान् जगुः ।'' इति । "पृथग्दोषैः समस्तैश्च शोणितात् सहजानि च । अर्शांसि षट्प्रकाराणि विद्याद्गुद

बलिनये ।" साधारणचिकित्सा — अत्र तथान्नपानौषधादिकं सेव्यं येन वायोरनुलोमः अग्निबलवृद्धिश्च जायते । "दत्त्वाथ वेतनं योऽध्येत्यादायापि च वेतनं । अध्यापयेच्च शुद्धयाज्ञपेदार्शोयुतो भवेत् ॥" इति कर्म्मविपाकः । पथ्यं —'विरेचनं लेपनमसृग्मोक्षः क्षाराग्निशस्त्राचरितश्च कर्म्म । पुरातना लोहितशालयश्च सषष्टिकायापि यवाः कुलत्थाः । गोधाखुसर्पानगजोद्भकूर्म्मश्वावित्कुलिङ्गजखरीतुकौशा. । तरक्षुचाषाश्वगृगालकाका येऽन्येऽपि मांसाः प्रसहाश्च तेऽपि ॥ पटोलपत्तूरसौनव क्रिपुनर्णवाशूरणवास्तुकानि । जीवन्तिका दन्तशठा सुरा च त्रुटिर्वराश्या नवनीततक्रं । कक्कोलधात्रीफचर्कं कपित्थमीष्टादिमूत्राद्यपयांसि चापि । भल्लातकं सर्षपजञ्च तैलं गोमूत्रसौवीरतुषोदकानि । शतावरी यत्र यदग्निकारि तदन्नपानं हितमर्शसेभ्यः ॥" इति । अपथ्यं —आनूपमामिषं मत्स्यं पिण्याकं दधिपिष्टकं । माषान् करीरं निष्पाव विल्वं तुम्बीमुपोदिकां । पक्कामं शालुकं सर्व्वं विष्टम्भीनि गुरूणि च । आतपं जलपानानि वमनं वस्तिकर्म्म च । विरुद्धानि च सर्व्वाणि मारुतं पूर्व्वदिग्भवम् । वेगरोधं स्त्रियं पृष्ठयानमुत्कटकासनं । यथास्वं दोषलञ्चान्नमर्शसः परिवर्ज्जयेत् । यत्पथ्यं यदपथ्यञ्च वक्ष्यते रक्तपित्तिनां । रक्तार्शोरोगिणां तत्तदपि विद्याद्विशेषतः ॥" इति ।

**अर्शःकुठाररसः ।** पुं । रसोऽयं अर्शसि हितः । पाठः—"शुद्धसूतं पलचैकं द्विपलं शुद्धगन्धकं । मृतताम्रञ्च लौहञ्च प्रत्येकञ्च पलं दश । त्रिकटु शाङ्गरी दन्ती चित्रकं पुष्करं तथा । प्रत्येकं द्विपलं योज्यं यवक्षारञ्च टङ्कणं । उभौ पञ्चपलौ योज्यौ सैन्धवं पलपञ्चकं । द्वात्रिंशच्च गवां मूत्रं स्नुहीक्षीरं तदर्द्धकं । सर्व्वं मृदग्निना पाच्यं यावद्गाढत्वमाप्नुयात् ॥" इति माषा माषद्वयम् । रस.र.प्रयोगा. । रसेन्द्रचिन्तामणौ रसगर्भो न दृश्यते । स्नुहीक्षीरञ्च गोमूत्रसमं दत्तम् । पुष्करस्थाने पिप्पलीमिति उक्तम् । अन्यः —"शुद्धसूतं द्विधागन्धं मृतलौहञ्च ताम्रकं । प्रत्येकं द्विपलं दन्ती पूगञ्च शूरणं तथा । टङ्कणयवक्षारसैन्धवं पलपञ्चकं । पलाष्टकं स्नुहीक्षीरं द्वात्रिंशच्च गवां जलैः । पाचयित्वा पचेदग्नौ याद्गाढत्वमाप्नुयात् ॥" र.चा.सं. । इत्यर्शोरोगरसः ।

**अर्शःसूदनः ।** पुं । शूरणे । ओल ।

**अर्शसम् ।** क्ली । अर्शोरोगे । श.र. ।

**अर्शसः ।** त्रि । अर्शोयुक्ते ।

**अर्शो ।** त्रि । अर्शोयुक्ते । श.र. ।

**अर्शोघ्नः ।** पुं । शूरणे । ओल । रा.नि.व.७ । भल्लातके । ভেলা । सर्ज्जिक्षारे । সাজিমাটি । तेजवल्ली । তেজবল । श्वेतसर्षपे । শ্বেত সরিষা । कटुशूरणे । বুনো ওল । वै.निघ. ।

**अर्शोघ्नवर्गः ।** पुं । कुटजविल्वचित्रकनागरातिविषाभयाधन्वयासकदारुहरिद्रावचाचव्यानीति । अयं द्वादशदशकः प्रभावादर्शोघ्नः । च.सू.४ ।

**अर्शोघ्नवल्कला ।** स्त्री । तेजवल्ली । তেজবল । वै.निघ. । [कं । भल्लातके । वै.निघ. ।

**अर्शोघ्नी ।** स्त्री । तालमूल्याम् । रत्ना । मी.नत्रि

**अर्शोजः ।** पुं । भगन्दररोगे ।

**अर्शोयन्त्रम् ।** क्ली । अर्शोदर्शनार्थे गोस्तनाकारयन्त्रे । "अर्शसां गोस्तनाकारं यन्त्रकं चतुरङ्गुलं । नाहे पञ्चाङ्गुलं पुंसां प्रमदानां षडङ्गुलं । द्विच्छिद्रं दर्शने व्याधेः कैचिच्छिद्रन्तु कर्म्मणि ।" अत्रि. । जयद.५२थ ।

**अर्शोवर्त्मन् ।** क्ली । नेत्रवर्त्मगतरोगविशेषे । नेत्रवर्त्मनि कर्कटीवीजवत् मन्दवेदनमश्लक्ष्णतीक्ष्णा या पिडका भवति तत् । "एर्वारुवीजप्रतिमाः पिडका मन्दवेदनाः । श्लक्ष्णाः खराश्च वर्त्मस्थास्तदर्शोवर्त्म कीर्त्यते ॥" एषा सन्निपातजा । मा.नि. । तदुक्तं—पिडका सन्निपातेन तदर्शोवर्त्म निर्दिशेत् । इति विजयरक्षिते—निमिः ।

**अर्शोहररसः ।** पुं । रसोऽयं अर्शसि हितः । पाठो यथा—"रसवैक्रान्तगन्धाभ्रकान्तभस्म सगन्धकं । गुण्डार्क मर्द्दयेदार्द्रदाडिमोत्थैः रसैस्ततः । भक्षयेन्माषमितकन्तु अर्शसां नाशने रसः ॥" रस.र. ।

**अर्शोहितः ।** पुं । भल्लातकवृक्षे । त्रिका. ।

**अर्हम् ।** क्ली । सुवर्णे । সোণা । वै.निघ. ।

**अर्हा ।** स्त्री । वायमाणलतायाम् । বনামডা । वै.निघ. ।

**अलम् (कम्) ।** क्ली । हरितालके । रा.नि.व.१३ । नि.मो.कास,चि,मन,निमादिषूमज्जाने,इन्द्र, ।

"मन शिलाले मरिच "इति। हस्तिपुच्छकाण्डके। विछेर हुल। हि च। कडीले। वै निघ.२भ वा व्या मत्स्यचीखा चि। भड्गीयुक्तकेशे।

**अलकप्रिय** । पु। कृष्णभल्लातके। काल भेला। म विवलाजटा। बीजकवृक्षे। हिं विजयसार। मद व ५।

**अलका** । स्त्री। वसायाम्। चक्रि। वै निघ.।

**अलकाह्वय.** । पु। कटुनिम्बे। कटु निम। वै निघ।

**अलक्त (क)** । पु, क्ली। Lac, the red animal dye so called. लाक्षायाम्। आलता, लाहा, जौ, गाला। हि लाही। मं अलिता। कं अलतगे। गुणा — विक्षोष कफवातामयघ्न चक्षो व्रणघ्नश्च। रा नि व ६। वर्णकर हिम वल्य स्निग्ध लघुर्ज्वर अनुष्ण कफपित्त रक्तहिक्काकासज्वरघ्न व्रणोर चलवीसर्पकृमिकुष्ठ हर। अलक्तको विशेषेण व्यङ्गघ्न।' भा पू १भ। अलक्तको रक्तीरोधी रक्तपित्तक्षयापह। प्रदर खाप्यतीसार सरक्तं चपयेद्ध्रुवम्॥' चक्रि।

**अलगण** । पु। नेत्ररोगविशेषे। वै निघ।

**अलगर्द** । पु। सर्पविशेषे। जलटोंड़ा, जल ढोडा।

**अलगर्द्दी** । स्त्री। सविषजलायुकायाम्। वियाक्त जोंक। सा रोमशा महापार्श्वा कृष्णमुखी च। See जलायुका। सु सू १३च।

**अलगर्ध** । पु। अलगर्द्दे। चम।

**अलङ्कारसुवर्णम्** । क्ली। मद्गीकनके। हारा।

**अलजी** । स्त्री। प्रमेहपिटिकारोगे। लक्षणम्— 'रक्ता सिता स्फोटवती दारुणा त्वलजी भवेत्। सु नि प्रमेहपि ६च। नेत्रसन्धिजरोगे। स च नेत्र सन्धौ प्रमेहाधिकारोक्तालजीलक्षण शोथ। लक्षणम्—' जाता सन्धौ कृष्णशुक्लऽलजी स्यात् तस्मिन्न व्यापिता पूयस्राविः।" मा नि। शूकदोष विशेषे। एषापि प्रमेहपिटकाया लक्षणयुक्ता। "अलजीलक्षणयुक्तामलजीञ्च वितर्कयेत्॥" सु नि शू दो चि १४च। [पारद।

**अलम्बमुष्कक.** । पुं। मुष्ककवृक्षे। घण्टा

**अलम्बा** । स्त्री। तिक्तालाम्बाम्। তিতলাউ।

स्थावरविषान्तर्गतपत्रविषे। सु कल्प २च। See पत्रविषम्।

**अलम्बुजा** । स्त्री। गोरक्षमुण्ड्यां। वै निघ।

**अलम्बुदम्** । क्ली। बालके। बाला। वै निघ चय चि त्रिवृटी.।

**अलम्बुष** । पु। वान्तिरोगे। मै पचतुक। भूकदम्ब। कुकशिमे गाछ। र मा च्चा।

**अलम्बुषा (सा)** । स्त्री। A sort of sensitive plant लज्जालुकाभेदे। फुल सोना। गुणा —मधुरा लघु क्रमिकफपित्तघ्नी च। भा पू १भ गु व। अलम्बुषाया स्वरस पीतो हिपलमात्रया। अपचीगण्डमालानां कामलायाश्च नाशन। मूकदम्बे। कुकशिमे। महाश्रावण्याम्। वड थुलकुडि। रा नि व ५। वै निघ २भ वा व्या पड शीति गुग्गुली, चूर्णपणावलीहे च। लीहमये। मधुर। च द १भ आमवाते अलम्बुषाचूर्णं।

**अलम्बुषाद्यचूर्णम्** । क्ली। आमवाते। पाठ —"अलम्बुषां गोक्षुरक गुडूचीं वृद्धदारकम्। पिप्पलीं त्रिवृतां मुस्त वरुणं सपुनर्नवम्। त्रिफलां नागरञ्चैव सूक्ष्मचूर्णानि कारयेत्।" मस्तुरा दिचूर्णं प्रत्येकं समभागमादाय एकत्र सम्मिश्रणीय। अनुपान—दधिमस्तु काञ्जिक दुग्धं तक्र मांस रस वा यथालाभं दद्यात्। च द आमवा चि। द्वितीयं यथा—अलम्बुषा गोक्षुरक त्रिफलानागरामृता। यथोत्तर भागवृद्धा श्यामाचूर्णञ्च तत्समम्। इति। अलम्बुषा लौहमल। मतान्तरे मुण्डी री। श्यामाचूर्णं वृद्धदारकमूलचूर्णम्। च द आ। तृतीयमपि आमवाते। ' अलम्बुषा गोक्षुरकं मूल वरुणकस्य च। गुडूची नागरञ्चेति समभागानि कारयेत्।" आ। रस र।

**अलम्बोद्दिस्तनी** । त्रि। यस्या स्तनौ न लम्बौ नीहमुखी च। सु शा १०च।

**अलम्बौष्ठी** । त्रि। यस्या ओष्ठौ लम्बमानौ न भवति। सु शा १०च।

**अलमोस.** । पु। मत्स्यभेदे। वै निघ।

**अलर्क** । पु। (Calotropis gigantea or Procera, अर्क of white flowers.) श्वेतार्के। श्वेत आकन्द। हि मादार। भा पू १भ।

मे.कचिर्क। मन्दार इति हेमा.चलर्कादिव.। मन्दारार्के। रा.नि.व.१०। चलर्कोमन्दारार्कः यस्य चौरं न विनश्यति। सु.सू.३८ष.चर्कादि.ड.। मन्दाराख्यः श्वेतपुष्पः। वा.सू.१५ष चर्कादिव चरणः। "चर्कालर्को नागदन्ती विशल्या।" योगीन्मादितकुक्कुरे। मे कचिर्क। कुकुरज्वरे। हा.चचि. २स्था.२ष.।

**अलवणा**। स्त्री। ज्योतिष्मत्यां। लताफट्की। वर्त्तुलपकरक्तफला पीततैला काकमर्द्दनिका। सु.सू.३८षर्कादिव.ड.। गुणाः—तीव्रा चालवणा सा स्यात् कफमेदः क्रमिप्रणुत्। चचि.। हरीतकाम्। मद.व.१।

**अलसः (कः)**। पुं। पादरोगविशेषे। पाँकुई तल्लक्षणं—"क्लिन्नाङ्गुल्यन्तरौ पादौ कण्डूदाहरुगन्वितौ। दुष्टकर्दमसंस्पर्शादलसं तं विनिर्दिशेत्॥" सु.नि.१३ष.। विसूचिकाया अवस्थाभेदे। स विधा—विपाजीर्णे रसादिके दोषैः स्यादलसस्थिधा। शार्ङ्ग। प्रयाति नोर्द्ध नाधस्तात् आहारो न विपच्यते। आमाशयेऽलसीभूत तेनासौ अलसो मतः॥ इति निरुक्ति। वा.सू.८। तल्लक्षणं यथा —"कुक्षिरानह्यतेऽत्यर्थं प्रताम्येत् परिकूजति। निरुद्धो मारुतश्चैव कुक्षावुपरि धावति॥" See चग्निमा.। क्ली। क्षुद्रकुष्ठरोगभेदे। तल्लक्षणम्—"कण्डूमद्भिः सरागैश्च गण्डैरलसकं चितम्।" मा.नि.। व्यालशातिज्वरे। मत वै.। जिह्वारोगे। वै.निघ.। वृक्षभेदे।

**अलसा**। स्त्री। हंसपदीलतायाम्। গোআলে লতা। मे.सचिर्क। [वै.निघ.।

**अलसी**। स्त्री। अतसाम्। তিসি, মসিনা।

**अलसेलुका**। स्त्री। रक्तलमालुकायाम्। হ্রন সোনা। वै.निघ.।

**अलातम्**। क्ली। अङ्गारे। অঙ্গরা। रत्ना.।

**अलाबु**। क्ली। (बु,बू) स्त्री। (Cagenaria vulgaris, Syn,Cucurbita lagenaria.) स्वनामख्यातफलयावल्लतायाम्। লাউ গাছ। हिं लौका, मिठितुम्बी, कदलौका, मद्दलौका। सं दुग्धाभीपुष्पा। सा द्विधा दीर्घा वर्त्तुला च। सगुणाः—मिष्टं हृद्यं पित्तश्लेष्मघ्नं हृद्यं रुचिकरं धातुपुष्टिविवर्द्धनम्। भा.पू.१भ.। मिष्टतुम्बीफलं हृद्यं पित्तश्लेष्मापहं गुरु। वृष्यं रुचिकरं शीतलमिति च। द्रव्यगु। कटुतुम्ब्यां। তিক্তলাউ। श.र.।

**अलाबुकः**। पुं। अश्वस्य मुखरोगे। अत्र मुखदौर्गन्ध्य तालुशोफः ग्रासग्रहणे विद्वेषश्च भवति। ज.द.।

**अलाबुका**। स्त्री। कटुदुग्धालाबुनि। भा।

**अलाबुनी**। स्त्री। कटुदुग्धालाबुनि। তেতলাউ। কটুতুম্ব্যাম্। তিক্তলাউ। मिष्टतुम्बीलतायाम्। মিঠালাউ গাছ। हिं मीठितुम्बी। मद.व.७।

**अलाबुविधिः**। पुं। अलाब्वा रक्तमोक्षणे। "अलाबु कटुकं रुक्षं तीक्ष्णञ्च परिकीर्त्तितम्। तस्मात् श्लेष्मोपसृष्टे तु हितं तदवसेचने।" सु.सू. १३ष.।

**अलाबुसुहृत्**। पुं। अम्लवेतसे। वै.निघ.।

**अलाबूयन्त्रम्**। क्ली। यन्त्रविशेषे। लक्षणं—"शाद्यादशाङ्गुलाऽलाबुर्वापि लष्टादशाङ्गुला। चतुरङ्गुलबलास्या दीप्ताऽन्तःश्लेष्मरक्तहृत्॥" कश्चित् चवि।

**अलासः**। पुं। जिह्वास्फोटे। जिह्वागतमुखरोगे। अत्र दुष्टकफशोणितेन जिह्वातले दारुणः शोथो भवति। वृद्धि गते जिह्वास्तम्भो जिह्वामूले पाकश्च भवति। लक्षणं - जिह्वातले यः श्वयथुः प्रगाढः सोऽलाससंज्ञः कफरक्तमूर्त्तिः। जिह्वां स तु स्तम्भयति प्रवृद्धो मूले तु जिह्वा भृशमेति पाकम्॥ सु.नि.१६ष.।

**अलिः**। पुं। भ्रमरे। रत्ना.। मद्ये। मे.लद्विकं। वृश्चिके। हारा.। काके। कोकिले। श.र.।

**अलिकः**। पुं, क्ली। कपोले। रा.नि.व.१८। ललाटे। रत्ना.। [सैन्धवमासे। पिष्टके।

**अलिकमत्स्यः**। पुं। अङ्गारे। अग्नितिर्थे।

**अलिकुलप्रिया**। स्त्री। वासन्तीवल्ल्यां। কাঠ গোলাপ। वै.निघ.।

**अलिकुलसङ्कुला**। स्त्री। कष्टकगिवल्ल्यां। দাঁতামেডেউলী। কুব্জবাচ্যে। কোন্দনখেঁর পুন্দহু। रा.नि.व.१०। भा.पू.१भ.।

**अलिगर्दः**। पुं। जलसर्पे। জলার, ঢেঁড়া, গেঁড়িয়াদা इति च लोके। श.र.।

**अलिजिह्वा (ह्विका)** । स्त्री । क्षुद्रजिह्वि-कायाम् । आल्जिभ इति लोके । श.र ।

**अलिञ्जरम्** । क्ली । फलविशेषे । फुटीविशेष । चिरफोटीति महाराष्ट्रे । गुणाः—"अलिञ्जरं तु रुच्यं स्यात् शीतलं भेदकं मतं । तुवरं मधुरं चारं तिक्तं पाके कटु स्मृतं । स्वादिष्टं वातकृच्छ्रमकासश्लेष्मवि-नाशनम् ॥" वै.निघ. ।

**अलिता** । स्त्री । अलक्तके । आलता । गुणाः —"अलितीया तिक्तका स्यात्कफवातव्रणापहा । व्यङ्गारचीकष्टजं व्रणदोषञ्च नाशयेत् । अन्ये गुणाश्च लाक्षावत्प्रोक्ताः पूर्वमहर्षिभिः ।" वै निघ. ।

**अलिदूर्व्वा** । स्त्री । मालादूर्व्वायां । रा.नि व.८ ।

**अलिपकः** । पुं । भ्रमरे । कोकिले । कुक्कुरे । सर्व्वत्र मे.कचतुष्क । [रा.नि.व.५ ।

**अलिपत्रिका** । स्त्री । वृश्चिकाल्या । बिछाती ।

**अलिपर्णिका (र्णी)** । स्त्री । वृश्चिकाल्यां । विछाति, विछुटी । रा नि.व ८ ।

**अलिप्रियम्** । क्ली । रक्तोत्पले । त्रिका. । पुं । धाराकदम्बवृक्षे । आम्रवृक्षे । श र. । कदम्बवृक्षे । भा.पू.१भ. ।

**अलिप्रिया** । स्त्री । पाटलावृक्षे । पारल गाछ । प.मु. । भूजम्बूवृक्षे । वै.निघ. ।

**अलिमकः** । पुं । भेके । कोकिले । भ्रमरे । पद्मकेशरे । मधूकवृक्षे । मे कचतुष्क ।

**अलिमोदा** । स्त्री । गणिकारिकायां । गणि-ति । रा.नि व.९ ।

**अलिमोहिनी** । स्त्री । केविकापुष्पवृक्षे । रा. नि.व १० । केविका पद्म ।

**अलिम्पकः (म्बकः)** । पुं । कोकिले । मधु-मक्षिकायाम् । कुक्कुरे । पद्मकेशरे । वै.निघ ।

**अलिवल्लभा** । स्त्री । रक्तपाटलायां । भा पू.१भ. ।

**अलिवाहिनी** । स्त्री । कोकणदेशप्रसिद्धे के रिकावृक्षे । केवैर इति भाषा । रा.नि व १० ।

**अलिसमाकुलः** । पु । पुष्पवृक्षविशेषे । दव-णसेवन्तीति महाराष्ट्रादौ । वै निघ. ।

**अली (लिन्)** । पुं । वृश्चिके । भ्रमरे । मे. ।

**अलीकम्** । क्ली । ललाटे । वै च. ।

**अलीकमत्स्यः** । पुं । पत्रार्णविन्नतिलतैलभृष्ट-माषपिष्टके । यथा—"माषपिष्टिकया लिप्तं नाग-वल्लीदलैर्मृदुत् । तत्तु सस्वेदयेद्युक्त्या स्थाल्यामङ्गा-रकोपरि । ततो निष्काशितं खण्डं तिलतैलेन भर्ज-येत् । अलीकमत्स्य उक्तोऽयं मकारः पाकपण्डितै । तं हरिद्राकभर्टिचेण वासुकेन च भक्षयेत् ।भा.पू.२भ. ।

**अलीनकम्** । क्ली । वङ्गे । वै.च. । [निघ ।

**अलीटः** । पुं । तिलकवृक्षे । तिल गाछ । वै.

**अलुः** । पुं, स्त्री । गलन्तिकायाम् । भाली । तु लसीवृक्षे । क्ली । मूले । मे.कद्विक ।

**अलुकम्** । क्ली । आलुकसाधारणे । आलू । गुणा —"आलुकं शीतलं प्रायं मलखभनं मधुरं जड़ रूक्ष वृष्य दुर्जरं बलवर्द्धनं स्तन्यवर्द्धनं मलमूत्र कफवातवृद्धिकरं रक्तपित्तप्रदं ।" वै.निघ. । एतच्च राजालुरक्तराजालुश्वेतकृष्णवन्यकाष्ठालुभेदेन बहु-विधम् । विशेष पर्य्याये द्रष्ट. । आलुवोखार इति प्रसिद्धे काबिलदेशीयफले । आमिषे ।

**अलोमशः** पुं । मत्स्यविशेषे । तल्लक्षणं—वि-तस्तिपरिमितः श्वेताङ्गः सूक्ष्मशल्कश्च । तन्मांसं ब-लकरं वीर्य्यकरं पुष्टिकरञ्च । रा.नि व.१७ ।

**अलोमशा** । स्त्री । वृक्षविशेषे । म कांगभाड़ । वै.निघ ।

**अलोहितम्** । क्ली । रक्तपद्मे । ईषद्रक्तपद्मे ।

**अल्कः** । पुं । वृक्षविशेषे । शरीरावयवे । वै.निघ. ।

**अल्पकः** । पुं । यासक्षुपे, दुरालभायाम् । रा. नि.व.४ । भूमिजम्बूवृक्षे । वै.निघ. ।

**अल्पकेशिका** } स्त्री । भूतकेश्यां । छामरकषा । प.मु. । र.मा.रत्ना. ।
**अल्पकेशी**

**अल्पगन्धम्** । क्ली । रक्तकैरवे । रक्तकमले । वै.निघ. । [व.१० ।

**अल्पगोधूमः** । पुं । ह्रस्वगोधूमे । प.मु । मद.

**अल्पघण्टिका** । क्ली । क्षुद्रशणपुष्प्याम् । शपु शणगाछ । मं लघुताग ।

**अल्पतनुः** । त्रि । खर्व्वे । अम. ।

**अल्पनायिकाचूर्णम्** । क्ली । औषधविशे

षड्गणां हितम्। पाठः—"विशाखं पञ्चलवणं म-खिकं चूर्णं पिबु। गन्धकान्मापकानष्टौ चतुरो मापकान् रसात्। द्वन्द्वामनाल्पलं शाणचितयाधि-कमिष्यते। खादेन्मिश्रीकृतात्काथमनुपेयच का-ञ्जिकं॥" र.चि.। [वै.निघ।

**अल्पनिद्रता।** स्त्री। पित्तजन्यनिद्राल्पतारोगे।

**अल्पपत्रः।** पुं। चुद्रपत्रतुलसीचुपे। र.मा.। क्ली। रक्तपद्मे। र.मा.।

**अल्पपत्रकः।** पुं। गिरिजमधूकवृक्षे। পাহাড়ে মৌল গাছ। रत्ना.। [नि.व ४।

**अल्पपत्रिका।** स्त्री। रक्तापामार्गचुपे। रा.

**अल्पपर्णी।** स्त्री। निश्रेणायाम्। मुषल्याम्। तालमूली। वै.निघ.। [निघ द्रव्यग.।

**अल्पपद्मम्।** क्ली। रक्तपद्मे, रक्तोत्पले। वै.

**अल्पपर्णिका**, **अल्पपर्णी** स्त्री। मुद्गपर्ण्याम्। मुगानी। वै निघ।

**अल्पपुष्पिका।** स्त्री। पीतकरवीरे। পীত-পুষ্প করবী। वै.निघ.।

**अल्पप्रमाणकः।** पुं। खतापनसे। र.मा.। चेलानके। চেলা তবমুজ, थरमुज इति भाषा। वै.निघ.।

**अल्पमस्तकः।** पुं। चिचकचुपे। वै.निघ.।

**अल्पमक्षिका।** स्त्री। मक्षिकाविशेषे। ছোট মাছী। वै.निघ.।

**अल्पमारिषः।** पुं। चुद्रमारिषे। কাঁটানটি-য়া, বা চাঁপানটিয়া। हि अन्पमरषा। मं थोर-तांदुलजा। ष्म। तत्गाकगुणाः—लघुशीतवीर्यं रुच्यं पित्तघ्नं कफनाशनं। मलमूत्रनि सारकं रुच्यं दीपनं विषघ्न। भा.पू.१भ.। See तण्डुलीयं।

**अल्परसा।** स्त्री। हैमवत्याम्। रा नि.व.२३।

**अल्पवर्त्तकः।** पुं। तित्तिरपक्षिणि। मद. व.१२। [वै.निघ.।

**अल्पशुक्रता।** स्त्री। पित्तजन्यशुक्राल्पतारोगे।

**अल्पशोफः।** पुं। सर्वाङ्गिरोगे। वै.निघ.।

**अल्पक्षुपा।** स्त्री। क्षुद्रसम्भालुकायां। वै.निघ.।

**अल्पास्थि।** क्ली। पचपकफले। फलसा। रा. नि.व.११। भा.पू.१म.।

**अल्पिका।** स्त्री। वनमक्षिकाजाती। हे.च.४। मुद्गपर्ण्याम्। भा पू.१भ।

**अल्लकः।** पुं। कक्कोलविशेषे। ककुभन। धा-न्यके। धने। वै.निघ.।

**अल्लका।** स्त्री। धान्यके। धने। वै.निघ।

**अल्ला।** स्त्री। मातरि। धान्यके। धने।

**अल्लु।** क्ली। आलुके। आलूबोखारा इति लौ-के। मद.व.६।

**अवकुन्थनम्।** क्ली। आर्त्तनादे।

**अवकुशः।** पुं।गोलाङ्गूलवानरे। अयं पर्णमृग-जातीयः। सु.सू ४६अ.।

**अवकूलनम्।** क्ली। भयावृत्तीकरणे। च.द. अतिसा चि.। "अङ्गारैरवकूलयेत्।"

**अवकेशी।** त्रि। अफलवृक्षे। हे.च.।

**अवक्रः।** पुं। सरलवृक्षे। সরল গাছ।

**अवगण्डः।** पुं। गण्डदेशस्थव्रणे। বয়েস ফোঁ-ড়া। मं पुटकुली। त्रिका.।

**अवगथः।** पुं। प्रातःस्नाने।

**अवगाहः।** पुं। स्नाने। स्नानगर्त्ते। [स्नाने।

**अवगाहनम्।** क्ली। स्नाने। मज्जनपूर्व्वक-

**अवगाहस्वेदः।** पुं। अवगाहनेन स्वेदे। वा. सू.१७अ.।

**अवगीर्णः।** पुं। अपानान्निर्गते द्रव्ये।

**अवगुण्ठनम्।** क्ली। योषित्शिरःप्रावरणे, स्त्रीमुखाच्छादने। [का.

**अवगुण्ठितम्।** क्ली। चूर्णिते। গুঁড়া। त्रि-

**अवग्रहः।** पुं। गजललाटदेशे। हारा.। [के।

**अवग्राहः।** पुं। अवग्रहारके। হাপর इति लौ-

**अवचूर्णम्।** क्ली। स्थूलचूर्णे। মোটা গুঁড়া।

**अवचूर्णितः।** त्रि। चूर्णिते।

**अवच्छकः।** पुं। भक्तिमति रोगिणि। वै.निघ।

**अवटः (टी)।** पुं। नाडीव्रणे। कूपे। मे.।

**अवटीटः।** त्रि। नतनासिके। थान्दा। अम.।

**अवटुः।** स्त्री। ग्रीवापश्चाद्भागे। रत्ना.। रा.नि. व.१८। पुं। वृक्षविशेषे।

**अवड़ः** । पुं । मन्यापृष्ठभागे । वै निघ. ।

**अवतापः** । पु । मलाविज्वरे । गजवै ।

**अवतारणम्** । क्ली । भूतादिग्रहे । वस्त्राञ्चली । मी षपधर्क । [पतितगर्भायां गवि । इला ।

**अवतोका (दा)** । स्त्री । स्रवद्गर्भायां गवि,

**अवदन्तः** । पु बालके । दांना । वै निघ. ।

**अवदंशः** । पु । सुरापानरुचिजनकभक्ष्यद्रव्ये । চাট । इला । शिग्रुवृक्षे । क्षमशियौ । সজিনা । वै.निघ. ।

**अवदानम्** । क्ली । उशीरे । अ टी. ।

**अवदान्तः** । पु । शिग्रुवृक्षे । वै निघ. ।

**अवदाह (कम्)** । क्ली । लामज्जकतृणे । বেণার ন্যায় শাদা তৃণ । भा पू १व । वीरणमूले । गन्धवेणा । म पिवल्लावाला । वै निघ ।

**अवदाहेष्टम्** । क्ली । वीरणमूले । गन्धवेणा । अ टी. । [टी भ ।

**अवदाहेष्टकापथम्** । क्ली । उशीरे । अ.

**अवदोहः** । पु । दुग्धे । त्रिका । [मे ।

**अवध्वसः** । पु । अवचूर्णने । গুঁড়া করণ ।

**अवध्वस्तः** । त्रि । अवचूर्णिते । मे तचतुष्क ।

**अवना (नी)** । स्त्री । त्रायमाणायां । গোওয়ালিয়া, বলা লতা । रा.नि व ५ ।

**अवनाटः** । त्रि । नतनासिके । थान्दा । अम ।

**अवनीसारा** । स्त्री । कदल्याम् । वै निघ ।

**अवन्ति(न्ती)सोमम्** । क्ली । काञ्जिके । प सु । हारा । रा नि व १५ ।

**अवपाटिका** । स्त्री । क्षुद्ररोगान्तर्गतगुह्यरोगे । अन्पीय खां यदा हर्षाद्बलाद्गच्छेत् स्त्रियं नर । हस्ताभिघातादथवा चर्मण्युद्वर्तिते बलात् । यस्या वपाट्यते चर्म तां विद्यादवपाटिकाम् । मा नि. ।

**अवपीड़ः** । पुं । पञ्चविधनस्यकर्मान्यतमे शिरोनस्ये । स च शोधनस्तम्भनभेदेन द्विविध । अवपीड्यते यस्मात् स अवपीड इति । "अपीड्य दीयते यस्मात् अवपीडस्तत स्मृत । कल्कीकृतादौषधाद्य पीड़ितो निसृतोरस । सोऽवपीड समुद्दिष्ट तीक्ष्णद्रव्यसमुद्भव । स गलरोगादौ प्रस्त ।" प.प्र.४ख. । "गलरोगे सन्निपाते निद्रायां विषमज्वरे । मनोविकारे क्रमिषु युज्यते चावपीडनम् ॥" वै निघ. नस्यवि. ।

**अवबाहुकः** । पुं । See अपबाहुक ।

**अवभासिका (नी)** । स्त्री । वर्णच्छायाप्रकाशिकायां त्वचि । सा च ब्रीहेरष्टादशभागप्रमाणा । শরীরের বাহিরের চর্ম্ম । सु शा ४अ. ।

**अवभ्रटः** । त्रि । नतनासिके । থাঁদা इति लोके । अम. ।

**अवमन्थः (क)** । पु । शूकरोगभेदे । लक्षणम्—'दीर्घा बह्व्यस्तु पिडका दीर्यन्ते मध्यतस्तु या । सोऽवमन्थ कफासृग्भ्यां वेदना रोमहर्षकृत् ॥ सु नि १४अ । कर्णपालीरोगभेदे । सु सू. १६अ ।

**अवमर्द्दः (नम्)** । पु, क्ली । पीडने । अम ।

**अवमोटनम्** । क्ली । आमोटने । মোচড়ান । मा नि वा.व्या ।

**अवयवः** । पु । शरीरावयवे । रा नि व १८ ।

**अवयवस्थानम्** । क्ली । शरीरे । वै निघ. ।

**अवयवी** । पु । पक्षिणि । वै निघ ।

**अवरम्** । क्ली । गजपश्चाज्जङ्घादौ । अम ।

**अवरदारुकम्** । क्ली । तन्नामकस्थावरविषान्तर्गतपत्रविषे । सु कल्प.२अ । See पत्रविषम् ।

**अवरिका** । स्त्री । धन्याके । धनে । रा नि व ६।

**अवरोहकः** । पु । अश्वगन्धायां । मद.व १ ।

**अवरोहशाखी** । पु । प्लक्षवृक्षे । পাকুড় গাছ । रा.नि व ११ ।

**अवरोहिका** । स्त्री । अश्वगन्धायां । रा नि ।

**अवरोही (इन्)** । पु । वटवृक्षे । বটগাছ । रा नि व ११ ।

**अवलग्नः** । पु । मध्यप्रदेशे । মাজা ।

**अवलम्बनः (कः)** । पु । श्लेष्मविशेषे । तस्य स्थानं हृदय, तत्कर्म्म च स्वशक्त्या हृदयालम्बनं त्रिकसन्धारणञ्च । भा ।

**अवला** । स्त्री । नारी । रत्ना. । प्रियङ्गौ । मदीना, नलगन्धे । "मधुलोभावलासर्ग ।"

**अवलुञ्चनम्** । क्ली । मुण्डने । शैथिल्ये । सु.सू. २५अ. । [चतुर्थ ।

**अवलेपः** । पुं । गर्व्वे । लेपने । भूषणे । मे.प

**अवलेपनम्** । क्ली । लेपने । मक्षणे । লেপা, মাখান ।

**अवलेहः** } पुं, स्त्री । लेह्यौषधे । চাটিবার
**अवलेहिका** } ঔষধ । जिह्वया आस्वादने । याव स्वादवलेहिका । च द ज्वर चि. । क्वाथादेः पुन: पाकात् घनत्वमवलेहः । "क्वाथादेर्य पुन पाकाद्घनत्व सा रसक्रिया ।" प.म.१अ.। मात्रा च तस्य पलमिता । "सोऽवलेहश्च लेहः स्यात्तन्मात्रा स्यात्पलोन्मिता । सिता चतुर्गुणा कार्य्या चूर्णाच्च द्विगुणो गुडः । द्रव चतुर्गुणं दद्यात् । सुपक्के तन्तुमत्त्व स्यादवलेहोऽप्सु मज्जति । दुग्धमिक्षुरस यूषं पञ्चमूलकषायजं । वासाक्वाथं यथायोग्यमनुपानं प्रशस्यते ।" भा.। अयसूर्द्धवक्त्रगदहरः सायच प्रयो ज्यः। ऊर्द्ध्वजत्रुगदघ्नी या सा सायमवलेहिका। च।

**अवलेहनम्** । क्ली । लेहने । চাটা ।

**अवल्कः** । पुं । मेषशृङ्ग्याम् । মেড়াশিঙে, গাড়লশিঙে । वै.निघ ।

**अवलाजा** । स्त्री । कृष्णसोमराज्याम् । হাকুচ। भैष.भल्ला.गुडे ।

**अवलुजः (जा)** । पुं,स्त्री । कृष्णसोमराज्यां । सु.चि.२५अ. । सोमराज्याम् । হাকুচ । भा पू.२ भ.भैष.कुष्ठ चि. ।

**अवलुजवीजम्** । क्ली । सोमराजीवीजे ।

**अवशकुथिका** । स्त्री । वालुदेशे ।

**अवश्यः** } पुं, स्त्री । तुषारे । भा.म.४भ.शिरो
**अवश्या** } रोग मर्द्धावभेदके । प्राग्वातावश्यमै थुनै. । भल्ला गुडे. ।

**अवश्यायः** । पुं । शिशिरे । च द.पि.ज्व.मद्यो-कादि. । "अवश्यायस्थितं पाकम् ।" तुषारे । भा. म.४भ.नासारो । "अवश्यायकेमैथुनवाष्पसेकैः ।"

**अवश्याया** । स्त्री । कुज्झटिकायाम् ।

**अवष्टम्भः** । पुं । स्वर्णे । मे. ।

**अवष्वाणम्** । क्ली । भक्षणे । है च. ।

**अवसादः** । पुं । अवसन्नतायाम् ।

**अवसादनम्** । क्ली । उन्नतव्रणस्य निम्नीकरणे । सु.चि.१अ. ।

**अवसादनी** । स्त्री । महाकरञ्जे ।

**अवसितम्** । क्ली । मर्दितधान्ये ।

**अवसेकः** । पुं । रक्तमोक्षणे । च.चि ३अ. ।

**अवसेकिमः** । पुं । वटके । বড়া । वै.निघ. ।

**अवसेचनम्** । क्ली । जलसेचने । सु. ।

**अवस्कन्दः** । पुं । अवगाहनस्नाने ।

**अवस्कयनी** । स्त्री । वहुदिनानन्तरप्रसूतायां गवि । কেলেন গাই । [चतुष्क ।

**अवस्कारः** । पु । विष्ठायाम् । गुह्यदेशे । मे.रु-

**अवहस्तः** । पु. । हस्तपृष्ठे । হস্তোপবিভাগে হে च. । [হাতের, করতলী । मे.रचतुष्क ।

**अवहारः (कः)** । पु । ग्राहाख्यजलजन्तौ ।

**अवच्छिन्नसन्धिः** । पुं । सन्धिविशेषे । सन्धि-च्युत सन् नीचसुखेनावस्थानम् । सन्ध्युत्थारतिका न्तावेदना च । सु.नि.१५अ. । [हे.च. ।

**अवच्छेपर्णी** । स्त्री । वल्गायाम् । লাগাম ।

**अवाक्पुष्पी** । स्त्री । हैमपुष्प्यां । र.मा । मः धुरिकायाम् । মৌরী । रत्ना. । रा नि-व.४ । श तपुष्पायाम् । শুলফা । मं वडौरीके । रा.नि.व. ४ । च.द.अर्श चि सुनिषण्.चाङ्गेरीघृते । चोरपु-ष्प्याम् । চোরহুলী,চোরখড়্কী । रत्ना. ।

**अवाचीनः** । त्रि । विपर्य्यस्ते । मे.नचतुर्थ ।

**अवाच्यदेशः** । पुं । योनौ । त्रिका ।

**अवानम्** । क्ली । शुष्कफलादौ । श र. ।

**अविः** । पु । मेषे । भा.पू. । मूषिके । कम्बले । मे । मध्यमेदे । स्त्री । कुलत्थिकायां । বনকুলথ । अविः कुलाली चक्षुष्या कुम्भकारी कुलत्थिका । र.मा. । मेषाम् । त्रिका. । ऋतुमत्यां । शम. ।

**अविकम्** । क्ली । हीरके । रा नि ।

**अविकमांसम्** । क्ली । मेषमांसे । वै निघ. ।

**अविगन्धनी** } स्त्री । अजगन्धायाम् । वन-
**अविगन्धिका** } যমানি । तिलोलोयर्ध्वगेलि
**अविगन्धी** } च भीके रा.नि.व.५ ।

**अविघ्नः (घ्न.)** । पुं । पानीयामलके । सा.सु.। करमर्द्दवृक्षे । करमचा गाछ । मं करवंद । अम.।

**अवितक्रम्** । क्ली । मेषीतक्रे । ভেড়ার দুধের ঘোল । गुणा.—"अवितक्रमपथ्यं स्यादम्लं दुर्गन्धकारकं । दीपनं कटुकक्षीणं लेखनं लघु पित्तलम् । रक्तदोषकरञ्चैव कफवातविनाशकम् ॥ द्रव्यगु.।

**अवित्यजः** । पु । पारदे । शब्दकल्पद्रुम । रा नि.व.१२ । अत्र अचिन्त्यज इत्येवं पाठो राजनिघण्टौ दृश्यते । [नि ।

**अविदग्धः** । त्रि । अनले । विजयर.अजीर्णे

**अविदग्धम्** } क्ली । मेषीदुग्धे । इला । See
**अविदुग्धम्** } आविकक्षीरम् ।

**अविदु(दू)ष्यम्** । क्ली । मेषीदुग्धे । ভেড়ার দুধ । इला. ।

**अविद्धकर्णी** । स्त्री । पाठायाम् । আকনাদি । अ.टी. । सा.कौ. । जातीफलावच्याम् । भृङ्गराजे । ভীমরাজ । अ टी. ।

**अविद्धकर्णिका (र्णी)** । स्त्री । पाठायाम् । আকনাদি । अ.टी. । जातीफलावच्याम् ।

**अविद्धा** । स्त्री । दुष्टशिराव्यधने । "बहुशः चलाहीनशस्त्रप्रणिधानेनोपविद्धा ।" सु शा ८श ।

**अविपक्ति(त्ति)करचूर्णम्** । क्ली । अम्लपित्ताधिकारे । पाठ —"त्रिकटु त्रिफला मुस्त वीजञ्चैव विड़ङ्गजम् । एलापत्रञ्च सर्व्वञ्च समभाग विचूर्णयेत् । यावन्त्येतानि चूर्णानि लवङ्ग तत्सम भवेत् । सर्व्वचूर्णद्विगुणित त्रिवृचूर्णञ्च दापयेत् । सर्व्वमेकीकृत यावत्तावच्छर्करयान्वितम् । सर्व्वमेकीकृत पात्रे स्निग्धभाण्डे निधापयेत् । भोजनादौ ततोऽन्ते च मध्वाज्याभ्यामिदं शुभम् ॥" र सा स । भैष । प्रयोगा सा कौ. । त्रिकट्वादि प्रत्येक १ तो. लवङ्गचूर्ण ११ तो. त्रिवृन्मूलचूर्ण ४४ तो. शर्करा ६६ तो. ।

**अविपटः** । पुं । ऊर्णामयवस्त्रे, कम्बलादौ ।

**अविपाकः** । पुं । अपरिपाके । [रा.नि.व.१६

**अविप्रियः** । पु । श्यामाकतृणे । শামা ঘাস ।

**अविप्रिया** । स्त्री । श्यामालतायाम् । रा नि । श्वेतानन्तारूपे । रा नि व ५ ।

**अविभुक्** । पु । व्याघ्रे । मं लांडगा । वै.निघ ।

**अविमरीष(स)म्** । क्ली । आविक्षीरे । ভেড়ীর দুধ । इला.हे.च. ।

**अविमुक्तकः** । पुं । माधवीलतायां । वै निघ ।

**अविमुक्तका** । स्त्री । तिन्दुकवृक्षे । তেঁদ । हि केंदु । म टेंभुरणी । काकतिन्दुके । वै.निघ. ।

**अविमोचम्** । क्ली । आविकक्षीरे । र मा. ।

**अविला** । स्त्री । मेष्याम् । हे.च. । [वै.निघ. ।

**अविह्वचः** । पु । मेषशृङ्ग्याम् । মেড়াশিঙে ।

**अविशिरम्** । क्ली । सूर्य्यावर्त्तफले । হুড়হুড়ের ফল । वै निघ ।

**अविश्वासा** । स्त्री । चिरप्रसूतगवि । श च. ।

**अविषा** । स्त्री । अतिविषायाम् । रा नि व ६ । निर्विषतृणे । निर्विसी घास । वै.निघ. । [इला.।

**अविसोढम्** । क्ली । अविक्षीरे । ভেড়ীর দুধ ।

**अविस्रम्** । त्रि । पूतिगन्धरहिते । च चि २४ ।

**अवी** । स्त्री । वनकुलत्थे । र मा । ऋतुमत्यां स्त्रियाम् । हे.च. । [सु.शा.१श. ।

**अवीजधर्म्मी** । त्रि । यो बीजधर्म्मी न भवति ।

**अवीजा** । स्त्री । गोस्तनीसदृशगुणद्राक्षायाम् । किस्‌मिस্ বেদানা इति लोके । "अवीजान्या त्वल्पगुणा गोस्तनीसदृशी गुणे ।" भा. ।

**अवीदुग्धम्** । क्ली । मेषीदुग्धे । प.द. ।

**अवीमूत्रम्** । क्ली । मेषीमूत्रे । प.द ।

**अवुकः** । पुं । छागे । श र । [निघ. ।

**अवृदः** । पुं । पुष्पवृक्षभेदे । मं पत्थरगुल । वै.

**अवेद्यः** । पु । गोवत्से । श.र. । [मि ।

**अवेला** । स्त्री । पूगचर्व्विते । চিবন গুবাক ।

**अवोदम्** । क्ली । आर्द्रके । जटा. ।

**अव्यक्तम्** । क्ली । प्रकृतौ । "अखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम ।" सु शा.१श. । आत्मनि । हे.च ।

**अव्यक्ता** । स्त्री । कृष्णगोकर्ण्याम् । কাল অপরাজিতা । मं कालीगोकर्णी । वै निघ ।

**अव्यङ्गः** । त्रि । अविकलाङ्गे । स्त्री । शूकशि म्ब्याम् । আলাকুশী ।

**अव्यञ्जनः** । त्रि । श्मश्रुहीने । हला. ।

**अव्यण्डः (ण्डा)** । पुं, स्त्री । भूम्यामलक्याम् । ভুঁই আমলা । कपिकच्छ्वी । আলাকুশী । च चि.३अ. ।

**अव्यथा** । स्त्री । स्थलकमलिन्याम् । স্থলপদ্ম । भा पू १भ. । रा.नि.व.११ । हरीतक्याम् । महा श्रावण्यां । मुण्डीरी । भा.पू.१भ.गु.व. । आमल क्यां । लक्ष्मणायां । লক্ষণামূল । [श्वा. ।

**अव्यथिः (थी)** । पुं । अश्वे । वा सू.४अ.प्रजा

**अव्यथ्या** । स्त्री । हरीतक्याम् । भा.पू १भ. ।

**अव्यधा** । स्त्री । दुष्टशिरावेधने । "अशस्त-कृता अव्यधा ।" सु.शा.८अ. ।

**अव्यया** । स्त्री । गोरक्षमुण्ड्यां । গোরক্ষচাকুলি । मं गोरखमुंडी । वै.निघ. ।

**अव्रणशुक्रः** । पुं । नेत्रस्य कृष्णभागगतरोगवि शेषे । यथमभिष्यन्दजः ज्वालायुक्तः शशेन्दुकुन्दस हृशवर्णः नभस्थतनुमेघाकृतिश्च सुसाध्य. । लक्षणम् —दृष्टेः समीपे न भवेत्तु यच्च न चावगाढं न स्रुतवेदि । सवेदनावन्न च युग्मशुक्रं तत्सिद्धिमा प्नोति कदाचिदेव । सितं यदां भात्यसितप्रदेशे स्यन्दात्मकं नातिरुगश्रुयुक्तं । विहायसीवाभ्रदलानु कारि तदव्रणं साध्यतमं वदन्ति ॥ सु.उ.५अ. । स्यन्दात्मक कृष्णगत सचोषं शशेन्दुकुन्दप्रति-मावभास । वैहायसाभ्रप्रतनुप्रकाशमथाव्रणं साध्य तमं वदन्ति । गम्भीरजातं बहुलश्च शुक्रं चिरोत्थि-तञ्चापि वदन्ति कृच्छ्रम् । विच्छिन्नमध्यं पिशितावृतं वा चलं शिरासूक्ष्मदृष्टिकृच्च । द्वित्वागतं लोहित-मन्ततश्च चिरोत्थितञ्चापि विवर्जनीयम् ॥ मा नि. ।

**अशकुम्भी** । स्त्री । पानीयोपरिजवृक्षे । পানা । र.मा. ।

**अशनम्** । क्ली । भोजने । अन्ने । रा नि.व.२० । पुं । पीतशाले । च सू ४अ ४३दशकं । चित्रकवृक्षे । भल्लातकवृक्षे । वै निघ. । [पि । सु सू.४६अ. ।

**अश(स)नकः** । पुं । असनपुष्पाकारधान्यविशे-

**अशनपर्णी** । पुं, स्त्री । विजयसार इति प्रसिद्धे वृक्षे । মারোটী इति च पश्चिमदेशे । गोकर्णीलतायां । অপরাজিতা । अम ।

**अशनपुष्पः** । पुं । असनपुष्पाकारशाली । স্ফটিক ধান্যবিশেষ । सु सू ४६अ. ।

**अशनमल्लिका** । स्त्री । आस्फोतायाम् । হাপরমালী । च.द ।

**अशना (या)** । स्त्री । क्षुधायाम् । हला. । शुक्लनिष्पावे । শ্বেত বরবটি বা শিম্ । रा.नि व.७ ।

**अशनिः** । पु, स्त्री । हीरके । হীরে । वै.निघ ।

**अशाका (खा)** । स्त्री । शूलीतृणे । शाखा शून्यलतायाम् । रा.नि.व.८ ।

**अशान्तगन्धाढ्या** । स्त्री । आमहरिद्रायाम् । আম আদা । मं आवेहलद । वै.निघ. ।

**अशितम्** । क्ली । भक्षणे । खादने । हे.च. ।

**अशितलता** । स्त्री । नीलदूर्व्वायाम् । নীল দূর্ব্বা । वै निघ । [वज्रम् ।

**अशिरम्** । क्ली । हीरके । रा.नि.व १३ । See

**अशिशिम्बी** । स्त्री । स्वनामख्यातशिम्बीविशे-षे । শ্বেত শিম্ । मं धोरश्वेतश्रावे । गुणाः— मधुरा कषाया श्लेष्मपित्तघ्नी व्रणदोषघ्नी शीतला रुचिकरी च । रा.नि व ७ ।

**अशिश्विका** । स्त्री । अनपत्यायाम् । যে স্ত্রীর সন্তান নাই । श.र. ।

**अशीता** } **अशुक्ला** } स्त्री । भूमिकुष्माण्डे । वै.निघ. ।

**अशुक्लजा** । स्त्री । बोरोधान्ये । वै.निघ. ।

**अशुचिः** । त्रि । अपवित्रे । [व.१६ ।

**अशूकजः (कः)** । पुं । शुष्कशाली । रा.नि.

**अशृतम्** । क्ली । अपक्वे ।

**अशोकः** । पुं । (Saraca Indica, Jonesia Aśoka.) स्वनामख्यातवृक्षे । অশোকগাছ । मे. । हिं अशोगी । स लोहितकुसुम इति । सु. सू.३८ लोध्रादिः । अशोकवृक्षगुणाः—शीतलः हृद्यः पित्तदाहघ्नः गुल्मशूलोदराध्मानघ्नः कृमिघ्नश्च रा.नि व १० । तिक्तः ग्राही वर्ण्यः कषाय अपची तृष्णादाहकृमिशोषविषरक्तघ्नश्च । भा पू.१भ. । मा

षा २ तो.। वेतसी। तिमिरी। वै निघ। क्री। पारदे। मे।

**अशोकघृतम्**। क्ली। प्रदराधिकारे प्रयोज्य। पाठ —अशोकवल्कलप्रस्थं तोयाढकविपाचितम्। पादशेषं घृतप्रस्थं जीरकक्वाथसंयुतम्। तण्डुलाम्बु लशाचीर घृततुल्यं प्रदापयेत् तथैव केशराजस्य प्रस्थमेकं भिषग्वर। जीवनीयैः पियालैस्तु परुषैः सरसाञ्जनैः। यष्ट्याह्वाशोकमूलश्च मृद्वीका च शतावरी। तण्डुलीयकमूलश्च कल्कैरेभिः पलाद्धकैः। शर्करायाः पलान्यष्टौ सिद्धशीते प्रदापयेत्। जीवकर्षभकौ मेदे काकोल्यौ मूर्पपर्णिके। जीवन्ती मधुकश्चेति दशकौ जीवनी गण॥ भैष। प्रयोगा चक्षुदर चि। गव्यघृत ४ श क्वाथार्थम् अशोकम् वलक २ श जल १६ श शेष ४ श। तथा जीरक २ श जल १६ श शेष ४ श केश राजरस ४श तण्डुलोदक ४ श छागदुग्ध ४ श। कल्कार्थं जीवकऋषभकं मेदा महामेदा काकोली चीरकाकोली मुद्गपर्णी माषपर्णी जीवन्ती यष्टि मधु पियालवीज परुषकफल रसाञ्जन यष्टिमधु अशोकमूल द्राचा शतावरी तण्डुलीयकमूलश्चैषां प्रत्येक ४ तो। पाकान्ते शर्करा मिश्रणीया। भैष। सा कौ।

**अशोकरोहिणी**। स्त्री। कटुतिक्तायाम्। कटुकी। रा नि व ६। च सू ४च सन्धानीयने। See कटुकी। लताशोके, स ध अशोकदलसदृश दल। रवा।

**अशोका**। स्त्री। कटुरोहिण्याम्। कटुकी। मे। भा पू १भ। [म कलम्ब। श च।

**अशोकारि**। पु। कदम्बवृक्षे। कदमगाछ।

**अशोधनैत्रपाक**। पुं। विनाशोध नैत्रपाके। लक्षणम्—शोथहीनानि लिङ्गानि नेत्रपाके त्वशो थजे। मा नि। कण्डूपदेहाश्रुयुक्त पक्वोदुम्बरनिभ मरको च भवति।

**अश्म**। क्ली। स्वर्णमाक्षिके। वै निघ।

**अश्मकदली**। स्त्री। कदलीविशेषे। पाहाड़े कला। म लोखंडकेल। रा नि व ११।

**अश्मकरम्**। क्ली। स्वर्णे। रवा।

**अश्मकण्टका**। स्त्री। वैनमरावृक्षे। म वेल मूर। वै निघ.।

**अश्मकेतु**। स्त्री। क्षुद्रपाषाणभेदवृक्षे। पाथर चूर। रा नि व.५।

**अश्मगर्भः**। पु। हरिन्मणौ। पान्ना इति लोके। भा पू १भ। क्ली। मरकतमणौ। हे च।

**अश्मगर्भक**। पु। तिनिशवृक्षे। मद व ५।

**अश्मगर्भजम्**। क्ली। मरकतमणौ। पान्ना। रा नि व १३।

**अश्मघ्न**। पु। पाषाणभेदवृक्षे। पाथरकुचा। रा नि व ५।भा पू १भ।

**अश्मजम्**। क्ली। मुण्डलौहे। रा नि व १३। च द पाण्डु चि। शिलाजतुनि। मद व ४। हेमा। प सु। र मा। रा.नि व १३। गैरिके।

**अश्मजतु (कम्)**। क्ली। शिलाजतुनि। च द पाण्डु चि योगराजे। रा नि व १३। सि यो र. पि चि खण्डखाद्ये। "शुभाश्मजतुकं लघम्।"

**अश्मन्**। पु। प्रस्तरे।

**अश्मन्त. (क)**। पु। पाषाणभेदे। च सू ४च। कोविदारवृक्षसदृशेऽश्मन्तवृक्षे अक्षोट इति लोकप्रसिद्धे वृक्षे। भा म ४म गर्भ चि। "अश्मन्तकस्य ला क्षणा। च सू ४च। उद्दालकवृक्षे। भा पू १भ। कोविदारवृक्षे। भा पू १भ। चुल्ली। चुल्ली। र मा। तृणविशेषे। अम्लकुचाई। सु चि २५च। स्वनामख्यातवृक्षे। आपुटा इति च लोके प्रसिद्धे। म आपसर। गुणा —मधुरकषाय शीतल पित्तघ्न मेहघ्न दाहतृष्णाविषमज्वरविषघ्न भूतनिवारणश्च। रा नि व ८।

**अश्मन्त(क)म्**। क्ली। चुल्लाम्। मे नत्रिक। दीपाधाराच्छादने। आच्छाविशेषे। मे.।

**अश्मपुष्पम्**। क्ली। शैलजे। शिलावल्क। चम.।

**अश्मभाण्डम्**। क्ली। लौहभाण्डविशेषे। हा-मामदिस्ता। श च। खल्ले। खल इति भाषा।

**अश्मभित्**। पुं। पाषाणभेदे। पाथरकुचा। प सु रवा.। कवाटवक्रवृक्षे। कवाड़िया इति लोके। र.मा। कवाटचक्रमिति। रवा।

**अश्मभेद (क)**। पु।(Coleus amboinicus, Syn, Coleus aromaticus) वृक्ष विशेषे। पाथरकुचा, हिमसागर, हाडाभांगा इति

**अश्रुपातः ।** पु । अश्वस्य चक्षुषोरध प्रदेशे । "अश्रुपात समुद्दिष्ट प्रदेशश्चक्षुषोरध । तत्रावर्त्तौ भवेद्यस्य स्वामिनं कुलनाशन ।" जयदत्त ।

**अश्वः ।** पु । घोटके । (घोडा ।) तन्मांसगुणा —उष्ण वातघ्न लघु बलकर पित्तदाहजनकमति शोथनाशकृच्च । रा नि व १७ । लवण वह्निकफपित्तकरं वातहृत् बृंहण बल्य चक्षुष्य लघु मधुरञ्च । भा पू । "त्यागी लुब्धो दयालुश्च विप्र स परिकीर्त्तित । शूरश्च दृढमन्युश्च क्षत्रियस्तुरग स्मृत ॥ पापिन कल्मषा रूक्षा दुष्टा वैश्या प्रकीर्त्तिता । विरूपा विषमाश्चैव शूद्राश्चण्डा उदाहृता ॥" 'उत्तमा मध्यमा नीचा कनीयांसस्तथापरे । चतुर्धा वाजिनो भूमौ जायन्ते देशसंश्रयात् ॥ ताजिका खुरशाणाश्च उत्तराश्चोत्तमा हया । गोजिकाणाश्च केकाणा प्रौढाहाराश्च मध्यमा ॥ भाण्डजाश्चोत्तमामाश्च राजशूलाश्च मध्यमा । गोह्वरा शावराश्चैव सिन्धुपारा कनीयस ॥ अन्यदेशोद्भवा ये च नीचनीचाश्च ते स्मृता । वाजिनो जलजा केचिद्वह्निजातास्तथापरे ॥ समीरप्रभवाश्चान्ये उलूकमृगजास्तथा । जलोद्भवा द्विजातीया क्षत्रिया वह्निसम्भवा ॥ समीरप्रभवा वैश्या एणोलूकाश्च शूद्रजा । विवेकी सद्गुणो विप्रस्तेजस्वी क्षत्रियो बली ॥ दुष्टभावस्तथा वैश्य शूद्रो नि सत्त्वकातर । ब्राह्मण सामवादी च भेदवादी च क्षत्रिय ॥ उपादानेन वैश्य स्याच्छूद्रो दण्डेन ताडित । पुष्पगन्ध सदा विप्र क्षत्रियोऽगुरुगन्धक ॥ घृतगन्ध सदा वैश्यो मीनामोदी च शूद्रक । विप्राद्या वाजिन सर्व्वे क्षत्रियो भूपते सदा ॥ द्वौ वैश्यस्याथ शूद्रस्य शूद्र एव सुखावह । केचिदिच्छन्ति भूपाना सर्वेऽश्वा वाहनोचिता ॥ सदर्थं भूतले यस्मात्कालिहोत्रेण निर्म्मिता । ब्राह्मणा वेमकृत्येषु सिद्धिं गच्छन्ति वाजिन ॥ क्षत्रिया युद्धकार्य्येषु वैश्या वित्तार्ज्जने सदा । शूद्राश्चान्येषु कृत्येषु शान्तैव वाऽश्रम सदा ॥ आरोहिसर्व्वकार्य्येषु यदीच्छेच्छाश्वतीं श्रियम् ।" इति अश्वशास्त्रे । नकुल श्च । "सप्त वर्णा भवन्तीह सर्व्वेषा वाजिनां भुव । तानहं कीर्त्तयिष्यामि भेदैर्जातानेकधा ॥ सितो रक्तस्तथा पीत सारङ्ग पिङ्ग एव च । नील कृष्णोऽथ सर्व्वेषा श्वेत श्रेष्ठतम स्मृत ॥ पद्मार्हो भूपतेर्वाजी सर्व्वश्वेत प्रशस्यते । तदभावे यथा नीलास्तथा श्वेता क्रमेण च ॥ श्वेत प्रालेयसङ्काशो रक्त कुङ्कुमसन्निभ । हरिद्रासदृश पीत सारङ्ग कर्व्वुर स्मृत ॥ पिङ्ग कापलकाकारो नीलो दूर्व्वासन्निभ । कृष्णो जम्बूफलाकार शास्त्रज्ञै समुदाहृत ॥ पीताभ श्वेतपादो यस्तथा स्यात्सितलोचन । चक्रवाक स विज्ञेयो राजार्हो वाजिसत्तम ॥ सर्व्वश्वेतो हयो यस्तु भवेन्मेचककर्णक । स वाजी वाजिभिर्वाह्य श्यामकर्ण प्रकीर्त्तित ॥ मुखे चन्द्रकसम्वीतो जम्बूफलसमाकृति । श्वेतपाद स विज्ञेयो मल्लिकाख्य स पूजित ॥" नकुल श्च । "सार्द्धे यवत्रय प्रोक्तमङ्गुलस्य तपोधनै । प्रमाण शालिहोत्राद्यैर्वाजिशास्त्रविशारदै ॥ हस्तोऽङ्गुलानां त्रिंशत्या चतुरुत्तरया स्मृत । चतुर्हस्तेषु विख्यात शास्त्रोक्तैरुत्तमो हय ॥ अर्द्धहस्तेन हीनस्तु भवेन्मध्यस्तुरङ्गम । मुष्टिशून्येन हस्तेन हीनश्चाप्यधम स्मृत ॥ ऊर्द्धमानप्रमाणन्तु परिणाहं विनिर्द्दिशेत् । उत्तमानां च मध्यानां हीनानाञ्चैव वाजिनाम् ॥ अर्द्धसप्तमहस्तन्तु श्रेष्ठ दैर्घ्येण निर्द्दिशेत् । षड्भिर्मुष्टिविहीनैश्च मध्यमञ्च विचक्षण ॥ पञ्चहस्तप्रमाणस्तु जघन्य समुदाहृत । द्वात्रिंशदङ्गुल वक्त्रमुत्तमाश्वस्य कीर्त्तितम् ॥ पृष्ठ वक्ष कटिश्चैव मुखतुल्य समादिशेत् । अङ्गुलद्वयहीनन्तु मुखादि मध्यमाधमम् ॥ निर्द्दिशन्मतिमाश्चैव वाजिशास्त्रविशारद । सप्ताङ्गुल खुरश्चैव उत्तमाश्वस्य कीर्त्तित ॥ षडङ्गुलो भवेन्मध्ये जघन्यश्चतुरङ्गुल । षोडशाङ्गुलदीर्घा तु जङ्घा चैवोत्तमा स्मृता ॥ चतुर्द्दश तथा मध्ये हीने च द्वादशाङ्गुल । एवंविधप्रमाणन्तु निर्द्दिष्ट शास्त्रशालिभि ॥ अपाङ्गात्पुच्छमूलन्तु दैर्घ्येणाश्वं प्रमाणयेत् । खुरान्तात्ककुदं यावदूर्द्धमानेन बुद्धिमान् ॥" इति परिमाणादि । जयदत्त श्च । "अश्वानां जन्मदेशांस्तु प्रवक्ष्याम्यनुपूर्व्वश । उत्तमानाञ्च मध्यानां हीनानां यत्र सम्भव ॥ उत्तमास्ताजिका प्रोक्तास्तथा पारसिकाश्च ये । केकाणाश्चैव ये वाहा पृष्ठजा ये च कीर्त्तिता ॥ गुरौ जाताश्च कीराश्च भूस्फटाभाश्च ये । पार्व्वता सैन्धवा मध्यास्तथा सारस्वता हया ॥ सम्भलाश्चाकुलाश्चैव जटदेशोद्भवाश्च ये । अधमास्त्वपरे प्रोक्ता हया प्राग्दक्षिणोद्भवा ॥ हस्वदीर्घाश्चितग्रीवा ह्रस्वकर्णा महाजवा । महाकाया महोरस्का निस्ताभास्ताजिका मता ॥ अत्यन्तविमर्द्देषां निर्म्मांसञ्च मुखं भवेत् । पीनेन कटिदेशेन सुखरास्च भवन्ति ते । अश्वास्च महासारा सदा

चैव पूजिताः। अपि शस्त्रहताङ्गाश्च नैव मुञ्चन्ति सादिनम्॥ पारसीकाः ताजिकाभाः केकाणाः केचिदुन्नताः। स्थूलाः श्लक्ष्णशरीराश्च प्रधाना दीर्घपृष्ठकाः॥ केकाणदेशजातानां मध्यमानाञ्च वाजिनाम्। ताजिकैः सदृशं वक्त्रं बाहुल्येन विनिर्द्दिशेत्॥ सुवृत्तदेहस्तीक्ष्णश्च सुप्रमाणेन मध्यमः। तुरुजातः समुद्दिष्टः किञ्चित्स्थूलो मनाग्जवः॥ अतिस्थूलोऽतितीक्ष्णश्च ह्रस्वग्रीवस्तुरुस्तथा। तुरुष्कः कीर्त्तितो वाजी स्थूलवक्त्रमुखश्च यः॥ केकाणाकारदेहस्तु भवेन्माण्डविको हयः। शान्त्या चैव प्रमाणेन केवलं नैव सत्तम॥ सिन्धुदेशोद्भवो वाजी पृष्ठन्यस्ताक्षकीरकः। आननञ्चापि दीर्घञ्च तस्य पृष्ठं प्रकीर्त्तितम्॥ शान्त्या चैव जवेनापि स्थूरस्त्वजाघनः। सादिभक्तिच्छतो याति ताजिकादधिकस्तथा॥ परिमण्डलदेहास्तु दीर्घाक्षकर्णमुखा हयाः। पङ्कदेशोद्भवा दृष्टास्तथा सारस्वताश्च ये॥ लम्बकर्णोऽजटश्चैव चाकुलः परिकीर्त्तितः। साम्भलः श्लिष्टजानुश्च जटालश्चाकुलोपमः॥ वर्त्तुलश्चापि ह्रस्वश्च टङ्कणः परिकीर्त्तितः। दाक्षिणात्यो भवेद्गुण्ठो योऽधमः सर्व्ववाजिनाम्॥ जवहीना महादुष्टाः पूर्व्वदेशसमुद्भवाः। वाजिपद्देशराणाञ्च देश विन्ध्यादिचम्पणः॥" इति जयदेवः। "काकुदी कृष्णजिह्वश्च कृष्णशेफाख्यतालुकः। करालो हीनदन्तश्च श्रङ्गी चाधिकदन्तकः॥ एकाण्डश्चैव जाताण्डः कञ्चुकी त्रिसरी तथा। मार्ज्जारपादी व्याघ्राभस्त्रिकर्णी द्विखुरी स्तनी॥ यमजो वामनश्चैव कुक्कुटतित्तिरसन्निभः। (काकतित्तिरसन्निभः। इति वा पाठः)। वानराक्षो विडालाक्षो मुषली चेन्द्रदण्डकः॥ येषां पृष्ठे हतो भर्त्ता जातदन्तश्चैव च। एते दोषान्विता वाहा न ग्राह्या भूतिमिच्छता॥ धनप्राणहरा ह्येते बन्धुविपत्कारकाः। एषां चिह्नं प्रवक्ष्यामि येन जानन्ति सादिनः॥ पूर्व्वशास्त्रानुसारेण मुनीनां वचनं यथा। आवर्त्ता यस्य ककुदि काकुदी स उदाहृतः॥ करालो चाधरे दन्तो जायते यस्य चोत्तरा। चतुर्भिः पञ्चभिश्चैव हीनदन्तः प्रकीर्त्तितः॥ सप्तभिश्चाष्टनिर्द्दिष्टै स्यात्तथाधिकदन्तकः। बहुष्टपश्चसदाशः छागमङ्कोपमस्तथा॥ जम्बूदररूपश्च तथाचामलकोपमः। आमास्थिसदृशश्चापि हरीतक्याः फलोपमः॥ दग्धचर्म्मनिभश्चापि वालुमस्तम एव च। कोषः कर्णान्तरे यस्य केशान्ते चापि दृश्यते॥ धीरैः सर्व्वपापानां श्रङ्गी वाह स कीर्त्तितः। एवंविधेन शृङ्गेन श्रङ्गी राष्ट्रे न वासयेत्॥ एकेन लम्बमानेन मुष्केणैकाण्डसंज्ञकः। अत्यन्तरोमशाभ्यान्तु ताभ्यां जाताण्ड उच्यते॥ स्कन्धे वक्षसि वाह्लीश्च अंसदेशे तथैव च। अन्यवर्णो भवेद्वाजी कञ्चुकी स प्रकीर्त्तितः॥ यस्यान्यवर्णरेखा स्यात् पादे कूर्च्चे च वाजिनः। मार्ज्जारपादः प्रोक्तोऽसौ न धन्यः कुलनाशनः॥ अन्यवर्णस्य वाहस्य शिरः कृष्णं यदा भवेत्। त्रिसरी नाम सः प्रोक्तः भर्त्तुः कुलविनाशनः॥" इत्यादि। मुखरोगोऽक्षिरोगश्च शिरोरोगश्च लिङ्गितः। कर्णरोगश्च कासश्च श्वासो हिक्का व्रणस्तथा। ज.द.३अ.।

**अश्वकः** । पुं। कुत्सितपक्षिणि। वै.निघ.।

**अश्वकन्दकः** । पुं। अश्वगन्धायाम्। रत्ना.।

**अश्वकन्दिका** । स्त्री। वनस्पतिविशेषे। अश्वगन्धायाम्। र.मा.।

**अश्वकर्णः (कः) (र्णिका)** । पुं, स्त्री। (Shorea robusta.) शालवृक्षे। শাল গাছ। सु.सू.३८अ.। च.सू.४अ.। सर्जरसभेदे। सर्जशाल विशेष। रा.नि व.२३। शाङ्कु इति च लोके। भा.म.४भ.रेवतीचि.। धवाश्वकर्णककुभः। गुणाः—कटुः तिक्तः स्निग्धः रक्तपित्तघ्नः क्रमिविस्फोटकण्डूघ्नः। रा.नि.व.९। कषाय व्रणस्वेदकफकृमिघ्नः व्रध्नविद्रधिवाधिर्य्ययोनिकर्णरोगघ्नश्च। भा.पू.१भ. वटादिव.। मात्रा २ माषा। पलाशभेदे। सु.सू. ३६अ.। शरीरे। लताशाले। शियाड़ि लता। प.मु.।

**अश्वकर्णम्** । क्ली। काण्डभग्ननामास्थिभङ्गविशेषे। यत्रास्थि अश्वकर्णवदुन्नतं तिष्ठति। सु.नि. १५अ.। See भग्नम्।

**अश्वकातरा (रिका)**<br>**अश्वकाथरिका** } स्त्री। हयकातरायाम्। ঘোড়া কাথরা। म घोडेकायर। गुणाः—तिक्ता वातघ्नी दीपनी। कातरा हयपर्य्यायैः कातरा वै प्रकीर्त्तिता। रा.नि.। [नि।

**अश्वखर्जः** । पुं। अश्वतरे। खच्चोत्र। रा. [रा नि.व.२।

**अश्वखुरः** । पुं। नखीनामगन्धद्रव्ये। नखी। रत्ना.। घोटकखुरे। रा.नि।

**अश्वखुरा (री)** । स्त्री। श्वेतापराजितायाम्।

**अश्वगन्धा (न्धिका)** । स्त्री (Withania somnifera or physalis flexuosa) स्व नामख्यातक्षुपविशेषे । अश्वगन्धा । हिं असगन्ध आसाढीमीठी । मं आसध आसांदु धंगुर, आस धिका । रा नि व ४ । गुणा —सा शुक्रवृद्धिकरत्वात् शुक्रला । तथा कटूष्णा तिक्ता बल्या वातहरी का सश्वासक्षयव्रणघ्नी च । रा नि व ४ । रसायनीवात श्लेष्मश्वित्रशोथघ्नी च । भा म०ख १भ अश्वगन्धानि लश्लेष्मशोफश्वित्रक्षयापहा । बल्या रसायनी तिक्ता कषायोष्णातिशुक्रला ॥ मद व १ । वातकफघ्नी श्वि त्रशोथक्षयरोगघ्नी बल्या रसायना तिक्ता कषाया उष्णा चातिशुक्रला च । भा पू १भ । मात्रा १ तो । तच्छोधन यथा प्रयोगा —पक्षपल्लवतोयेन गन्धा नां चालन तथा । शोधनञ्चापि संस्कारो विशेष श्चात्र वक्ष्यते ॥

**अश्वगन्धाघृतम्** । क्ली । प्रथम बालरोगाधि कारे । पाठ —"पादकल्काश्वगन्धाया क्षीरे दशगुणे पचेत् ।" घृतं ४श अश्वगन्धाकल्क १श दुग्धं ४श जलं १६ श । सा कौ । मतान्तरे दुग्ध ४० श । भैष । द्वितीय वातव्याधौ—"अश्वगन्धाकषाये च कल्के क्षीरे चतुर्गुणे । घृत पक्वन्तु वातघ्नं ।" अ श्वगन्धा ६० श वारि ६४ श शेष १६ श घृत ४ श दुग्ध १६ श यथाविधि पाच्यम् । च द वा व्या चि । मतान्तरे घृत ४श आर्द्राश्वगन्धामूल ६४ प जल ६४श शेष १६श दुग्ध १६श अश्वगन्धा कल्क ८ प । प्रयोगा वा व्या चि । तृतीयचतुर्थं वृहदभिधाने वातव्याधौ द्रव्य च उक्तं । पाठो —अश्वगन्धापलशत जलद्रोणे विपाचयेत् । चतुर्था शशेषं गृह्णीयात् सुपूत तं रसं तथा । जलद्रोणद्वये छागमांसं पलशतद्वयं । पक्त्वैकाहेन कर्तव्य क्वाथ पादावशेषित । क्वाथद्वये तदा गव्यक्षीरमन्यच तुल्ये । काकोल्यौ मधुक मेदे जीवन्ती जीवक बला । एला शतावरी द्राक्षा विदारी ऋषभकः । सुद्गपर्णी प्रकशिम्बी पिप्पल्यृषभक तथा । एतेषां कार्षिकैर्भागै घृतप्रस्थ विपाचयेत् । सिता चतुष्पल शीते विनिक्षिप्य पलाष्टकम् ॥' प्रयोगा । "अश्वग न्धापलशतं अष्टद्रोणसमन्वितं । पुष्याऽहनि समुद्धृत्य साधयेत् प्रयत्नतस्तम् । द्रोणे वनि अवशिष्टे पादावशेषितं । अपि प्रस्थं पचेत गव्य क्षीरं चतुर्गुणम् । कषायं छागमांसस्य दद्याद्द्वयस्य च । कल्कानि अश्वगन्धानि कर्षमात्राणि दाप येत् । काकोलीयुग्मसङ्गी द्वे द्वे मेदे द्वे च जीरके । स्वयंगुप्ता ऋषभकौ एला मधुकमेव च । मृद्वीका मुद्गपर्णौ च जीवन्ती चपला बला । नारायणी विदारी च दत्त्वा सम्यग्विपाचयेत् । सितामापि कर्षो शीते गृह्णीयात् कुडवे पृथक् । लिह्यात्सा पितक्षम् ॥ अत्र छागमांसप्रस्थद्वये जलद्रोण द्वय, तुलाद्रव्ये जलद्रोण इति वचनात् । घृत ४ श अश्वगन्धा १२५० श जलं ६४ श पादशेष १६ श छागमांस २५ श जलं १२८ श पाद शेष ३२ श गव्यदुग्ध १६ श । कल्काथ काको ल्यादिकस्य मिलितस्य शराव । शूर्पपर्णौ मुद्ग पर्णौ माषपर्णौ च । पाकसिद्धौ शीते च शर्करा ॥० श मधुनश्च शराव देय । रस र. । भैष ।

**अश्वगन्धातैलम्** । क्ली । प्रथम वातव्याधौ हितम् तिलतैल ४श क्वाथार्थमश्वगन्धा १२।०श वारि ६४श शेष १६श दुग्ध १६श अश्वगन्धादि कल्कद्रव्याणां मिलितानां १श यथाविधि पाच्यम् च द प्रयोगा मिश्रभावनद कार्याधिकारे उक्तम् । द्वितीयं रसायनाधिकारे—अत्र कल्कार्थाश्वगन्धा दीनां मिलितशरावमित दुग्ध १६ श तिलतैलं ४ श । अश्वगन्धाक्षीरकुष्ठमांसीसिद्धैकतान्वित । चतुर्गुणेन दुग्धेन तिलतैलं विपाचयेत् ॥ च द ।

**अश्वगन्धाद्यचूर्णम्** । क्ली । स्वरभङ्गनाशन मिदं । यथा —' अश्वगन्धाजमोदा च पाठा त्रिकट क त्रिक । शतपुष्पं ब्रह्मबीजं सैन्धवञ्च समं समम् । एतदर्द्धं वचा चैव चूर्णितं मधुसर्पिषा । भक्षयेत् प्रमाणन्तु लीढाग्नि क्षीरभोजनम् ॥" अत्र ब्रह्मबीज पलाशबीज मध्वचूर्णाद्ध ग्राह्यम् । रस र. । [वैद्य । वैनिघ ।

**अश्वगोष्ठम्** । क्ली । वाजिशालायाम् । घोड़ा

**अश्वघ्न** । पु । शतकरवीरवृक्षे । श्वेतकरवी गाछ । रा नि व १० ।

**अश्वजीवन** । पु । चणके । छोला । हिं

**अश्वतर** । पु । खचरे । स च गर्दभा ट्ट्भाज्जात । थ छार घोड़ा । तन्मांस शीतं दृष्य कफपित्तकरञ्च । मद व ११ ।

**अश्वत्थ** । पुं । (Ficus religiosa, Syn, Urostigma religiosum) स्वनामख्यातवृक्षे । अश्वत्थ गाछ । हि पिपर । मं पिपल । ध्रि

वेड्। ते कुलुजुव्लिचेडु। प सु। सु.सू.३८ष. न्यग्रोधादिव। गुणा.—मधुर कषाय शीतल कफपित्तघ्न रक्तदाहशमन. योनिदोषघ्न। अश्वत्थत्वचस्य फलानि पक्वान्यतीव हृद्यानि च शीतलानि। कुर्वन्ति पित्तास्रविषार्त्तिदाह विच्छर्दिशोषारुचिदीपनाशम्॥ रा नि व ११। दुर्जर. शीत। मद व ५। पित्तश्लेष्मव्रणास्रजित् गुरु तुवरक योनिशोधनः वर्ण्यश्च। भा पू १भ.वटादिव।

**अश्वत्थकम्** । क्ली। मल्लिकापुष्पदले। मल्लिका फुलेर पापडा। वै.निघ.।

**अश्वत्थफलका (ला)** । स्त्री। हनुषायां। हबुष वृक्ष। हि हौवेर। म लघुशेरणी। भा पू १भ.। [बालिशापीपर। भा पू १भ.वटादिव।

**अश्वत्थभित् (भेद्)** । पु। नन्दीवृक्षे। हि

**अश्वत्थसन्निभा** । स्त्री। अश्वत्थिकायाम्। गया अश्वथ। रा.नि व.११।

**अश्वत्था (त्थी)** । स्त्री। क्षुद्राश्वत्थवृक्षे। गया अश्वथ। रा नि व ११। शीवल्लीवृक्षे। रा नि.व ८।

**अश्वत्थिका (त्थी)** । स्त्री। क्षुद्रपत्राश्वत्थवृक्षे। गया अश्वथ। हि पिपली। म अश्वत्थी। क हेन रलि। गुणा —मधुरा कषाया रक्तपित्तघ्नी विषघ्नी दाहघ्नी गर्भिण्या हिता च। रा नि व.११।

**अश्वदंष्ट्रकः** । पुं। गोक्षुरवृक्षे। वै.निघ.। हिंस्रजन्तुविशेषे। सु.।

**अश्वदंष्ट्रा** । स्त्री। गोक्षुरके। भा पू.१भ.।

**अश्वनाशः (कः) (नः)** । पु। श्वेतकरवीरे। रा नि.व.१०।

**अश्वपर्णिका (र्णी)** । स्त्री। भूतकेशीलतायाम्। [भाषा।

**अश्वपालः** । पु। अश्वरक्षके। सहिस इति

**अश्वपुच्छकः** । पुं। खड्गलतायाम्। श च.।

**अश्वपुच्छा** । स्त्री। पृश्निपर्णी। चाकुलिया। माषपर्ण्याम्। रा नि.व.।

**अश्वपुच्छिका (च्छी)** । स्त्री। माषपर्णी लतायाम्। माषाणी। रा.नि व.४।

**अश्वपुटभावना** । स्त्री। दाविंशत्पलपरिमितद्रव्यस्य भावनायाम्। वै.निघ।

**अश्वपुत्री** । स्त्री। सल्लकीवृक्षे। रक्ता.। द्रवन्त्याः इन्दुवर्णानी। वै निघ.।

**अश्वबला** । स्त्री। मेथिकायाम्। नारीशाके। नाडीशाक। गुणा.—शाकमाश्वबल रूक्ष बद्धविण्मूत्रमारुतम्। सु। See नारी।

**अश्ववालः** । पु। काशतृणे। त्रिका।

**अश्वमारकः** । पु। श्वेतकरवीरे। श्वेत करवी। उपोदिकायां। पूँई। पालङशाके। सु चि १अ। करवीरे। सु.सू.३८। लाक्षादिव। भा.पू १भ.। श्वेतकरवीरमूले। इदञ्च स्थावर विषान्तर्गतमूलविषम्। एवं सुगन्धरोहिषमपि। सु. कल्प २अ। See मूलविषम्।

**अश्वमाराख्यः** । पु।(Verium odorum.) श्वेतकरवीरवृक्षे। श्वेतकरवी गाछ। रा नि व १०।

**अश्वमालः** । पु। सर्पविशेषे। वै निघ.।

**अश्वमूत्रम्** । क्ली। घोटकमूत्रे। घोडारमूत्। गुणा —तिक्तोष्ण तीक्ष्णं विषघ्न वातकोपशमनं पित्तकर दीपनञ्च। रा नि.व १५। मेदि कफदद्रु कृमिघ्नञ्च। मद.व ८। [जटा।

**अश्वमूत्रिका (त्री)** । स्त्री। शल्लकीवृक्षे।

**अश्वमोहकः** । पुं। श्वेतकरवीरे। वै निघ.।

**अश्वयानम्** । क्ली। अश्वेन गमणे। घोडाय चड़ा। गुणा —घोटकारोहणं वातपित्ताग्निश्रमकृन्मतम्। मेदोवर्णकफघ्नञ्च हित तद्बलिनां वरम्॥ दिनचर्या।

**अश्वयुजः** । पु। आश्विनमासि। सु सू.६अ।

**अश्वरक्षकः** । पु। अश्वपाले। घोड़ार सहिस।

**अश्वरिपुः** । पु। करवीरवृक्षे। महिषे। भा।

**अश्वरोधकः** । पुं। श्वेतकरवीरवृक्षे। श्वेत करवी गाछ। रा.नि व.१०।

**अश्वरोहका (हा)** । स्त्री। अश्वगन्धायां।

**अश्वलम्** । क्ली। धूद्रलवणविशेषे। घोड़ेनन। "अश्वलञ्च लवणं बल्यं कण्ठं पद्दहितावहम्।" वै. निघ.।

**अश्वलोमा** । पुं। सर्पविशेषे। त्रिका।

**अश्ववराहः** । पुं। वाराहीकन्दे। वै.निघ.।

**अश्ववहः (वाहः)** । पुं। अश्ववाहके । जटा.।

**अश्ववारणः** । पुं। गवये । हे.च. । [वादी ।

**अश्ववैद्यः** । पुं। अश्वशास्त्रप्रणेतरि शालिहो

**अश्ववैद्यकम्** । क्ली। अश्वचिकित्साशास्त्रे । तच्च बहुविधं शालिहोत्रनकुलभोजजयदत्तादिप्रणीतम्।

**अश्वशाला** । स्त्री। मन्दुरायाम्। हला ।

**अश्वहनः** । पु। करवीरवृक्षे। रत्ना । भैष भ ग.चि निम्बादितैले ।

**अश्वहा** । पु। श्वेतकरवीरवृक्षे। मद.व १ ।

**अश्वक्षुरा (रिका) (री)** । स्त्री। श्वेतापरा जितायाम्। कृष्णापराजितायाम्। वै निघ ।

**अश्वा** । स्त्री। अजमोदायां। अश्वगन्धायां। अ पामार्गे। इन्द्रवारुण्यां। रांथालशशां। घोटक्यां।

**अश्वातक्रम्** । क्ली। घोटकीतक्रे। घोडार छूधेर घोल। गुणा —अश्वातक्रन्तु तुवरं किञ्चि द्वातकर मत। अग्निदीप्तिकरं रुच नेत्र मूर्च्छा कफापहम् ॥ वै निघ. ।

**अश्वान्तकः** । पु। श्वेतकरवीरे। रा.नि.व.१०।

**अश्वारिः** । पु। करवीरवृक्षे। भैष कुष्ठ चि. मरिचादितैले। महिषे। जटा ।

**अश्वारोहः (क.)** । पु। अश्वगन्धायां रत्ना।

**अश्वारोहा** । स्त्री। इन्द्रवारुण्यां। राथाल शशां। अश्वगन्धायां। मे । [नि.व ८।

**अश्वालः** । पु। उशीरे। चुद्रकासवर्षे। रा

**अश्वावरोहकः (हिका)** । पुं,स्त्री। अ श्वगन्धायां। र मा.। [निघ ।

**अश्वासना** । स्त्री। चड्डो। घोटक्याम्। वै

**अश्वाह्वा** । स्त्री। अश्वगन्धायाम्। वै निघ वा त्या शतावरीतैले, नारायणतैले ।

**अश्वाह्वादिखुरा (री)** । स्त्री। श्वेतापरा जितायाम्। रा.नि.व ३ । [भेदे। रा नि ।

**अश्वाक्षः** । पु । देवसर्षपवृक्षे। अम । इव

**अश्विजौ** । पु । अश्विनीकुमारौ ।

**अश्विनी** । स्त्री। जटामांस्याम्। वै निघ. ।

**आश्विनौ** । पु । अश्विनीकुमारद्वये। रत्ना ।

**अश्विभैषजम्** । क्ली। लघुभैषज्या। (मेडा शिंग)। वै.निघ. ।

**अश्वीघृतम्** । क्ली। घोटकीक्षीरोत्थनवनीतज घृते। गुणा. कटु मधुरं कषायम् ईषद्दीपन गुरु मूर्च्छाहर वातात्पाकरच। रा नि व १५।

**अश्वीदधि** । क्ली। घोटकीदुग्धजातदधनि। घोडीर दई। म घोडिचेदहि। क कुदिरेयसी सरु। गुणा —"मधुरकषायरुच कफरोगमूर्च्छा हर ईषदातल दीपन नेत्रदोषघ्न।"रा नि.व १५।

**अश्वीनवनीतम्** । क्ली। घोटकीदुग्धजातन- वनीते घोडार छूधेर ननी। गुणा — कषाय वातकफघ्नं चक्षुष्य कटु उष्ण इषदातलघ। रा.नि. व १५। [मि.यथिर्क।

**अश्वीयम्** । क्ली। अश्वसमूहे। वि। अश्वहित।

**अश्वीक्षीरम्** । क्ली। घोटकीदुग्धे। गुणा — उष्ण रुच बल्य वातकफघ्न—एकशफक्षीरमोर्ष्ण लवणाम्लं लघु स्वादु च। मद व.८।

**अश्वेता** । स्त्री। कृष्णापराजितायाम्। कृष्णाति विषायाम्। वै निघ । गाम्भारीवृक्षे। रा नि ।

**अष्टकट्वरतैलम्** । क्ली। तैलमिद वातरो जरसामे च हितम्। तैल ४ श दधि ४ श तक्र १२ श पिप्पलीशुण्ठ्यौ प्रत्येक पलद्वय (मतान्तरे मिलितपलद्वयम्)। यथाविधि पाच्यम्। च द ऊ रु चि। अत्रेडदधि अष्टतक्र ग्राह्यम्। रस र.।

**अष्टकर्म** । क्ली। अष्टादशसंस्कर्माणां मध्ये स्वेदनादिदीपनपर्यन्ते सूतस्याष्टविधसंस्कारे। स्वे दनं मर्दनञ्चैव मूर्च्छनोत्थापनं तथा। पातनं बो धनञ्चैव नियामनमतः परम्। दीपनञ्चेति संस्का रा सूतस्याष्टौ प्रकीर्तिता ॥ र सा सं.। त्रिकटु त्रिफला चित्रकक्याथयुक्ते काञ्जिके चतुर्गुणस्वेद दिनं स्वेदनम्। गृहधूमेष्टकाचूर्णदधिगुड सैन्धवैः षोडशांशैः सकाञ्जिके त्रिदिनं मर्दयेत्। त्रिफला चित्रककन्या वा मूर्च्छना। इत्यादि।

**अष्टका** । स्त्री। वृक्षभेदे। हे च । [श्रमे।

**अष्टगाधः** । पु । ऊर्णनाभे। नाकड्ना।

**अष्टगुणमण्डः** । पु। अष्टमुद्गतण्डुलान् धनु र्दशगुण तोय पक्वा, तत्र हिङ्गुसैन्धवधान्यको

मरिचपिप्पलीचूर्णानि संमिश्र्य असिद्धयके च श्रीते मर्द्धे। गुणाः—क्षुधावर्द्धनः बलकरः बस्तिशोधनश्च। वै.निघ.। अत्र तण्डुलस्याष्टभागाः मुद्गस्य च भवाः।

**अष्टधातुः** । पुं । स्वर्णरौप्यताम्रशीषपित्तलरङ्गकान्तलौहमुण्डलौहतीक्ष्णलौहेषु । र.सा.सं.टी.।

**अष्टपदी** । स्त्री । वेल इति ख्याते पुष्पवृक्षे। বেলফুলের গাছ। गुणाः—शीता लघु कफपित्तविषघ्नी च। मद.व.३। [भा.।

**अष्टपलम्** । क्ली । शरावमाने। এক সের।

**अष्टपलघृतम्** । क्ली । ग्रहणीरोगे। पाकविधिः—मरिचादि १ प गुडं १ प घृतं ८ प. वारि ३१ प. एकत्र पाच्यम्। च.द.।

**अष्टपात् (दः)** । पुं । काश्मीरदेशीयशरभे। मद.व.१२। ऊर्णनाभे। हे.च.४का.।

**अष्टपादपः** । पुं । वृक्षभेदे। वै.निघ.।

**अष्टपादिका** । स्त्री । मारदर्नाल्लिकायाम्। कार्ष्ठमल्लिका। रत्ना.। आस्फोतायां। হাপর-মালী। प.मु.व.११।

**अष्टभावः** । पुं । स्तम्भ स्वेद रोमाञ्च स्वरभङ्ग वैस्वर्य्य कम्प वैवर्ण्याश्रुपातेषु। वै निघ.।

**अष्टमङ्गलः** । पुं । पुच्छोर:खुरकेशास्ये: श्वेते वाजिनि। हे.च.। यस्य पादाः सिताः सर्व्वे पुच्छं वक्षो मुखं तथा। मूर्द्धजाश्च सिता यस्य तं विद्यादष्टमङ्गलम्॥ श.द.२श्र। क्ली। ब्राह्मणगवाग्नि स्वर्णघृतसूर्य्याम्बुपचावधर्येषु। वै.निघ.।

**अष्टमङ्गलघृतम्** । क्ली । बालरोगशमने सर्व्वेषि। सर्व्वाष्टौषधिपर्क बालानां हितम्। वचाकुष्ठ ब्राह्मीसर्षपशारिवासैन्धवपिप्पलीकल्केनाष्टमं घृतं घृतपाकविधिना पाच्यम्। घृत ४ श्र. कल्कद्रव्यवचादीनां मिलितशरावं दत्त्वा जलाढकेन पाच्यं। च.द.बाल.चि.। भा. रस.र.।

**अष्टमधुजातिः** । स्त्री । माधिक भामर चौद्र पौत्तिक छात्रकार्घ्योद्दालदालेषु। वै.निघ.।

**अष्टमानम्** । क्ली । मधुतिद्वये, ३२ तो.। আধ সের। प.प्र.१ख। [प्र.१ख।

**अष्टमिका** । स्त्री । तोलचतुष्टयपरिमाणे। प.

**अष्टमी** । स्त्री । चीरकाकोल्याम्। वै निघ.।

**अष्टमूत्रम्** । क्ली । गोच्छागमेषमहिषाश्वहस्तखरगर्द्दभमूत्रेषु। वै.निघ.।

**अष्टमूलम्** । त्रि । त्वगाङ्गिराशायुश्चिसन्धिकोष्ठामर्म्मसु। सु चि.१म.।

**अष्टमौक्तिकस्थानम्** । क्ली । मङ्गहस्तिसर्पमत्स्यमेघवंशशूकरशङ्खेषु। वै.निघ.।

**अष्टलौहकम्** । क्ली । स्वर्णरौप्यताम्ररङ्गशीषपित्तलकान्तलौहमुण्डलौहतीक्ष्णलौहेषु। पञ्चलौहसमायुक्तं कान्तमुण्डकतीक्ष्णकम्। कल्पितः कथितो धीरैरष्टलोहाभिधो गणः॥ रा.नि व.२२।

**अष्टवर्गः** । पुं । A class of eight principal medicaments, Rishabhaka &c. मेदाद्यष्टौषधिगणे। यथा—मेदामहामेदाजीवकर्षभकऋद्धिवृद्धिकाकोलीक्षीरकाकोलीषु। प.मु.। जीवकर्षभकौ मेदे काकोल्यावृद्धिवृद्धिकौ। एकत्र मिलितैरेतैरष्टवर्गः प्रकीर्त्तितः॥ रा.नि व १२। गुणाः—"शीतलोऽतिगुरुः बलः बृंहण. दाहपित्तरक्तशोषघ्नः स्तन्यकृत् गर्भदायकः।" मद.व.१। "रक्तपित्तक्षयवायुपित्तनाशकः।" राज.। "हिमः स्वादुः बृंहण. गुरुः भग्नसन्धानकृत् कामवलासवलवर्द्धनः तृषादाहज्वरमेहक्षयहरः।" भा.पू.१भ.।

**अष्टवर्गप्रतिनिधिः** । पुं । मेदादीनामभावे तत्तुल्यगुणद्रव्यग्रहणे। तत्र मेदामहामेदाभावे शतावरी, जीवकर्षभकस्थाने भूमिकुष्माण्डमूलं, काकोलीक्षीरकाकोल्यभावे अश्वगन्धामूलं, ऋद्धिवृद्धिस्थाने वाराहीकन्दं तत्तुल्यगुणं क्षिपेत्। भा.पू.१भ.। "मेदाभावे अश्वगन्धा महामेदे च शारिवा। जीवकर्षभकाभावे गुडूची वंशलोचना। ऋद्ध्यभावे बला देया वृद्ध्यभावे महाबला।" इति च मतान्तरम्। [भोज्यभक्ष्यनिपेयरूपे भोजनद्रव्ये।

**अष्टविधान्नम्** । क्ली । चर्व्यचोष्यलेह्यपेयखाद्य-

**अष्टाङ्गम्** । क्ली । आयुर्व्वेदस्य खण्डाष्टके। तद्यथा—शल्यं, शालाक्यं, कायचिकित्सा, भूतविद्या, कौमारभृत्यं, अगदतन्त्रं, रसायनं, वाजीकरणञ्चेति। कायबालग्रहोर्द्धाङ्गशल्यदंष्ट्राजरावृषान्। अष्टावङ्गानि तस्याहुः। वा.मृ.१श्र। দ্রব্যাভিধানগদনিশ্চয় শল্য কায-ভূতনিগ্রহ বিষনিগ্রহ বালচিকিৎসা চ। বৈদ্যকম্। . . . .

**ऊषणम्** । क्ली । मरिचे । 'ऊषणं मरिचे क्लीबम् ।' मेदिनिक । प सु । भा पू १भ ह व । पिप्पल्यां च द.कफघ्न चि सिन्दुवारादि । "सिन्दुवारदलक्वाथः सोषणः कफजे ज्वरे ।" शुण्ठ्याम् । भा पू १भ ह व । पिप्पलीमूले । भा.पू १भ ह व । पु । चित्रकवृक्षे । भा पू १भ ह व ।

**ऊषणा** । स्त्री । पिप्पल्याम् । रा नि व ६ । भा पू १भ ह व । चविकायाम् प सु. । See चव्यम् । शुण्ठ्या । वै निघ. ।

**ऊषरः** । पु । क्षारभूमौ । रा नि व.२ ।

**ऊषरक(ज)म्** । क्ली । औषरके । पांशुलवणे । औषरलवणे । रोमकनामायस्कान्तभेदे रा नि व १३ ।

**ऊषरलवणम्** । क्ली । स्वनामख्यातलवणे, घासविशेषे । गुणा —बलद रुच्य पशूनां हितश्च । रा नि व ८ ।

**ऊषवान्** । त्रि । ऊषरे । अम ।

**ऊषसूतम्** । क्ली । मृत्तिकालवणे । "ऊषसूतवालुकैलं शैलमूलाकरोद्भव । लवणं कटुकं छेदि विहितं कटु चोच्यते ॥ सु सू.४६ष ।

**ऊषक्षारः** । पु । क्षारमृत्तिकायाम् । लोणी माटी । गुणा —"ऊष्णोऽनिलघ्न प्रक्लेदी ऊषक्षारी बलापह ।" सु सू ४६ष. ।

**ऊषाकरः** । पु । कुक्कुटे । श.र ।

**ऊषापानम्** । क्ली । प्रत्यूषजलपाने । तस्य विधिगुणा —"अथम प्रसृतीरष्टौ रवावनुदिते पिबेत् । वातपित्तकफान जित्वा जीवेद्वर्षशतं सुखी ॥ तथा — अर्श शोथग्रहण्यो ज्वरजठरजराकुष्ठमेदोविकारा मूत्राघातास्तु पित्तश्रवणगलशिर श्रोणिशूलाक्षिरोगा । ये चान्ये वातपित्तक्षतजकफकृता व्याधय सन्ति जन्तोस्तांस्तानभ्यासयोगादपहरति पय पीतमन्ते निशाया ॥ विगतघननिशीथे प्रातरुत्थाय नित्य पिबति खलु नरो यो नासरन्ध्रेण वारि । स भवति मतिपूर्णश्चक्षुषा तार्क्ष्यतुल्यो बलिपलितविहीन सर्वगात्रैर्विमुक्त ॥"भा ।

**ऊष्मकः** । पु । पित्ते । रा.नि व । ग्रीष्मऋतौ । ज्यैष्ठाषाढौ ग्रीष्मऋतु ।

**ऊष्मा** । पु उष्णतायाम् । क्षयरोगे । वै निघ. ।

**ऊष्मापहः** । पु । हेमन्तऋतौ । वै.निघ. ।

**ऊहः** । पु । तर्के ।

**ऊहिनी** । स्त्री । सम्मार्जन्याम् । झाँटी ।

**ऊह्यम्** । क्ली । "यदनिर्दिष्टं बुद्धिमता तदूह्यं ।" सु उ ६५ष. ।

## ऋट

**ऋकथम्** । क्ली । स्वर्णे । धने । अम. । सु सू ३८ष । [ष. ।

**ऋची(जी)षम्** । क्ली । भ्राष्टे । ताओयां । हे

**ऋजीकः** । पु । धूमे ।

**ऋजुश्रेणी** । स्त्री । मूर्वायां । रत्ना. ।

**ऋजुसर्पः** । पुं । सर्पविशेषे । दर्वीकरसर्पे । सु कल्प ४ष. । See सर्प ।

**ऋतम्** । क्ली । जले । मे ।

**ऋतुः** । पुं । वसन्तादिषड्विधकाले । रवे राशिसंक्रमात् यत्र दोषाणां चयकोपशमा भवन्ति ते ऋतव उच्यन्ते । "चयकोपशमा यस्मिन् दोषाणां सम्भवन्ति हि । ऋतुषट्कं तदाख्यातं रवे राशिषु संक्रमात् ।" भा पू १भ ऋतुचर्या । ते च शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्तसंज्ञा दोषोपचयप्रकोपोपशमननिमित्तानि भवन्ति । तदुक्तं —"माघादयो द्वादशमासा द्विमासिकऋतुकल्पा षड्ऋतवो भवन्ति । ते शिशिरवसन्तग्रीष्मवर्षाशरद्धेमन्ता । तेषां तपस्तपस्यौ शिशिर , मधुमाधवौ वसन्त , शुचिशुक्रौ ग्रीष्म , नभोनभस्यौ वर्षा , इषोर्जौ शरत्, सहसहस्यौ हेमन्त इति । भाद्रपदाश्वयुजौ शरत्, कार्त्तिकमार्गशीर्षौ हेमन्त, पौषमाघौ शैत, फाल्गुनचैत्रौ वसन्त , वैशाखज्येष्ठौ ग्रीष्म , आषाढश्रावणौ प्रावृडिति" च मतान्तर । सु सू.६ष. । पौषौ मिथुनौ ग्रीष्म प्रावृण्मिथुनकर्कटौ । सिंहकन्ये स्मृता वर्षा तुला वृश्चिकयो शरत् धनुर्ग्राहौ च हेमन्तो वसन्त. कुम्भमीनयो । अन्. ।

ऋतौ तु तस्य भेदत्रयं स्वीकुर्व्वन्ति यथा—शीतग्रीष्मवर्षा । तत्र फाल्गुनादिज्यैष्ठान्ता ग्रीष्मः, आषाढाद्याश्विनान्ता वर्षा, कार्त्तिकादिमाघान्ता शीत इति । ऋतुलक्षणादिकं यथा—"तत्र वर्षास्वोषधयस्तरुण्योऽल्पवीर्य्या आपश्चाप्रसन्नाः क्षितिमलप्रायास्ता उपयुज्यमाना नभसि मेघावतते जलप्रक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातविष्टम्भिताग्नीनां विदह्यन्ते, विदाहात् पित्तसञ्चयमापादयन्ति, स सञ्चयः शरदि प्रविरलमेघे वियत्युपशुष्यति पङ्केऽर्ककिरणप्रविलापितः पैत्तिकान् व्याधीन् जनयति । ता एवौषधयः कालपरिणामात् परिणतवीर्य्या बलवत्यो हेमन्ते भवन्त्यापश्च प्रसन्नाः स्निग्धा अत्यर्थं गुर्व्यस्ता उपयुज्यमाना मन्दकिरणत्वाद्भानोः सतुषारपवनोपस्तम्भितदेहानां देहिनामविदग्धाः स्नेहाच्छैत्याद्गौरवादुपलेपाच्च श्लेष्मसञ्चयमापादयन्ति, स सञ्चयो वसन्तेऽर्करश्मिप्रविलापित ईषत्स्तब्धदेहानां देहिनां श्लैष्मिकान् व्याधीन् जनयति । ता एवौषधयो निदाघे निःसारा रूक्षा अतिमात्रं लघ्व्यो भवन्त्यापश्च ता उपयुज्यमानाः सूर्य्यप्रतापोपशोषितदेहानां देहिनां रौक्ष्याल्लघुत्वाद्वैशद्याच्च वायोः सञ्चयमापादयन्ति, स सञ्चयः प्रावृषि चात्यर्थं जलोपक्लिन्नायां भूमौ क्लिन्नदेहानां प्राणिनां शीतवातवर्षेरितो वातिकान् व्याधीन् जनयति । तत्र पूर्व्वाह्णे वसन्तस्य लिङ्गं मध्याह्ने ग्रीष्मस्यापराह्णे प्रावृषः प्रदोषे वार्षिकं शारदमर्द्धरात्रे प्रत्यूषसि हैमन्तमुपलक्षयेत् । एवमहोरात्रमपि वर्षमिव शीतोष्णवर्षलक्षणं दोषोपचयप्रकोपोपशमैर्जानीयात् । ऋतूनामत ऊर्द्ध्वमव्यापन्नानां लक्षणानि यथा—वायुर्व्वात्युत्तरः शीतो रजोधूमाकुला दिशः । छन्नस्तुषारैः सविता हिमानद्धा जलाशयाः ॥ दर्पिता ध्वाङ्क्षखड्गाह्वमहिषोरभ्रकुञ्जराः । रोध्रप्रियङ्गुपुन्नागाः पुष्पिता हिमसाह्वये ॥ शिशिरे शीतमधिकं वातवृष्ट्याकुला दिशः । शेषं हेमन्तवत् सर्व्वं विज्ञेयं लक्षणं बुधैः । दिशो वसन्ते विमलाः काननैरुपशोभिताः । किंशुकाम्भोजवकुलचूताशोकादिपुष्पितैः ॥ कोकिलाषट्पदगणैरुपगीता मनोहराः । दक्षिणानिलसंवीताः सुमुखाः पल्लवोज्ज्वलाः ॥ ग्रीष्मे तीक्ष्णांशुरादित्यो मारुतो नैर्ऋतोऽसुखः । भूरुष्णा सरितस्तन्व्यो दिशः प्रज्वलिता इव ॥ भ्रान्तचक्राह्वयुगलाः पयःपानाकुला मृगाः । ध्वस्तवीरुत्तृणलता विपर्णाङ्घ्रिपपादपाः ।

प्रावृष्यम्बरमानद्धं पश्चिमानिलकर्षितैः । अम्बुदैर्विद्युदुद्योतप्रस्रुतैस्तुमुलस्वनैः ॥ कोमलश्यामशस्याढ्या शक्रगोपोज्ज्वला मही । कदम्बनीपकुटजसर्ज्जकेतकिभूषिता ॥ तत्र वर्षासु नद्योऽम्भःपूरोद्ध्वस्ततटद्रुमाः । वाप्यः प्रोत्फुल्लकुमुदनीलोत्पलविराजिताः ॥ भूरव्यक्तस्थलश्वभ्रा बहुशस्योपशोभिता । नातिगर्जत्स्रवन्मेघनिरुद्धार्कग्रहं नभः ॥ बभूवुरुष्णः शरदर्कः श्वेताभ्रविमलं नभः । तथा सरांस्यम्बुरुहैर्भान्ति हंसांसघट्टितैः ॥ पङ्कशुष्कद्रुमाकीर्णा निम्नोन्नतसमेषु भूः । बाणासनाह्वबन्धूकाकाशासनविराजिता ॥ स्वगुणैरतियुक्तेषु विपरीतेषु वा पुनः । विषमेष्वपि वा दोषाः कुप्यन्त्यृतुषु देहिनाम् ॥ हरेद्वसन्ते श्लेष्माणं पित्तं शरदि निर्हरेत् । वर्षासु शमयेद्वायुं प्राग्विकारसमुच्छ्रयात् ॥" सुश्रुते ६ अ. । स्त्रीकुसुमे । अम. । See पुष्प, आर्त्तव ।

**ऋतुजन्मा ।** स्त्री । पुनर्नवायाम् ।

**ऋतुपरीक्षा ।** स्त्री । आर्त्तवपरीक्षायाम् । तद्यथा—"ऋतौ कण्डूयनं योनौ क्वचिदङ्गे च वेदना । बाहुल्यं स्वल्पता वापि चानुवन्धित्वमस्य वा ॥ सदोषं सर्व्वथा वापि वैद्यान्येतानि यत्नतः । भामशैल्वखिलेष्वेव भिषग्भिर्योषितां सदा ॥" अत्रि. ।

**ऋतुमती ।** त्रि । रजस्वलायां स्त्रियाम् । तल्लक्षणं यथा— "पीनप्रसन्नवदनां प्रक्लिन्नात्ममुखद्विजाम् । नरकामां प्रियकथां स्रस्तकुक्ष्यक्षिमूर्द्धजाम् ॥ स्फुरद्भुजकुचश्रोणिनाभ्यूरुजघनस्फिचम् । हर्षौत्सुक्यपराञ्चापि विद्यादृतुमतीमिति ॥ नियतं दिवसेऽतीते सङ्कुचत्यम्बुजं यथा । ऋतौ व्यतीते नार्य्यास्तु योनिः संव्रियते तथा ॥ मासेनोपचितं काले धमनीभ्यां तदार्त्तवम् । ईषत्कृष्णं विगन्धञ्च वायुर्योनिमुखं नयेत् ॥ तद्वर्षाद्‌द्वादशात्काले वर्त्तमानमसृक् पुनः । जरापक्वशरीराणां याति पञ्चाशतः क्षयम् ॥" सु. शा. ३ अ. ।

**ऋतुराजः ।** पुं । वसन्तऋतौ । राजनि. २१ ।

**ऋतुविपर्य्ययः ।** पुं । ऋतुव्यापदि । वसन्तादिस्थाने शरदादिधर्म्मप्रवृत्तौ ।

**ऋतुवैषम्यम् ।** क्ली । ऋतुचर्य्याविपरीताचरणे । भा. प्र. ४ अ. । "क्रोधर्त्तुवैषम्यशिरोभितापैः ।"

**ऋतुशूलम् ।** क्ली । ऋतुकाले रजोरोधजन्यशूलरोगे । "पुष्पस्य वातादिभिर्हतत्वं तस्य कारणं ।

बहुल पिच्छिल स्निग्ध घन स्रवति शोणितं । यो नो नाभौ तु शूलानि कर्तौ भरमदारुणम् ।" रत्न र यो व्या चि ।

**ऋतुषट्कम्** । क्ली । हिमशिशिरवसन्तग्रीष्म वर्षाशरत्सु । "चयकोपसमा यस्मिन दोषाणां स भवन्ति हि । ऋतुषट्क सदाख्यात रवेराशिषु स क्रमात् ॥" भा ।

**ऋतुसन्धि.** । पु ऋतुद्वयसन्धिसमये । स च ऋतुद्वयस्याद्यन्तसप्ताहरूप । तदुक्त "ऋत्वोरन्त्या दिसप्ताहावृतुसन्धिरिति स्मृत । तत्र पूर्वोविधि स्त्याज्य सेवनीय परो विधिरिति ॥" वा ।

**ऋतुसम्मिता** । स्त्री । सुनिखर्जूरिकायाम् । वै निघ ।

**ऋतुस्नाता** । स्त्री । रजोदर्शनाच्चतुर्थेऽह्नि स्नातायाम् । "पूर्वं पश्येदृतुस्नाता यादृश नरमङ्गना । तादृश जनयेत्पुत्र तत पश्येत्पति प्रिय ॥" सु शा २ अ ।

**ऋतुहरीतकी** । स्त्री । ऋतौ ऋतौ हरीतकीभक्षणविधौ । यथा—"सिन्धूत्थशर्कराशुण्ठी कणामधुगुडै क्रमात् । वर्षादिष्वभया सेव्या रसायनगुणैषिणा ।' च द । भद्रारस्तु ग्रीष्ममधिकृत्याह । ग्रीष्मे तुल्यगुडां सुसैन्धवयुतां मेघावनद्धाम्बरे साडं शर्करया शरद्यमलया शुण्ठ्या तुषारागमे । पिप्पल्या शिशिरे वसन्तसमये क्षौद्रेण संयोजितामित्थं प्राश्य हरीतकीमिव रुजो नश्यन्तु ते शत्रव ॥ प्रयोगा वाजी । [धान्ये । निर्तुषीकृतधान्ये । च टी.]

**ऋदम्** । क्ली । सम्पक्वधान्ये । अम. । पक्वमर्दित

**ऋद्धि.** । स्त्री । कोशयामलप्रसिद्धे ऋद्धिरद्धीति च गौडप्रसिद्धे स्वनामख्यातलताकन्दे । तदुक्त "ऋद्धिर्वृद्धिश्च द्वौ कन्दौ भवत कोशयामले । तत रोमान्वित कन्दो लताजात सरन्ध्रक । तूलग्रन्थि समा ऋद्धिर्वामावर्तफला च सा । प्रयोगेष्वनयोरेक यथालाभ प्रयोजयेत् ॥ रा.नि व ५ । गुणा —ऋद्धिरुष्णतुल्या बल्या त्रिदोषघ्नी शुक्रला मधुरा गुरु बलैश्वर्यकरी मूर्च्छारक्तपित्तहरी च । भा पू १ भ । महायामक्वा । वा सू.१५ पद्मकादी चक च । "पद्मकपुण्ड्रौ वृद्धिरुग्धर्द्ध । एतदभावे वाराही योज्या ।"

**ऋद्धिजा** । स्त्री । सर्पगन्धायां । गन्धनाकुल्यां । प मु. । अस्या कन्दीयाद्य । भा म १ भ ।

**ऋश्य' (ष्य)** । मृगी । रुरुमृगी । "ऋश्यो नीला ङ्की लोके स रोह इति कीर्तित ।" भा म १ म । तन्मांसगुणा —कषायं मधुर वातघ्न पित्तघ्न ह्य तीर्थं वस्तिशोधनच । सु सू ४६ अ ।

**ऋषभः** । पु । ऋषभके । कर्मरङ्गे । कुबेर पुच्छे । मी । सु चि १७ अ बलीवर्द्दे । वृष । मांस गुणा —अतिगुरु स्निग्ध पित्तश्लेष्मवर्द्धन वृष्य बा तघ्न बल्य पीनसघ्न । भा पू १ भ ।

**ऋषभकः** । पु । One of the eight medicaments, carpopogon pruriens स्वनामख्यातौषधे । ऋषभ इति गौडे काश्मीरे च प्रसिद्ध । वृषभक । जीवकर्षभकयोरुत्पत्तिमाह मिश्रभाव —"जीवकर्षभकौ ज्ञेयौ हिमाद्रिशिख रोद्भवौ । रसोनकन्दवत्कन्दौ नि सारौ सूक्ष्मपत्रकौ । जीवक कूर्चकाकार ऋषभो वृषशृङ्गवत् ।" गुणा —जीवकर्षभकौ बल्यौ शीतौ शुक्रकफप्रदौ । एतदभावे विदारीमूल प्रयोज्यम् । भा पू १ भ । मधुर शीत पित्तरक्तविकारनुत् । शुक्रश्लेष्मकरी दाहक्षयज्वरहरश्च स । रा नि व ५ । "ऋषभको वृषभक ।" सु चि ८ अ ।

**ऋषभी** । स्त्री । कपिकच्छुलतायाम् । आत्मगुप्ता । र मा । नराकारयोषिति । शिरालायाम् । विधवायाम् । शभविक ।

**ऋषिः** । पु । गोरोचनायां । वै निघ । [प मु]

**ऋषिकम्** । क्लो । लताविशेषे । सियारिलता ।

**ऋषिजाङ्गलक. (ला) (लिका, की)** । स्त्री । ऋषभमाषायाम् । सर्पगन्धा । रत्ना ।

**ऋषिपुष्पकः** । पु । दमनकवृक्षे । वै.निघ ।

**ऋषिप्रोक्ता** । स्त्री । माषपर्णीलतायां । प मु ।

**ऋषिश्रेष्ठः** । पु । पुण्डरीकवृक्षे । ऋद्धौ ।

**ऋषिश्रेष्ठा** । स्त्री । ऋद्धौ । वृद्धौ । वै निघ ।

**ऋषिसृष्टा** । स्त्री । ऋद्धौ । मद व १ ।

**ऋषीकः** । पुं । काशवृक्षे । मद व १ ।

**ऋष्य.** । पु । हरिणे । श्वेतकुष्ठे । र्वदर्ष ।

**एकवीरः** । पुं । स्वनामख्यातवृक्षविशेषे । एकवीर । गंडविकेका । गुणाः—कटुकः तीव्रवातघ्नः स्रवः गृध्रसीकटिशूलाभिघातघ्नः । रा नि व.८ ।

**एकवीरा** । स्त्री । वन्ध्याकर्कोट्याम् । गुणाः— "एकवीरा स्मृता तिक्ता चात्युष्णा वातहा स्मृता । पक्षाघातं पृष्ठकटीशूलञ्चैव विनाशयेत्॥" वै.निघ ।

**एकवृन्दः** । पुं । तन्नामककण्ठरोगविशेषे । येन दुष्टकफशोणिताभ्यां कण्ठे दाहकण्डूमदोषत्पाकी-यश्च मृदुरुन्नतो वृत्तश्च शोथो जायते । लक्षणं— "वृत्तोन्नतो यः श्वयथुः सदाहः कण्ड्वन्वितोऽपाकि-मृदुर्गुरुश्च । नाम्नैकवृन्दः परिकीर्तितोऽसौ व्याधिर्बलासक्षतजप्रसूतः ॥" सु.नि.१६अ. । मा.नि ।

**एकवृचः** । पुं । गलरोगे । वै निघ ।

**एकशफः** । पुं । घोटके । चिका । एकखुर जन्तुमात्रे । यथा—"खरोऽश्वोऽश्वतरो गौरः शर भश्चमरी तथा । एते चैकशफा ख्याताः ।" भा ।

**एकशफक्षीरम्** । क्ली। अविभागखुरपशुदुग्धे । थुरयोड़ा पशुमात्रेर दुध । गुणा —उष्णं लवणं लघु शाखावातहरं साम्लमीषल्लवणं जडता करमिति । वा.टी.हेमा । [प सु ।

**एकशिखा** । स्त्री । पाठायाम् । आम्बनादि ।

**एकशृङ्गः** । पुं । मण्डुके । गओवि । वै निघ. ।

**एकहस्ती** । स्त्री । अश्वस्य शोभनवल्गामेदे । "विह्वली चैकहस्ती च शुभगा शोभना मता ।" ज.द.७अ. ।

**एकहायनी** । स्त्री। एकवर्षीयायां गवि । अम.।

**एकाङ्गम्** । क्ली । चन्दने । हारा. ।

**एकाङ्गवातः** । पुं। पक्षवधरोगे । पक्षाघात। मा.नि. । See पक्षवध. । अश्वस्य वातव्याधिरोग विशेषे । "एक. प्रसक्तवते कर्णः शरीराद्धं च गृध्य-ति । शूली भवति यादृश रोगे एकाङ्गसञ्ज्ञके ॥" ज.द ५५अ ।

**एकाङ्गी** । स्त्री । सुरामांसी । मुरामांसी नामक गन्धद्रव्यविशेष । गुणाः—तिक्ता हिमा स्वादी लघु वातपित्तघ्नी ज्वरभूतज्वरघोषी कुष्ठ-कासघ्नी च । भा पू १भ. । कटुः कषाया भमम् श्वांडलाविषदाहघ्नी च । रा नि व १२ ।

**एकाण्डः** । पुं । तन्नामकदोषान्विताश्वे । "एकेन लम्बमानेन मुष्केणैकाण्डसंज्ञकः । ज.द १अ.।

**एकादशशतिकमहाप्रसारणीतैलम्** । क्ली । वातव्याधौ । "शाखामूलदलैः प्रसारणितुलास्त्रिसः कुरण्टीतुले, छिन्नायाश्च तुले तुले स्वकती रास्नाशिरीषात्तुला । देवाह्वाश्च सकेतकाष्टमते नि-क्वाथ्य कुम्भाष्टिके, तोये तैलघटं तुषाम्बुकलसी दस्त्वाढकं मस्तुनः ॥ शुक्ताच्छागरसाद्धयेक्षुरसत. क्षीरात्र दस्त्वाढकं,पृक्काकर्कटजीवकाद्यविकषा काकोलिकाकच्छुरा. । मूर्च्छा घनसारकुन्दुसरला काश्मीरमासीनखैः, कालीयोत्पलपद्मकाद्वयनिशा कक्कोलकग्रन्थिकैः ॥ चाम्येयाभयचोचपूगकटुकाजातीफलाभीरुभि, श्रीवासामरदारुचन्दनवचामैंद्रेयसिन्धूद्भवैः । तैलाम्भोदकटम्भराहिमलिनाङ्गीरकशीरकैः,कस्तूरीदशमूलकेतकनतश्यामाश्वगन्धांशुभि । कौन्तीतार्क्ष्यजशल्लकीफललघुश्यामाशताह्वाम्बैः , भल्लातत्रिफलाब्जकेशरमहाश्यामालवङ्गान्वितैः । सञ्चीर्वैश्चिपलैर्मैहीयसि पचेन्मन्देन पावकेऽग्निना ॥" তিলতৈল ৬৪শ. ক্বাথার্থ সমূলপত্রশাখ গন্ধভাদুলিয়া ৩১৷৷০শ নীলঝাঁটী, গুলঞ্চ, এবং মূল প্রত্যেকে ২৫শ. রাস্না, শিরীষছাল, দেবদারু, কেয়ার মূল প্রত্যেকে ৬।০ শ জল ৬৪০০ শ. শে ৬৪ শ. কাঁজি ৬৪ শ দধিদও ১৬শ. শুক্ত ১৬শ. ছাগমাংস ৮শ. জল ৬৪শ. শে ১৬ শ. ইক্ষুরস ১৬ শ. দুগ্ধ ১৬ শ । কল্কার্থ পিড়িং ফল, কাঁকড়াশৃঙ্গী, জীবনীয় দশক বা অষ্টবর্গ, কাকোলী, মঞ্জিষ্ঠা, ক্ষীর কাকোলী, আলকুশীর মূল, ছোট এলাইচ, কর্পূর, কুন্দুরখোটী, সরলকাষ্ঠ, কুঙ্কুম, জটামাংসী, নখী, কৃষ্ণাগুরু, নীলোৎপল, পদ্মকাষ্ঠ, হরিদ্রা, কঙ্কোল, গেঁঠেলা চাঁপাদি বা নাগেশ্বর, বেণার মূল, গুড়ত্বক্, গুপারি, জায়ফল, লতাকস্তুরী, শতমূলী, দেবদারু, শ্বেতচন্দন, বচ. শৈলজ, সৈন্ধব, শিলারস, মুতা, গন্ধভাদুলিয়া, পুনর্নবা, নালুকা, গন্ধশটী, মৃগনাভি, দশমূল, কেতকফল, প্রিয়ঙ্গু, শাল, কেয়া, তগরমূল, অশ্বগন্ধা, বালা, রেণুকা, রসাঞ্জন, শিমুলমূল, কটফল, অগুরু, শ্যামালতা বা অনন্তমূল, কুড়, ভেলার মুটী,ত্রিফলা, শুল্ফা, পদ্ম কেশর,

लवङ्ग, त्रिकटु প্রত্যেকে ৩পল। प्रयोगा भैष। ध्यामलिति पाठे गन्धतृणम्।

**एकादशायसः** । पु । अश्मरोगाधिकारे । पाठ —"सूताय पुरुष शुल्व खगो दरदगन्धकौ। गगन पुष्परागश्च शोणितश्चेश्वरोरगौ विडङ्गत्रि फलाहिङ्गुयमानीजीरकद्वय। सर्ज्जीफलवचाशृङ्गी मरिच पिप्पलीद्वय चवी दुरालभा वह्नि शुण्ठी द्रावैर्विमर्द्दयेत्॥" पुरुष रस। खग स्वर्णमाचिकम्। पुष्पराग तन्नामकमणि रसाञ्जन वा। शोणित कुङ्कुमं। ईश्वर पित्तल। रस र अभ्र चि। प्रयोगामृते तु शुल्वस्थाने शुद्ध शुण्ठीद्रावैर्विमर्द्दयेदित्यत्र 'भावयेदार्द्रकद्रवे' इति पाठान्तर। प्रयोगामृते पुरुष गुग्गुलु। पुष्परागं रसाञ्जन। शोणित ताम्र। ईश्वर रस। जारितलौह पारद गन्ध ताम्रं स्वर्णमाचिक अभ्र हिङ्गुल कुङ्कुम पोखराज मणि शीष पित्तल विडङ्ग त्रिफला हिङ्गु यमानी जीरकं कृष्णजीरकं पियालफलं वचा कर्कटशृङ्गी मरिच पिप्पली गजपिप्पली चवी दुरालभा चित्रकमूल एषां प्रति समभाग। आर्द्रकरसेन भाव्य।

**एकादशेन्द्रियम्** । क्ली। श्रोत्रत्वक्चचूरसनाघ्राणवाकपाणिपायूपस्थपादमन सु। एषु प्रथम पञ्चज्ञानेन्द्रिय, अन्यच कर्म्मेन्द्रिय। सु शा १अ।

**एकादिवीरः** । पु। एकवीरावृचे। वै निघ।

**एकान्तः** । पु। यदवधारणोच्यते। यथा— "त्रिवृद्विरेचयति मदनफलं वामयतीति।" सु उ ६५अ। [वै निघ.।

**एकाष्ठी** । स्त्री। कार्पासी। कार्पासवीजकोषे।

**एकाष्ठीका** । स्त्री। पाठायाम्। আকনাদি, निमूका। वै निघ.।

**एकाष्ठील.(ला)** पु,स्त्री। वकवृचे। अम। हि ब्रह्वील, सरी। भा पू १भ। (ला) पाठाया। र.मा। रा नि व ६। वनतिक्तिकायाम्। मे लचतुष्कं। पुष्पवृचभेदे। भा.पू १भ। See अगस्त्य।

**एकाह्ना** । स्त्री। एकवर्षीया गवि। अम.।

**एकाचः** । पु। काके। त्रि। एकनेत्रे। কাণা। श च। [—हिमं पित्तघ्न वातश्लेष्मकृच्च। मद.।

**एकैषिकतैलम्** । क्ली। तन्नामकतैले। गुणा

**एकैषि(कोशि)का** । स्त्री। वकपुष्पवृचे। पाठायाम्। আকনাদি। त्रिवृतायाम्। "एकैषिकाजशृङ्गी च"। सु सू ३६अ चि १७,१८अ। तत्तैल मधुरम् अतिशीत पित्तहर वातकोपन श्लेष्मवर्द्धनञ्च। सु.सू ४५अ। [छाडमूल। वै निघ।

**एकैषी** । स्त्री। पाठाया। আকনাদি। शं प

**एकोशि(षि)का** । स्त्री। पाठायाम्। আকনাদি। र मा। वकवृचे इति केचित्।

**एड** । त्रि। बधिरे। কালা। अम।

**एड़क (काख्यः)** । पु। पृथुशृङ्गमेषे। ভেড়া। प सु। वनच्छगले। त्रिका। 'एडका पृथुशृङ्ग स्यान्मेद पुच्छस्तु दुम्बक। एडकस्य पलं श्रेय मेषामिषसमं गुणै। मेद पुच्छोद्भव मांसं हृद्य वृष्य श्रमापहम्। पित्तश्लेष्मकर किञ्चिद्वात व्याधिविनाशनम्। भा पू १भ मासव.। तृणविशेषे। হোগলা। सु चि ७अ। मञ्जिष्ठाया। च।

**एडकघृतम्** । क्ली। एड़कनवनीतोत्थघृते। गुणा —अतिगुरुत्वाद्भच्यं सुकुमाराणाम्, बुद्धिपाटवकरं बलकरञ्च। रा नि व १५।

**एडका** । स्त्री। मेष्यां। ভেড়ী। अ टी रा।

**एडगज.(जा)** । पु, स्त्री। चक्रमर्द्दचुपे। চাকন্দা গাছ, চাটাকাটা इति च भाषा। रा नि व ५। भा पू १भ सोमराजतैले। च सू. २अ। वन्यैलायां। বন এলাচ। च द कुष्ठ चि।

**एडमूक** । त्रि। बधिरे। वाकश्रुतिवर्ज्जिते। কালা বোবা। मे कचतुष्क।

**एडहस्ती** । पु। चक्रमर्द्दे। চাকন্দা গাছ।

**एडुकः** । त्रि। बधिरे। मे।

**एणः** । पु। हरिणे। रा नि व.१८। कृष्णमृगविशेषे। কৃষ্ণসার হরিণ। हि करीसाइलहरिण। अयं जङ्गालजातीय। अस्य मांसगुणा —कषाय मधुर हृद्य रक्तपित्तकफवातघ्न रुचिकर धारकं बल्यं। सु सू.४६अ। भा पू १भ। विशेषतो ज्वरे प्रशस्तमिति चक्रपाणि। लघुशीतल वृष्य त्रिदोषहरं षड्रसज्ञ रुच्यञ्च। रा नि व १७। "शृङ्गिणां हरिण श्रेष्ठ बल्यो रोचनदीपन। त्रिदोषघ्नो लघु पाके मधुरो ज्वरिणा हित॥ चते चयार्शसी पाण्डुरोचकनिपीडिते। कामश्वासातुराणां च एणमास सुखावहम्॥" अत्रि २०अ।

**एणकः** । पुं । हरिणे । श.र. । कृष्णसारे ।

**एणीदाहः** । पुं । सन्निपातज्वरविशेषे । लक्षणं—"परिधावतीव गात्रे रुक्पात्रे भुजङ्गपतङ्गहरिणगण । वेपथुमत् सदाहस्यैणीदाहज्वरार्त्तस्य ।" भा.म.१भ. । [See सर्पः ।

**एणीपदः** । पुं । मण्डलिसर्पे । सु.कल्प.४अ ।

**एणीपदी** । स्त्री । असाध्यलूताभेदे । सु.काल्प. ८अ. । See लूता ।

**एतः** । पुं । हरिणे । श र. । घोटके ।

**एतनः** । पुं । निश्वासे । हे च ।

**एता** । स्त्री । हरिण्याम् । वै निघ ।

**एधतुः** । पु । पुरुषे । [निघ. । See एरका ।

**एरकम्** । क्ली । छागलत्वणे । ছোগলা । वै.

**एरका** । स्त्री । गुन्द्रातृणे । तृणविशेषे । ছোগলা । स शीर्षोदय । च.सू.२अ. । गुणा.—हिमा शुक्रवृद्धिकरी चक्षुष्या वातकोपना । मूत्रकृच्छ्राश्मरी दाहपित्तशोणितघ्नी च । रा.नि व.८ । शीता ष्ण्या चक्षुष्या वातकोपनी मूत्रकृच्छ्राश्मरीदाहपित्तशोणितघ्नी च । भा.पू १भ. ।

**एरङ्गः (ङ्गी)** । पुं, स्त्री । मत्स्यभेदे । অরঙ্গা মাছ, এবেং মাছ, নামকড়া । हि भरङ्गा । गुणाः—मधुरः स्निग्धः विष्टम्भी शीतल गुरुश्च । भा.पू.१भ.मत्स्यव. । मञ्जिष्ठायाम् । च. ।

**एरण्डः** । पुं । Castor oil plant. (Ricinus communis.) स्वनामख्यातवृक्षविशेषे । ভেরেণ্ডা গাছ । हिं एरण्ड, रेंडि । तें आमिदपुचेट्टु । एरण्ड. त्रिविधः स्थूलशुक्लरक्तभेदेन गुणा. —मधुरोष्णः गुरु.शूलशोथकटिमूत्रवस्तिशूलशिरः शूलोदरज्वरब्रध्नश्वासकफानाहकासकुष्ठामदोषवातहरश्च । तत्कोमलपत्रं गुल्मवस्तिशूलकफवायुकृमिहद्धिघ्नम् । तन्मज्जगुणाः—मलभेदकः वातकफोदरघ्नश्च । भा.पू १भ.गु व । श्वेतैरण्डस्य मूलगुणा.— शूलवायुकफनाशित्वं शुक्रजनकत्वं । आमवातनाशित्व अतिदीपनत्व पित्तकोपनत्वञ्च । राज । श्वेतादीनां गुणा. स्वस्वपर्य्याये मन्तव्याः ।

**एरण्डकः** । पु । एरण्डे । भरत. ।

**एरण्डजम्** । क्ली । एरण्डतैले । वा. ।

**एरण्डतैलम्** । क्ली । Castor oil. एरण्ड बीजोद्भवतैले । प्रा.एरतेल । ভেরেণ্ডার তৈল । हि रेंढिका तेल । गुणाः—मधुरगुरुश्लेष्मवर्द्धकत्वं वातरक्तगुल्महृद्रोगाजीर्णज्वरघ्नत्वञ्च । राज । तैलं तिक्तं ईषत्कटुकं रेचकं गुल्मानिलकफोदरमुष्कवृद्धिविषमज्वरकट्यादिशोथरुजश्च जयेत् । तीक्ष्णोष्णं पिच्छिलं विस्रश्चेति रक्तैरण्डजतैलगुणा । वा टी. हेमा तैलव । एरण्डतैलं क्रिमिदोषनाशन वातामयघ्नं सर्व्वाङ्गशूलघ्नं । कुष्ठघ्नं स्वादु रसायने श्रेष्ठ पित्तकोपन अतिदीपनञ्च । रा नि व.१५ । "एरण्डज घनञ्चापि शीतमेव मदुधृतं । इक्षुसिताख्यूकमूलानाहविबन्धनुत् ॥ तैलमेरण्डजं मन्द्र गुरूष्णं मधुरं तथा । तीक्ष्णोष्णं पिच्छिलं विस्रक्तमेरण्डसम्भवम् ॥ अत्रि.१४अ ।

**एरण्डतैलमूर्च्छा** । स्त्री । मूर्च्छाद्रव्याणि— मञ्जिष्ठा मुस्तकं धान्य त्रिफला जयन्तीपत्रं वालक वनखर्ज्जूरी वटशुङ्गा हरिद्रा दारुहरिद्रा नलिका केतकी (কেয়ার নামাল) दधि काञ्जिकञ्च । हरिद्रादिपर्य्यायेण पूर्व्ववत् मूर्च्छा कार्या ।

**एरण्डपत्रिका (त्रिका) (त्री)** । स्त्री । क्षुद्रदन्तीवृक्षे । रा नि व ६ ।

**एरण्डफला** । स्त्री । क्षुद्रदन्तीवृक्षे । रा.नि व.६ । भा.पू.१भ. ।

**एरण्डमूलम्** । क्ली । एरण्डशिफायां । चर विषमज्व.चि." एरण्डमूलसिद्धं वा ।"

**एरण्डबीजम्** । क्ली । एरण्डफले ।

**एरण्डशिफा** । स्त्री । एरण्डमूले । भा.वा.व्या ।

**एरण्डसप्त(द्वादश)कः** । पु । क्वाथभेदे । अत्र व्यासादीनां मानचतुष्टयं प्रदेयम् । मानमादि द्रव्याल्पांशादिकः । प्रदेय मादिक. क्वाथान् तथा माषिकं हिङ्गुसिन्धूत्थं जरणायाम् शालिका इति परिभाषानियमात् । पृश्निपर्णीदेवदारुतिल्विया, अन्या कल्मलीपत्रगुल्मदीर्घपत्रा च । चर. प्रम चि. । এরণ্ডমূল, বেলছাল, চাকুলিয়া, সিংহপুচ্ছীচাকুলিয়া, ছোলমূল, শালপানি, গোক্ষুর প্রত্যেকে ২০ রতি । দেবদারু, ত্রি, মৈন্ধব, এরণ্ডতৈল প্রত্যেকে ১ মাষা । इति एरण्डसप्तक. । এরণ্ডবীজ, এরণ্ডমূল, বৃহতী, কণ্টিকারী, গোক্ষুর, শালপানি, চাকুলিয়া,

মুগানী, মাষাণী, ডানকুনী, সিংহপুচ্ছীচাকুলিয়া,থাগড়ামূল প্রত্যেকে ১৩।০র। প্রক্ষেপ যব্ক্ষার ৪ মা । एरण्डवादकक ।

**एरण्डा** । स्त्री । वृहद्दन्तीवृचे । मद व १ । पिपपल्याम् । श च ।

**एरण्डादि** । पु । सदादिद्रव्यवर्गे । यथा—"एरण्डश्चारिवाद्राधा शिरीषश्च प्रसारणी । माषसुद्गाख्यपर्णिन्यौ विदारीकन्दकेतकी । एरण्डादि गणो ह्यष वातपित्तविकारनुत् ॥" रसचन्द्रिका । এরণ্ডমূল, অনন্তমূল, কিসমিস্ শিরীষ, গন্ধভাদুলিয়া, মুগানী মাষাণী, ভুঁইকুমড়া, কেতকীমূল প্রত্যেকে ১৮ ব ।

**एर्वारु (रुका)** । पु, स्त्री । कर्कटीलतायां । কাঁকুড় বা ফুটী গাছ । हि फुट । तें नक्कदोस । शीषकर्कटी । विज र । सा महच्चुद्रभेदेन द्विविधा । गुणा —पित्तहरी शीतला मधुरा मूत्ररोधघ्नी रुचिकरी सन्तापमूर्च्छाहरी च । अति सेवनात् वातकोपकरी च । रा नि व ७ । शीतला रुक्षा मधुरा ग्राहिणी गुरु । आमा सा रुच्या पित्तघ्नी च, पक्वा तृष्णाग्निपित्तकरी च । भा पू १भ शा व । कोमलैर्व्वारुक तिक्त लघु स्वाद्विति मूत्रलम् । शीत रुक्ष रक्तपित्तमूत्रकृच्छ्रास्रदोषजत् । तत्पक्व पित्तल चाग्निदीपनञ्च तृषापह । उष्ण त्रिदोषशमनं क्रमिदाहहर मतम् । रुष्टे शोणन्तु तज्ज्ञेयमुष्ण पित्तकर मत । कफवायुविनाशकरं शोक्रमायुर्व्विदैर्जने । चुद्रमेर्वारुक शीत मधुर रुचिकारक । कासपीनसकारि स्यात् पाचक श्लेष्मपित्तह । आध्मानवायौ शमने । वै निघ । [र मा । भेष चुद्रो चि । विविधाश्मरौ ।

**एर्वारुकम्** । क्ली । कर्कटिकफले । কাকুড় ।

**एर्वारुतैलम्** । क्ली । कर्कटीवीजतैले । কাঁকুড়বীজের তৈল । गुणा —विभीतकतैलगुणम् । वातपित्तघ्न केश्य श्रमकरं गुरु शीतलञ्च । मा तैलव ।

**एल.** । पुं । एलायां । एलबालुके । सि यौ भरोच थि श्रीकण्ठ । "दालैलहिङ्गुलवणोत्तमामां ।" च द वात ज्व राधादि ।

**एलक.** । पुं । मेषे । रा नि व १८ ।

**एलङ्क.** । पु । मत्स्यविशेषे । रायकठा । दाय थाँडा, এলঙ্গা । गुणा —मधुरी हृद्य ग्राही कफवातघ्न मेधाग्निपुष्टिकार शीतल गुरुश्च । रा, नि व १९ ।

**एलवालम्** । क्ली । एलबालुके । भा म ४भ, ने रो चि सामान्याञ्जने । 'सैन्धव चैलवालम् ।"

**एलबालु (कम्)** । क्ली । Name of a perfume, a red powder sold under those names, seed of some plant. स्वनामप्रसिद्धगन्धद्रव्यविशेषे । अम । श र । कट्टी लसदृश कुष्ठगन्धि । भा म १भ । বালুকা এলাবালুক । हि एलुवा । मं कालंगडली । तें कुन्तुरुवुडमचेट्टु । गुणा —कटुपाक कषाय लघु शीतलं कण्डूकुष्ठक्रमिघ्न तृषाच्छर्द्दिकफपित्तरक्तमूत्रहर । भा पू १भ । मद व ३ । अगुरु कषाय कफवातनुत् मूर्च्छाज्वरदाहघ्न रोचनञ्च । रा नि व ४ । वा सू १५अ रोध्रादि । कुष्ठघ्न क्रमिघ्न विषघ्न हृद्रोगहरञ्च । प मु । 'सैलबालुपरिपेलवमोचा ।" তেজবল ইতি च मू ४अ । बालके । বালা । वै निघ २भ र.पि चि दूर्व्वाद्यघृते ।

**एला** । स्त्री । Cardamom the seed of Elettaria cardamomum स्वनामख्यात पण्यद्रव्ये । এলাইচ । हि इलाँचीपुरवी । मं एलची । तें यवडुलकि, एलुकचेट्टु । एला द्विधा —सुक्ष्मा स्थूला च । सूक्ष्मा गुजराटी, स्थूला च बडएलाचि इति भाषा । एतदुभयगुणा —शीत लतिक्तोष्णसुगन्धि पित्तघ्न कफघ्न हृद्रोगकर मलाग्निवान्तिपुंस्त्वघ्न । रा नि व ६ । पित्तकफनाशित्व शूलकोष्ठबद्धतातृष्णाच्छर्द्दिवायुनाशित्वम् । राज । सूक्ष्मैलाविशेषगुणा —मूत्रकृच्छ्रनाशित्व कफश्वास कासार्शोहरत्वञ्च । स्थूलैला कटुकी पाकि रसे चानलकृल्लघु । रूचीष्णा श्लेष्मपित्तास्रकण्डूश्वासतृषापहा । हृल्लासविषवस्त्यासाशिरोरुग्वमिकासनुत् ॥ भा पू १भ । नील्याम् । [व ४ ।

**एलागन्धिकम्** । क्ली । एलबालुके । रा नि.

**एलादिगुडिका** । स्त्री । रक्तपित्ते हिता । मधुना तोलकद्वय भक्ष्य । एलापत्रत्वचोऽर्द्धाचा पिप्पल्यर्द्धपल तथा । सितामधुकखर्ज्जूरमृद्वीकाश्च पलोन्मिता । सञ्चूर्ण्य मधुना युक्तां गुडिकां कारयेद्भिषक् ॥ च द, । रस र. । এলাবীজ, তেজপত্র,

गुडत्वक् প্রত্যেকে ১ তো. পিপুল ৪ তো শর্করা,যষ্টিমধু পিণ্ডখর্জুর, দ্রাক্ষা প্রত্যেকে ৮ তো সম্পূর্ণ মধুনা গুড়ী কার্য্যা। सा कौ।

**एलादिगणः** । पु । एलादिद्रव्यवर्गः । स च एलायुग्मतुरुष्क कुष्ठफलिनी मांसी जल ध्यामकम् क्का चोरक चोच पत्र तगरस्थौलेयजातीरस शुक्ति व्याघ्रनखामरदाह्वागुरुश्रीवासककुङ्कुमचण्डा गुग्गुलु देवधूपखपुरपुन्नागनागाह्वयात्मक । गुणा —वात कफघ्नो विषघ्नो वर्णप्रसादन कण्डूपिटिकाकोठ घ्नश्च । वा सू.१५अ. । वा टी हेमा ।

**एलादिचूर्णम्** । क्लौ । छर्द्यधिकारे । च.द. भैष । पाठ —"एलालवङ्गं मरिचं शुण्ठी पिप्पली नागकेशरं । यथोत्तर भागवृद्ध्या चूर्णन्तु सितया सम ॥" रस र राजयक्ष्म चि. ।

**एलादितैलम्** । क्लौ । वातव्याधौ । तिलतैल ४ श. एलादीनां कल्क मिलितशरावमित दुग्ध १६ श दधि १६ श वाय्यालककाथ १६ श वाय्यालकं १२॥०श. जल ६४ श शे १६श. । एला सुरामांसी सरलकाष्ठ शैलजं देवदारु रेणुकं चोरपुष्पी शटी जटामांसी चम्पकली नागकेशरं ग्रन्थिपर्णं गन्धरस खट्टाशी तेजपत्रम् उशीरमूल चन्दन कुन्दुरुखोटी नखी वालक गुडत्वक कुष्ठ कालागुरु मुस्तक सामुद्रकर्कट श्वेतचन्दन मञ्जिष्ठा जातीफल कुङ्कुम पिडिङ्गपुष्प शिलारस अगुरु एषां प्रति २ तो. । च.द. ।

**एलादिमन्थ.** । पु । यक्ष्मरोगे । एलादीनां (एला यमानी आमलक हरीतकी विभीतकं खदिरसार निम्ब पीतशाल शाल विडङ्ग भल्लातकास्थि चित्रकमूल त्रिकटुक मुस्तक पद्मपर्पटी) प्रत्येकं ८ प. एकत्र १५ श. जलेन साधयित्वा ३॥० शरावशिष्टे क्काथ वस्त्रपूतं ग्राह्य । तत्र घृत (१२प) विपाच्य पाकशेषे शर्करायाः २०प वंशलोचनाया ६ प मधुन १२प प्रक्षिप्य मन्थदण्डे नालोडयेत् । च द रा.य.चि । इय वाभटीका प्रक्रिया ज्ञेया । मतान्तरे तु एलादीनां प्रत्येकं २ प. ६ तो. ८ र. जलं ६४ श. ।

**एलानम्** । क्लौ। फलविशेषे । नারেঙ্গা লেবু । मं हिरवेकत्व । गुणा.—"आममेलानमत्यं सारक चीण गुरु स्मृतम् । वातघ्नचैव सम्प्रोक्तं पक्वं तस्तोल मधु । बलकृद्वातपित्तघ्नश्चपिभि परिकीर्तितम् ॥ रा नि.व ११ ।

**एलापर्णी** । स्त्री । वृक्षविशेषे । कাঁটা আর কুশী, এলানি । रास्नायाम् । भा पू १भ ।

**एलाफलम्** । क्लौ । एलवालुके । रा.नि व ४। पु । मधूकवृक्षे । মহুল গাছ । वै.निघ. ।

**एलावालुकम्** । क्लौ । एलवालुके । रा.नि व ४ । कुष्ठगन्धिफलसदृशे । कटुफलसदृशे । सु. सू ३०अ ।

**एलावूः** । स्त्री । अलाब्वाम् । লাউ । भ री ।

**एलायुग्मम्** । क्लौ । एका सूक्ष्मा अन्या सूक्ष्मा च । ছোট এলাচ, বড় এলাচ । वा सू १५अ. एलादि । "एलायुग्मतुरुष्ककुष्ठफलिनी ।"

**एला।लु (वम्)** । क्लौ । एलवालुके । रा नि व.६ । भा पू १भ. ।

**एलाह्वम्** । क्लौ । एलवालुके । रा नि व ४ ।

**एलीका** । स्त्री । सूक्ष्मैलायाम् । रा नि व.६ ।

**एलीयः** । पु । एलवालुके । वै.निघ ।

**एलुकम् (काख्या)** । क्लौ,स्त्री । एलवालुके । सु.चि.१८अ ।

**एल्वम्** । क्लौ । एलवालुके । सु.चि १८अ ।

**एल्ववालु(ल्वालु)कम्** । क्लौ । एलवालुके । रा नि.व ४ । मद.व.२ ।

**एषणः** । पु । सप्तकीटके । वै निघ ।

**एषणिका** । स्त्री । स्वर्णादिपरिमाणतुलायाम् । निरुक्ति । अम. ।

**एषणी** । स्त्री । Probe. व्रणमार्गानुसारिशलाकायाम् । सा च गण्डूपदाकारमुखी । नाडीव्रणे एषणा गण्डूपदमुखैषिणी । भेदनार्थेपरा ह्ये मुखामूलनिविष्टखा । इति ॥ सु सू ८अ । सुश्रुतादि । निरुक्ति । "एषणौत्रणमार्गानुसारिणीत्याह सुश्रुताभिदि ।" मै चरित ।

**एष्यः** । वि । एषणार्हे । माध्यादौ रोगे ।

**एष्या** । स्त्री । आमलकीवृक्षे । रत्ना. ।

# ঐ

**ঐকমফম্‌** । ক্লী । গর্দ্দভীষ্টতে । সু. । See গর্দ্দভীষ্টতম্‌ । বি । একখুরসম্বন্ধীয়ে ।

**ঐকাহ্নিকঃ** । বি । একদিনসম্পন্নে । এক দিনান্তরভবে । [See অন্যেদ্যুষ্ক. ।

**ঐকাহ্নিকজ্বরঃ** । পু । একদিনান্তরগতজ্বরে ।

**ঐঙ্গুদঃ** । পুং । ইঙ্গুদীবৃক্ষে । ক্লী । ইঙ্গুদীফলে । অম. । ভৈপ ।

**ঐণঃ(ণেয)** । বি । এণমৃগচর্ম্মাদৌ ।

**ঐণেয়কম্‌** । ক্লী । এলবালুকে ।

**ঐন্দবী** । স্ত্রী । সোমরাজ্যাম্‌ । রা নি ব.৪ ।

**ঐন্দ্রঃ** । পু । দেবসর্ষপবৃক্ষে । ক্লী । মূলবিশেষে । বন আদা । গুণাঃ—কটুত্ব রুচিবলাগ্নিকরত্ব । রা.নি ব.৫ ।

**ঐন্দ্রযবঃ** । পু । ইন্দ্রযবে । মদ ব.১ ।

**ঐন্দ্রলুপ্তিকঃ** । বি । ইন্দ্রলুপ্তরোগবিশিষ্টে । টেকো । [রাথালশশা । মদ.ব.১ ।

**ঐন্দ্রবারুণী** । স্ত্রী । ইন্দ্রবারুণীলতায়াম্‌ ।

**ঐন্দ্রিঃ** । পু । কাকে । মি রদিকো ।

**ঐন্দ্রী** । স্ত্রী । স্থূলৈলায়াম্‌ । সূক্ষ্মৈলায়াম্‌ । রা. নি.ব ৬ । বৈ নিঘ ২ভ.ব্রাহ্মীঘ্রাদিচূর্ণে । ইন্দ্রবারুণ্যাম্‌ । রাখালশশা । প.মু.রা.নি.ব ৩,প.মু.৪খ । গৌরক্ষকর্কট্যাং । প মু.৪খ.প্রসাম্যাপনে । ভা.খমে ।

**ঐন্দ্রীফলম্‌** । ক্লী । ইন্দ্রবারুণীফলে । রাখ শশার ফল । প.দ প মা বি. । "পক্কৈন্দ্রীফলমূত্রম্‌ ।"

**ঐন্দ্রীরসায়নম্‌** । ক্লী । রসায়নবিশেষে । অত্র ঐন্দ্রী (রাখালশশার মূল), মৎস্যাক্ষী (ডগুণীর মূল), ব্রহ্মসুবর্চলা (সুর্য্যমণি ফুল), শঙ্খপুষ্পী (ডানকুনী), ঐন্দ্রাদিবিধানানাং প্রত্যেক যবক্ষয কর্ষং সর্ব্বং ঘৃতস্থং বিদধ্যাৎ তিল ঘৃতস্য চ পলং । চ বি,১খ. ।

**ঐভী** । স্ত্রী । হস্তিঘোষালতায়াম্‌ । রা নি ব.৩।

**ঐরাবতঃ** । পুং । লকুচবৃক্ষে । মাদার । নাগরঙ্গে । নারাঙ্গী লেবু । মি.রা.নি ব. ১১, প মু. । ক্ষুদ্রদীপালরখর্জ্জুরে । ক্লী । খজাকর বীরে । রত্না. । ঐরাবতফলে । তৎফল অম্লরক্তপিত্ত-কৃদুষ্ণশঠচ । সু.মূ ৪৬অ. ।

**ঐরাবতকঃ** । পুং । হস্তিযুণ্ড্যা। হাতিশুঁড়ে । চ.চি.৩অ. । নাগরঙ্গবৃক্ষে । বৈ নিঘ. ।

**ঐরাবতপদী** । স্ত্রী । কাকজঙ্ঘায়াম্‌ । মহাজ্যোতিষ্মতীলতায়াম্‌ । বড লতাফটকী ।

**ঐরাবতী** । স্ত্রী । বটপত্রপাষাণভেদরূপে । বড পাথরকুচি । রা নি.ব ৫ । নাগরঙ্গবৃক্ষে । ভা । গুণাঃ—"ঐরাবতী রসে পাকে লঘ্বোষ্ণা চ সুগন্ধিকা । বাতং কাস শ্বাসকৰ্ম নাশয়েদিতি কীর্ত্তিতা ।" বৈ নিঘ । [নি ব ৫ ।

**ঐরিণম্‌** । ক্লী । সৈন্ধবলবণে, পাংশুলবণে । রা.

**ঐরেয়ম্‌** । ক্লী । মদ্যে । বৈ.নিঘ. । এলবালুকে । অম ।

**ঐর্ব্বারুঃ** । পুং । কর্কটীবিশেষে । বড় কাঁকুড় । মদ.ব ৩। প.দ প্রদর.চি ।See এর্ব্বারু., কর্কটী ।

**ঐলবালুকম্‌** । এলবালুকে । ম র. ।

**ঐলেয(ক)ম্‌** । ক্লী । মলুকায়াম্‌ । এলবালুকে । অম । "ঐলেয়বিশ্বধান্যাকম্‌ ।" চি যো., প.দ.র. পি,চি.বাসাখণ্ডকুষ্মাণ্ডে ।

**ঐল্বালু** । ক্লী । এলবালুকে । মদ ব.৩ ।

**ঐশমূলম্‌** । ক্লী । ঈশ্বরমূলে । ঈশ্বরমূলি-য়ার মূল । রস.র বাত.চি. ।

**ঐশানঃ** । পু । ঈশানকোণভববায়ৌ । স চ কটুক শীতলশ্চ । ভা. ।

**ঐশ্বর্য্যম্‌** । ক্লী । শ্বেতধুস্তূরকে । বৈ নিঘ. ।

**ঐষিকা** । স্ত্রী । পাঠায়াম্‌ । চিরতায়াম্‌ । বৈ. নিঘ । [মদ্যে । ক্ষুরা. ।

**ঐক্ষবম্‌** । ক্লী । ইক্ষুবিকারে, গুড়াদৌ । ইক্ষু-

**ঐক্ষবী(সুরা)**। স্ত্রী । ইক্ষুরসকৃতমদ্যে, তদ্গুণাঃ—সৌরভ্যং অতিমাদকত্ব । রা নি.ব.১৫ ।

# ओ

**ओक** । पु, क्ली कम) । गृहे । आश्रये । अम ।

**ओकण:** । पु । केशकीटे । उकुण । अर ।

**ओकणि (णी)** । पु, स्त्री । उकुणे । अर ।

**ओकोदनी** । स्त्री । यूके । उकुण । अर ।

**ओक्कणी** । स्त्री । उकुणे । अर ।

**ओज (स)** । क्ली बल । मेमविक तेजसि । रसादिसब्धातुसारभागधातुविशेषे । गुणा —स ब्धशरीरस्थितत्व स्निग्धत्व शीतलत्व स्थिरत्व शुक्ल वर्णत्व कफात्मकत्व शरीरबलपुष्टिकारत्वञ्च । हृ दि तिष्ठति यच्छुद्ध रक्तमीषत्सपीतकं ओज शरीरे सख्यात तन्नाशान्नाशमृच्छति । वै निघ । अष्टविन्दु प्रमाण तदीयदक्त सपीतक । अग्निसोमात्मकत्वन द्विरूप वर्णितञ्च तत् ॥ अर । ओजश्च तेजोधातूना शुक्लान्तानां पर स्मृतम् । हृदयस्थमपि व्यापि देह स्थितिनिबन्धनम् ॥ वा । दीप्तौ । मे ।

**ओजस्कर** । त्रि । ओजोधातुवर्द्धके ।

**ओडिका (डी)** । स्त्री । नीवारे । उडिधान्य । प सु । गुणा —ओषधी रूचा कफवायुवृद्धिकरी पित्तनाशिनी च । राज । See नीवार ।

**ओड्र (क)** । पु । The China rose (Hibiscus mutabilis) जवाकुसुमवृक्ष । जवाफुलेर गाछ । हिं वीड्फुल । म जासविन्द । रा नि व १० । गुणा —सयाही केशहितश्च । भा पू १म पुष्पव । मलमूत्रसञ्जनरञ्जनश्च । राज । कटुरुणा इन्द्रलुप्तहर विच्छर्दिजन्तुजनक सूर्या राधनश्च । रा नि व १० । मात्रा इमा । [नि व १० ।

**ओड्र(ड्रा)काख्या** । स्त्री । जवापुष्पवृक्षे । रा

**ओड्रपर्य्याय** । पु । सूर्यकान्तपुष्पवृक्षे स्वनाम ख्याते । जवा । अम । [फूल । प सु । See ओड्र ।

**ओड्रपुष्पम्** । क्ली । जवाकुसुमे । द्रुकुन्दवा

**ओड्रपुष्पा** । स्त्री । जवावृक्ष । वै निघ ।

**ओढापलङ्घया** । स्त्री । गोरक्षदुग्धाम् । वै निघ । [वनविडाल । वै निघ ।

**ओतु** । पु स्त्री । विडाल । विडाल । अम ।

**ओद** । पु । अम ।

**ओदन** । पु । अद्रवे सिक्थे । " स च मधुरा द्विधी गुरु । वा टी हमा । क्ली । भक्ते । प सु । अन्न । रा नि व २० । गिटुलि । सा की ज्व वलि ।

**ओदनपाकी** । पु । नीलझिण्ट्याम् । च चि ३ अ चन्द तैल ।

**ओदना((निका) (नी)** । स्त्री । महासम ङ्गायाम् । वेलेडाविशेष । वाप्यालके । वेण ड़ा । रा नि व ४ ।

**ओदनाह्वया (ह्वा)** । स्त्री । महासमङ्गायां । रा नि व ४। वाप्यालके हि खिरिहिटी । मद व ।

**ओल (ल्ल)** । पु । स्वनामख्यातकन्दशाके । ओ ल गाछ । रमा भा पू १म. । गुणा —अग्निकर कफघ्न रुचिकार लघु अर्शसि पथ्य । पाचकन्द लु दीपन इति । राज । See सूरण । त्रि था र्द्रे । मे लक्ति ।

**ओल(ल्ल)कन्द** । पु । सूरणे । ओल । रमा । वनौल । वुना ओल । पानीयभक्तवृक्षाम् ।

**ओष** । पु । दाहे । मोष शोष इति पर्यां शब्द । अम भरत ।

**ओषण (णि)** । पु । कटुरसे । शाक ईच । (णी) पुरातिशाके । पुत्रञ्शिाक । इय —कफवायुनाशित्वम् । राज । पुनर्नवायाम् ।

**ओषधम्** । क्ली । औषधे ।

**ओषधि** । स्त्री । फलपाकान्तव्यादौ कदल्यां धान्यादिके । हेच । द्रुमेषु । तानि पुनरोषधय तास द्विविधा स्थावरा जङ्गमाश्च । तासां स्थाव रा चतुर्धा यथा—वनस्पति द्रुम, वीरुत् औ षधिश्चेति । तासु अपुष्पफलवान् वनस्पति पुष्प फलवान् द्रुम प्रतानवती लता, फलपाकनिष्ठा च औषधि । जङ्गमा अपि चतुर्धा जरायुजाण्डज स्वेदजोद्भिज्जभेदत । तत्र पशुमनुष्यव्यालादयो जरायु जा । खगसर्पसरीसृपप्रभृतयोऽण्डजा । कृमिकी टप्रभृतय स्वेदजा । मण्डूकादय उद्भिज्जा इति । सु सू १ष. ।

**ओषधिगण.** । पुं । रासायनिकौषधिवर्गे दा सोमसमवीर्य्या महौषधय इति

तासाञ्च सोमवत्क्रियाशीःस्तुतयः शास्त्रे कथिताः। तासामष्टादशधा—अजगरी श्वेतकापोती कृष्णकापोती गोनसी वाराही कन्या छत्रा अतिच्छत्रा करेणुः अजा चक्रका आदित्यपर्णिनी ब्रह्मसुवर्चला श्रावणी महाश्रावणी गोलोमी अजलोमी महावेगवती चेति। एताश्चार्ब्बुदगिर्य्यादिषु लभ्याः—“आसाञ्च याः क्षीरवत्यस्तासां क्षीरं कुडवमितं सकृदेव उपयुञ्जीत। यास्तु अक्षीरा मूलवत्यः तासां अरत्निमात्रप्रमाणानि त्रीणि काण्डानि प्रमाणमुपयोगे। श्वेतकापोती समूलपत्रा भक्षयितव्या। गोनस्यजगरीकृष्णकापोतीनां सनखमुष्टिं खण्डशः कल्पयित्वा क्षीरेण विपाच्य परिस्रावितमभिहुतञ्च सकृदेवोपयुञ्जीत। चक्रकायाः पयः सकृदेव। ब्रह्मसुवर्चला. समरात्रमुपभोक्तव्याः। भक्ष्यकल्पेन शेषाणां पञ्चपलानि क्षीराढककथितानि प्रस्थेऽवशिष्टेऽवतार्य्य परिस्राव्य सकृदेवोपयुञ्जीत। सोमवदाहारविहारौ व्याख्यातौ, केवलन्तु नवनीतमभ्यङ्गार्थे शेषं सोमवदानिर्गमादिति। अथासां पृथग्विज्ञानमुच्यते —मण्डलैः कपिलैश्चित्रैः सर्पाभा पञ्चपर्णिनी। पञ्चारत्निप्रमाणा वा विज्ञेयाजगरीबुधैः॥ निष्पत्रा कनकाभासा मूले द्व्यङ्गुलिसम्मिता। सर्पाकारा लोहितान्ता श्वेतकापोतिरुच्यते॥ द्विपर्णिनीं मूलभवामरुणां कृष्णमण्डलां। द्व्यरत्निमात्रां जानीयाद्गोनसीं गोनसाकृतिं॥ सक्षीरा रोमशा मृद्वी रसेनेक्षुसमोपमा। एवं रूपरसाचापि कृष्णकापोतिमादिशेत्॥ कृष्णसर्पस्वरूपेण वाराही कन्दसम्भवा। एकपत्रा महावीर्य्या भिन्नाञ्जनसमप्रभा॥ छत्रातिच्छत्रके विद्यात् रक्षोघ्ने कन्दसम्भवे। जरामृत्युनिवारिण्यौ श्वेतकापोतिसम्स्थिते॥ कान्तैर्द्वादशभिः पत्रैर्मयूराङ्गरुहोपमैः। कन्दजा काञ्चनक्षीरी कन्या नाम महौषधी॥ करेणुः शुभ्रक्षीरा कन्देन गजरूपिणी। हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी॥ अजास्तनाभकन्दा तु सक्षीरा क्षुपरूपिणी। अजा महौषधी ज्ञेया शङ्खकुन्देन्दुपाण्डुरा॥ श्वेता विचित्रकुसुमा काकादन्याः समा क्षुपा। चक्रकामोषधिं विद्याज्जरामृत्युनिवारिणीम्॥ मूलिनी पञ्चभिः पत्रैः सुरक्ता मृदुकोमलैः। आदित्यपर्णिनी ज्ञेया सदादित्यानुवर्त्तिनी॥ कनकाभा जलान्तेषु सर्व्वतः परिसर्पति। सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला॥ अरत्निमात्रक्षुपका पत्रैरङ्गुष्ठसम्मितैः। पुष्पैर्नीलोत्पलाकारैः फलैश्चाञ्जनसन्निभैः, श्रावणी महती ज्ञेया कनकाभा पयस्विनी॥ श्रावणी पाण्डुराभासा महाश्रावणिलक्षणा। गोलोमी चाजलोमी च रोमशे कन्दसम्भवे॥ हंसपादीव विच्छिन्नैः पत्रैर्मूलसमुद्भवैः। अथवा शङ्खपुष्पी च समाना सर्व्वरूपतः॥ वेगेन महताविष्टा सर्पनिर्म्मोकसन्निभा। एषा वेगवतीनाम जायते ह्यम्बुदक्षये॥ …देवसुन्दे ह्रदवरे तथा सिन्धौ महानदे। दृश्यते च जलान्तेषु मध्ये ब्रह्मसुवर्चला॥ आदित्यपर्णिनी ज्ञेया तथैव हि हिमक्षये। दृश्यतेऽजगरी नित्यं गोनसी चाम्बुदागमे॥ काश्मीरेषु सरो दिव्यं नाम्ना क्षुद्रकमानसम्। करेणुस्तत्र कन्या च छत्रातिच्छत्रिके तथा॥ गोलोमी चाजलोमी च महती श्रावणी तथा। वसन्ते कृष्णसर्पाख्या गोनसी च प्रदृश्यते॥ कौशिकीं सरितं तीर्त्वा सञ्जयन्त्यास्तु पूर्व्वतः। क्षितिप्रदेशो वल्मीकैराचितो योजनत्रयं॥ विज्ञेया तत्र कापोती श्वेता वल्मीकमूर्द्धसु। मलये नलसेतौ च वेगवत्यौषधी ध्रुवा॥ कार्त्तिक्यां पौर्णमास्याञ्च भक्षयेत्तामुपोषितः। सोमस्याच वर्त्तेत फलं तावच्च कीर्त्तितम्॥” इत्यादि। गुणाः—युवानं सिंहविक्रान्तं कान्तं श्रुतनिगादिनं। कुर्य्युरेता. क्रमेणैव द्विसहस्रायुषं नरम्॥ अङ्गदी कुण्डली मौली दिव्यस्रक्चन्दनाम्बरः। चरत्यमोघसङ्कल्पो नभस्वत्सुदुर्गमे॥ व्रजन्ति पक्षिणो येन जलदास्त्वाय सोयदा.। गतिः सौषधिसिद्धस्य सोमसिद्धगतिः परा॥ सुश्रुते चि २० अ.। [वै निघ.।

**ओषधी।** स्त्री। औषधी। भरतः। लघुहस्ते।

**ओषधीपतिः।** पुं। कर्पूरे। हे.च.।

**ओषधीशः।** पुं। कर्पूरे। अम.। [व.१८।

**ओष्ठः।** पुं। दन्तच्छदे। উপরঠোঁট। रा.नि.

**ओष्ठाधरः।** पुं। ओष्ठे। ঠোঁট। [अम। मा नि.।

**ओष्ठपाकः।** पुं। वक्त्रामयरोगविशेषे। ওষ্ঠ-

**ओष्ठपुष्पः।** पुं। बन्धुजीवपुष्पवृक्षे। বান্ধুলী গাছ। रा.नि.व.१०। See बन्धुजीवः.।

**ओष्ठप्रान्तः।** पुं। सृक्कभागे। रत्ना.।

**ओष्ठफला (भा)।** स्त्री। बिम्बीलतायाम्। তেলাকুচা। सं गीडसीडलो। वै निघ.।

**ओष्ठरञ्जनी।** स्त्री। ताम्बूले। পান। प.मु.।

**ओष्ठरोगः।** पुं। ओष्ठाश्रगतरोगविशेषे, ओष्ठ-

मणादौ। वातजपित्तजश्लैष्मिकसान्निपातिकरक्तजमांसजमेदोजाभिघातजभेदादष्टविध। तत्र कार्कश्यत्वादिलक्षणा वातजा, पिडकाचितत्वादिलक्षणा पित्तजा, कण्डूमत्वादिलक्षणा कफजा, कृष्णपीतश्वेतत्वादिसर्व्वलक्षणयुक्ता सन्निपातजा, स्रवद्रक्तखर्ज्जूरफलवर्णत्वादिलिङ्गा रक्तजा, गुरुस्थूलत्वादिलक्षणा मांसजा, सर्पिमण्डसवर्णत्वादिलक्षणा मेदोजा, क्षतजातत्वादिलक्षणा अभिघातजा इति। भा म ४भ मुखरो चि। "आनूपपिशितक्षीरदधिमत्स्यातिसेवनात्। मुखमध्ये गदान् कुर्य्युः क्रुद्धा दोषा कफोत्तरा ॥ इति। मा नि.। [प मु।

**ओष्ठा (ष्ठी)**। स्त्री। बिम्बा। তেলাকুচা।

**ओष्ठाधरौ (रं)**। पु, क्ली। ओष्ठद्वये।

**ओष्ठोपमफला (लिका)**। स्त्री। बिम्बिकायां। তেলাকুচা গাছ। हि कुन्दुरु। भा पू १भ।

—∞○◇○∞—

## औ

**औड(ड)म्बरम्**। क्ली। कुष्ठरोगविशेषे। मे। तस्य लक्षण—"रुग्दाहरागकण्डूभिः परीतं रोमपिञ्जरं। औदुम्बरफलाभासं कुष्ठमौदुम्बरं वदेत् ॥" मा नि। ताम्रे। जटा। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औड्रपुष्पम्**। क्ली। जवापुष्पे। हे च।

**औत्सुक्यम्**। क्ली। उत्कण्ठायाम्। हे.च।

**औदनिक.**। पु। सूपकारे। अम। [पेटुके।

**औदरिक.**। त्रि। क्षुधिते। उदरमात्रपोषके।

**औदर्य्यम्**। क्ली। ताम्रे। मदनफले। उदुम्बरफले। [हे च।

**औदश्वित(त्क)म्**। क्ली। अर्द्धजलयुक्तघोले।

**औदुम्बरम्**। क्ली। ताम्रे। द्वारा। महाकुष्ठरोगविशेषे। गुणा —"पित्तेन पक्वौदुम्बरफलाकृतिवर्णानि औदुम्बराणि।" सु नि ५भ। उदुम्बरफले। त्रि। उदुम्बरसम्बन्धिनि।

**औदुम्बरच्छद**। पु। दन्तीवृक्षे। वै निघ।

**औदुम्बरी**। स्त्री। ऋत्विग्भेदे।

**औद्दाल(क)म्**। क्ली। स्वर्णवर्णे वल्मीककारिकीटकृतमधुनि। উইয়ের মধু। रा नि व १४। गुणा—कषायम् उष्ण कटु कुष्ठविषनाशि च। राज। राजनिघण्टुतु भुवि उद्दलनात् औद्दालकाभिधा कपिलकीटा तैर्वल्मीकसमीपे सञ्चितं मधु। "औद्दाला कपिला कीटा भूमिरुद्दलनात्स्मृता। वल्मीकान्तरदुत्पन्नमौद्दालकमुदीर्यते। कुष्ठादिदोषघ्नं सन्धिविच्छेदघ्नेति।" रा नि व १४। "प्रायो वल्मीकमध्यस्था कपिला स्वल्पकीटका। कुर्व्वन्ति कपिलं स्वल्पं तत्स्यादौद्दालकं मधु।" रुच्यं स्वर्य्यं कुष्ठविषघ्नं कषायं उष्णमम्लं कटुपाकं पित्तकरञ्च। भा पू.२भ मधुव।

**औद्दालकशर्करा**। स्त्री। औद्दालमधुकृतशर्करायां। सा गुणैरौद्दालमधुसदृशी। रा नि व १४।

**औद्भिज्जम्**। क्ली। पांशुलवणे। সোরা। रा नि व ६। शाम्भरिलवणे। [राज।

**औद्भिदम्**। क्ली। औद्भिदलवणे। সোরা।

**औद्भिदजलम्**। क्ली। उद्भिदो जाते जले। प्रस्तरसलिले। तस्य गुणा—मधुरं पित्तशमनं अविदाहि च। राज। लघु। रा नि व १४। "विदार्य्य भूमिं निम्नां यत् महत्या धारया स्रवेत्। तद्धि यमौद्भिदं नाम वदन्तीति महर्षयः ॥ औद्भिदं वारि पित्तघ्नं अविदाह्यतिशीतलं। प्रीणनं मधुरं बल्यमीषद्वातकरं लघु ॥' भा पू १भ वारिव। यथाह औद्भिदं पथ्यम्। मद.।

**औद्भिदद्रव्यम्**। क्ली। उद्भिद्य पृथिवीं जायते इत्युद्भित्। तत्र वनस्पतिलतावानस्पत्यौषधात्मकम्। See च सू १भ वनस्पत्यादि।

**औद्भिदलवणम्**। क्ली। पांशुलवणापरनामधेयलवणे, यद्भूगर्भतः स्वयमुत्पद्यते। সোরা। हि [illegible] यो यद्द चि चित्रगुडिकायां। च द महापञ्चघृते। गुणा—क्षारयुक्त गुरु कटु स्निग्धं [illegible] वातघ्नं। भा पू १भ ह व। रक्तम् सूक्ष्म लघु वातानुलोमनञ्च। मद व २। तीक्ष्णं उत्क्लेदजनकं क्षारयुक्तं कटु तिक्तं कोष्ठबद्धतानाहगुल्मघ्नं। राज।

**औधस्यम्**। क्ली। पयसि दुग्धे।

**औनीतम्**। क्ली। चक्षुरोगविशेष। सुश्रुत

नाभिष्यन्दियासग्रहणाश्रौसेवावर्ज्जनात् शुक्रं स्वस्था न्नतुत मेहने प्रतिहन्यते,तेन मूत्रकृच्छ्र भवेत्। तत शोणित कुपित मेहने शूल जनयति । मेहनञ्च क्लिन्न पक्व कण्डूमत्पिडकायुक्त मचिकाश्रुत भवति, स्वस्थानञ्च न प्रविशति । ज द ५१ष ।

**औन्दूवरम्** । क्लौ । ताम्रे । भा म १म ।

**औपवस्तम्** । क्लौ । उपवासे । लङ्घने । हे च।

**औपसर्गिकः** । पु । सन्निपातादिरोगविशेषे । तस्य लक्षण —"कफोऽनुलोमवातेन यदि पित्तानुगो भवेत्। स्वेदशैत्यादिभिजट्टलदा भवति मानव ॥ प्रतिलोम पुमक्षेन स्वास्थ्यमायाति तत्क्षणात्। औ पसर्गिक एवाय सन्निपात उदाहृत ॥" वैद्यशास्त्र।

**औपस्थ्यम्** । क्लौ । उपस्थेन्द्रियसुखे ।

**औपीनम्** । क्लौ । चयचैवे । रा नि व २ ।

**औमीनम्** । क्लौ। अतसौचवे। रा नि व २ ।

**औरभ्र (क)** । पु । कम्बलस्पर्शे । मेषे । हे च । क्लौ । मेषमासे । गाडर मांस । म भेडी करमाष । गुणा —मधुर शीतल गुरु विष्टम्भि ह णञ्च । मेषसमूहे । ऊर्णावस्त्रे । रा नि व १७ ।

**औरिणम्** । क्लौ । मत्तिकालवणे । यवचारे । सोरा । वै निघ ।

**औरुबुकम्** । क्लौ । एरण्डतैले । च द ।

**और्व्वम्** । क्लौ । मत्तिकालवणे । यवचारे । पायुलवणे । रा नि व ६ ।

**औलम्** । क्लौ । श्वेतशूरणे । वै निघ ।

**औलूकम्** । क्लौ । उलूकसमूहे । काटा ।

**औशीरम्** । क्लौ पु । वालके । वाला । चामर दण्डे । आसने । चि । उशीरजे । मे रावक ।

**औषणम्** । क्लौ । कटुरसे ।

**औषधम्** । क्लौ । गुणग्राम् । रसास औषध मारणगणे । रोगघ्नद्रव्ये । ওষধ । "वैद्यो व्याधि हरेयेन तद्द्रव्य प्रोक्तमौषधम्"। अत्रि । औषध पञ्चविधम् । यथा—रसचूर्णकषायावलेहकल्का । "तत्र पञ्चविधं प्रोक्त स्वसयोगविभेदत । रसचूर्णं कषायश्चावलेह कल्क इत्यपि।" तत्र पुन द्विविध शोधनशमनलक्षण । तयो शोधनरूप वस्तिविरेक वमनम् । कुपितदोषान् बहिर्नि सार्य्य रोगोपश मन करोति । शमनरूप तैलघृतमधुरूप स्वस्थान स्थितानामेव साम्यहेतु । वा टी भरत । तत्र वातस्य वस्ति (गुदप्रणिधेयस्नेहादि)। पित्तस्य विरेक (मुखपीत गुदमार्गेणान्त स्थितस्य नि सारण)। कफस्य वमन (मुखेन पीते तेनैव दो षस्य नि सारणम्)। शमनं—वातस्य तैल, पित्तस्य घृत, कफस्य च मधु । विन्ध्यशैलजानि औषधानि क्रियाविधौ प्रशस्तानि तथा वनोपवनजानि। वल्मी कश्मशानादिजानि न ग्राह्याणि । औषधीहरण मन्त्रोऽप्यस्ति स्थानाभावान्नोक्त । औषधद्रव्याङ्ग ग्रहणं यथा—खदिरादीना सार,निम्बादीना त्वक, दाडिमादीनां फल,पटोलादेश्च छद ग्राह्य। सार स्मात् खदिरादीनामित्यादि । शार्ङ्गधरमते न्यग्रो धादे त्वक बीजकादे सार तालीशादे पत्र त्रि फलादेश्च फल ग्राह्यमिति । काष्ठगर्भमहामूलानां वल्कल क्षुद्रमूलाना सर्व्वशो ग्राह्यमिति । अति स्थूलजटायास्त्वच तथा सूक्ष्ममूलान सर्व्वशो ग्रा ह्याणि । यत्र द्रव्याङ्गावयवो यादृशो निर्दिष्ट, तत्र तादृश एव ग्राह्य । यथामृतादिकपार्थे अश्मादीनां पत्रमेव ग्राह्यम् । अङ्गसामान्योक्तौ मूलवल्कलम् "अङ्गेऽप्यनुक्ते विहितन्तु मूल मिति वचनात्। विषयभेदे ऋतुद्रव्यग्रहणम्—शरदि स्वरसौषध सर्व्वकार्य्यार्थे, विरेकवमनार्थं वसन्ते। शिशिरे मूलं, ग्रीष्मे पत्र, वर्षावसन्तयो त्वक्न्दी, शरदि चौर यथतुपुष्प फलञ्च हेमन्ते सारञ्च ग्रा ह्यम्। सामान्योक्तौ—सूत्याच, उत्पले नीलोत्पल, शकृद्रसे गोमयरस , चन्दने रक्तचन्दन, सर्षपे सि द्धार्थ , लवणे सैन्धव मूत्र गोमूत्रं, घृतदुग्धेषु ग व्यमेव, चतुष्पदे स्त्री , पचिणि पुमान् वयस्य लाङ्गलाना चर्म्मादि हित्वा ग्राह्यम् । मासे कथिते छाज श्रीवञ्च स्वीकार्य्यात । अनुक्ते ग्रहण यथा— कालेऽनुक्ते प्रभात अङ्गेऽनुक्ते जटा भागेऽनुक्ते सा म्य द्रवेऽनुक्ते जल । प भ १ख। चूर्णलेहासवकार्य्ये तु श्वेतचन्दन क्वाथप्रलेपे रक्तचन्दन ग्राह्यम्। भ चनीयौषधविधाने—अजमोदोक्तौ यमानी, वाह्य प्रलेपे तु वचा ग्राह्या । भा ।

**औषधकाल.** । पु । औषधसेवनस्य समये । स च दशविध —"निर्भक्त प्राग्भक्तमधोभक्तं मध्यम क्षमन्तराभक्त सभक्त सामुद्र मुहुर्मुहुर्ग्रास ग्रासान्त रञ्चेति। तत्र निर्भक्त केवलमौषधमुपयुज्यते । प्रा ग्भक्त यत्तु प्राग्भक्तस्योपयुज्यते । अधोभक्त यद्भक्ते

## क

**कम्** । क्ली । जले । रा.नि.व १४ । सुखे । मे. । केशे । धर. । [पानपत्रे । च टी ।

**कंस:** । पुं, क्ली । कंसमाक्षिके (महाद्रावके) ।

**कमम्** । क्ली, पुं । ताम्रवङ्गयोरुपधातौ, कांस्यधातौ । काँसा । प.सु । आढकपरिमाणे (प्रस्थ) । भा. । तैजसपात्रमात्रे । चिका. । [हे.च. ।

**कंसकम्** । क्ली । पुष्पकासीसे । इदं श्वेतवर्णम् ।

**कसहरीतकी** । स्त्री । शोथाधिकारे । हरीतकी १०० शतं, दशमूलं प्रस्थकं ६४ शरी १०० साथा मिलित ६४प. वारि ५१२ प. (६४श.) शे. १२८ प. (१६ श.) पुरातनगुड: १०० प. । पक्वा लेहवद्भूते, शुण्ठीचूर्णं ८ तो. मरिचचूर्णं ८ तो. पिप्पलीचूर्णं ८ तो. यवक्षार. ८ तो. गुडत्वक् २ तो. तेजपत्र २ तो. एलाचूर्णञ्च २ तो. प्रक्षेप्यो देय: । मधु २ श. वा १६ प. । मतान्तरे क्वाथ: ८ श । पाठ: —"द्विपञ्चमूलस्य पचेत्कषाये कंसेऽभयानाञ्च शतं गुडाच्च । लेहे सुसिद्धे च विनीय चूर्णं व्योष त्रिसौगन्ध्यमुपस्थिते च । प्रस्थार्द्धमानं मधुन. शुभ्रौते किञ्चिच्च चूर्णादपि यावशूकात्, एकाम्लत: प्राश्य ततश्च लेहात् शक्ति निहन्ति श्वयथु प्रवृद्ध"-मित्यादि । सा.कौ. ।

**कंसास्थि** । क्ली । कांस्यधातौ । काँसा । "कंसे तु कांस्यं कंसास्थि" । चिका । [च. ।

**कंसोद्भवा** । स्त्री । सौराष्ट्रमृत्तिकायाम् । हे.

**ककन्द:** । पुं । स्वर्णे । त्रिका. ।

**ककारीमुख:** । पुं । केशे । रा.नि.व.१८ ।

**ककारपूर्व्वद्रव्यम्** । क्ली । ककारपूर्व्वकद्रव्येषु । तानि यथा—कटुक:, कालशाकं, कुष्माण्ड, कर्कटी, कार्कन्धु:, कर्कोटक:, कलिङ्ग:, करमर्द:, करीर:, कतक, कशेरु:, काञ्जिकञ्चेति रक्तपित्ते वर्ज्यम् । भा.म.र.पि.चि. ।

**कङ्कुष्ठिनी** । स्त्री । ज्योतिष्मतीलतायाम् । लताफटकी । भा.म १भ । [राज ।

**कङ्कुञ्जल: (ला)** । पुं, स्त्री । चातकपक्षिणि ।

**कङ्कुण(न)कः** । पुं, क्ली । बालरोगविशेषे । See कङ्कूणकः ।

**कङ्कुद् (द:)** । स्त्री, पुं, क्ली । वृषाङ्के । वाँड़ेर झूँटि । प्राधान्ये । अम. । ध्वजे । मे । दर्व्वीकरसर्पभेदे । सु.कल्प.४अ. । See सर्प: ।

**कङ्कुद्मती** । स्त्री । कटी । पाछा, नितम्ब । अम । वि । कङ्कुद्विशिष्टे । [वृषे । हे च. ।

**कङ्कुद्मान्** । पुं । ऋषभकवृषे । रा नि व.५ ।

**कङ्कुन्दरम्** । क्ली । नितम्बगर्त्ताधिष्ठाने वैकल्यकरे पृष्ठसन्धिमर्म्मद्वये । गेहदण्डीभयत: पार्श्वजघनवहिर्भागे ईषदधस्तस्य स्थानम् । तत्र स्पर्शाज्ञानमध.काये चेष्टोपघातश्च । सु.शा ६अ । कङ्कुन्दरौ तु सर्व्वेषां स्यातां जघनकूपकौ । रा नि.व १८ । पु । ज्वरविशेषे । गुणा: —"कङ्कुन्दर: कटुस्तिक्त: ज्वरघ्नश्चोष्णस्मृत: । रक्तकफदाहानां तृषायाश्च विनाशन ।" अस्यार्द्रमूलस्य मुखे धारितं मुखदोषघ्नम् । वै.निघ. । [भनिर्वं ।

**ककुप्** । स्त्री । चम्पकमालायां । प्रवेण्याम् । मे.

**ककुभ:** । पुं । अर्जुनवृक्षे । प सु. । वृषे ।

**ककुभत्वक्** । स्त्री । अर्जुनवृक्षवल्कले । च द. । सि.यो यक्ष्म.चि ककुभादौ ।

**ककुभशाखा** । स्त्री । भार्ग्याम् । रत्ना. । [च. ।

**ककुभादनी** । स्त्री । मलीनामकगन्धद्रव्ये । श.

**कङ्कूणक:** । पुं, क्ली । शिशोर्नेत्रवर्त्मजरोगे । कटो । हि कोथुआए लक्षण यथा—"कङ्कूणक: क्षीरदोषाक्षिशूलनामचिवर्त्मनि । जायते तेन तन्नेत्रं कण्डूरञ्च स्रवेन्मुहु: । *शिशु: कुर्य्याल्ललाटाक्षिकूटनासावघर्षण* । शक्तो नार्कप्रभां द्रष्टुं न वर्त्मोन्मीलनक्षम. ॥ मा.बालरो नि । कङ्कूणक क्षीरदोषाक्षिशूलामचिवर्त्मनि । जायते सकण्डं नेत्रं कण्डूरञ्च स्रवेन्मुहु:... ॥ भा.म ४भ. ।

**कङ्कूल(क)म्** । क्ली, पुं । गोमयकदादिचूर्णसन्तापे । वा.टी.अरुण: । अपूपपचनार्थं मृण्मयपात्रे । "कङ्कूलं मद्गुभि: कीर्णं स्वभ्रे ना तु तुषानल: । तेन च मृण्मयमुत्तानमपूपपचनपात्रं लक्ष्यते" । वा.टी. हेमा. ।

**ककेरुक:** । पुं । क्रमिभेदे । See क्रमि: ।

निर्दोषिता स्वाल्पगुता च तेषाम् । रा.नि व ११ । अमृतचम्पकमर्त्यमाणिक्यादय इति । भा । आसा विशेषा तत्तत्पर्य्याये द्रष्टव्या । सामान्यत कदली गुणा —शीतला गुर्व्वी हृद्या स्निग्धा मधुरा पित्त रक्तविकारयोनिदोषाश्मरीरक्तपित्तघ्नी । कदली फल मधुर शीत विष्टम्भि कफकर गुरु स्निग्ध पित्तास्रतृड्दाहक्षतक्षयवातहरञ्च । पक्वफल—क षाय मधुर शीतल पित्तास्रघ्न गुरु मन्दाग्नी अपथ्य शुक्रवर्द्धन क्लमतृष्णाहर कान्तिद दीप्ताग्नौ सुखद कफरोगकर दुर्जर सन्तर्पणञ्चेति । "हृद्य मनोज्ञ कफवृद्धिकारि शान्तञ्च सन्तर्पणमेव बल्यम् । रक्त सपित्त श्वसनञ्च दाह रम्भाफल हन्ति सदा नराणाम् ॥ सदाह्यपक्वञ्च सुशीतलञ्च कषायक वा तकफ करोति । विष्टम्भि बल्य गुरु दुर्जरञ्च आर ण्यरम्भाफलमेव तद्वत् ॥" अत्रि.१७अ । कादम्बी मृगे । कृष्णसार । पृश्निपर्ण्यां । চাকুলিয়া । मे ।

कादलि(ली)चता । स्त्री । कर्कटीभेदे । वै निघ. ।

कदलीकन्दः । पुं । रम्भामूले । কলার এটে । हिं केराकन्द । तें अरटिदुप । गुणा —"शीतल कदलीकन्दो बल्य केश्योऽम्लपित्तजित् । वह्निकृद्दाहहारी च मधुरो रुचिकारक ॥" मद.व.६ ।

कदलीकुसुमम् । क्ली । रम्भापुष्पे । কলার মোচা বা ফুল । गुणा —"कदल्या कुसुम स्निग्ध मधुर तुवर गुरु । वातपित्तहर शीत रक्तपित्तक्षयप्रणुत् ॥" वै निघ. ।

कदलीजलम् । क्ली । कदलीरसे । কলার জল । गुणा —"कदल्यास्तु जल शीत ग्राहक मूत्रकृच्छ्रहृत् । मेह ह्यर्श कर्णरोग चातिसारञ्च ना शयेत् ॥ अस्थिस्राव रक्तपित्त विस्फोट रक्तपित्तकं । योनिदोषञ्च दाहञ्च नाशयेत् ॥" "सारः कदल्या सग्राही चाग्निदा गुरुशीतल । वक्त्रदाहमूत्रकृच्छ्रातिसारमेहादि शोषकम् । अस्थिस्राव रक्तपित्त विस्फोटादीन् नाशयेत् ॥" वै निघ ।

कदलीदण्डः (नालः) । पुं । थोड इति ख्याते मोचाद्गर्भस्थकोमलदण्डाकारे । ग च । गुणा —"योनिदोषहरो दण्ड कादल्योऽश्मदर जयेत् । रक्तपित्तहर शीत गुरुश्चोऽग्निदनाशन ॥"

कदलीमूलम् । क्ली । कदलीमूले । गुणा —बल्य वातपित्तघ्न गुरु च ।

कदलीमृगः । पु । शबलमृगे । "स. प्रायश पूर्व्वदेशे प्रसिद्ध । स तु बृहत्तमविडालसमानाकारो विज्ञेय ।" सु चि ८अ ।

कदलीवल्कलम् । क्ली । प्रसिद्धाया कदलीत्वचि । কলার পেটো । गुणा —तिक्त कटु लघु वातहरञ्च । कै. निघ. ।

कदलीसारः । पु । कदलीरसे ।

कदलीच्या । स्त्री । फललताभेदे । শশা গাছ, কাঁকুড় গাছ ।

कदश्वः । पु । कुत्सिताश्वे ।

कदाख्यम् । क्ली । कुष्ठौषधौ । कुड । ग.च ।

कदुष्णम् । त्रि । ईषदुष्णे । अम. । क्ली । उष्णतायाम् । अम ।

कनक. । पु, क्ली । कासमर्द्दक्षुपे । रा.नि व ४ । नयपालवृक्षे । रक्तपलाशवृक्षे । च चि १अ । नाग केशरवृक्षे । काञ्चनारवृक्षे । রক্তকাঞ্চনফুলের গাছ । चम्पकवृक्षे । কাঁটালিচাঁপা বা চাঁপাফুলের গাছ । कृष्णागुरुवृक्षे । मे कचिक । धुस्तूरवृक्षे । म सु । "निशाकनककल्काभ्या ।" कनकगुग्गुली । रा नि व.१२ । लाक्षातरौ । म मा. । कृष्णधुस्तूरे । रा नि व १० । কনকধুতুরা । भैष.वातरक्ताधि विषतिन्दुतैले ।

कनककान्दर्परसः । पुं । वाजीकरणे औषधम् । अथ हेमाद्रिसुन्दरतुल्य एव केवलमत्र स्वर्ण वैक्रान्त काष्ठलौहञ्च रसपादं देयम् । পারা, গন্ধক প্রত্যেকে সমভাগ । কান্তলৌহ, বৈক্রান্ত এবং স্বর্ণ প্রত্যেকে পারার চতুর্থাংশ । অগ্রে কজ্জলি করিয়া তাম্রপাত্রে কালধুতুরের রস, মরিচার তৈল, কাল ধুতুরার রস দ্বারা প্রত্যেকে তিন দিন নাড়িবে । শুষ্ক হইলে বালুকাযন্ত্রে মন্দ মন্দ পাক করত বাটুরা ওজ হইলে জ্বাল নিবাইবে । শীতল হইলে নামাইয়া ঔষধ গ্রহণ করিবে । অনুপান ঘি, চিনি ও মধু । रस.र. ।

कनकगैरिकम् । क्ली । स्वर्णगैरिके । সোনাগেরি । भा.प्र अम.विवधि. । [চাঁপা ।

कनकचम्पकः । पु । चम्पकविशेषे । কনক-

**कथिका** । स्त्री । तक्रादिसाधितखाद्यद्रव्यविशेषे । कढ़ीति महाराष्ट्रे । प्रकारश्च यथा—माल्य म मधुर तक्र सैन्धवेन तथा युतम् । पिष्ट मरीचं चाणक निक्षिप्य सुनिधाय च । तप्तस्याज्यां घृत वाय तैल तक्र च निक्षिपेत् । तस्मिन्निशां रामठञ्च पश्चात्स्थालीं पिधाय च । तक्राई निक्षिपेत्तस्यां पिधाय च पुन क्षिपेत् । बहुदीत्पत्तिपर्य्यन्त पक्वा सा कथिकाभिधा । कथिका पाचनी रुच्या लघ्वी च वह्निदीपनी । कफानिलविबन्धघ्नी किञ्चित्पित्तप्रकोपिनी ।' वै निघ ।

**कदनम** । क्ली मारणे । जटा ।

**कदन्नम्** । क्ली । कुत्सितान्ने । कदर्य्यान्ने । जटा

**कदम्ब** । पु । (Anthocephalus Kadamba Syn Nauclea Kadamba.) स्वनामख्याततरुवे । कदम गाछ । म कलम्बु । क कडेब । तै कडिमिचेट्टु । र मा । साधारणगुणा—मधुर शीत कषाय लवण गुरु सर विष्टम्भकृत् रुच कफक्षत्यानिलप्रदश्च । 'कदम्बस्तित्तकटुक कषायो वातनाशन । शीतल कफपित्तादिनाशन शुक्रवर्द्धन ॥ रा नि व ६भा पू १भ । कदम्बिका गु मधुरा शीतला तुवरा गुरु । मलस्तम्भकरी चारा रुच्यासन्यकफप्रदा । वातला मानभिग्नोक्ता फल लस्ताम् शीतलं । तुवर मधुर पित्तरक्तदोषहरं मतम् । वै निघ । चत्र शाङ्ग—"नीपो महाकदम्ब स्याद्धाराकदम्ब इत्यपि । द्वितीयोऽन्यप्रकारश्च हलपुष्प कदम्बक ' इति भेद । तथा रवेऽपि "हारिद्रस्तु रजोवल । धूलीकदम्बकी धाराकदम्ब षट्पदप्रिय हलपुष्प केशरा ख्य प्रावृषेण्य कदम्बक । नीपो महाकदम्बोऽपि तथा बहफलो मत ।" भ टी भ । सु मू २८ष लोध्रादौ । वा मू १५ष न्यग्रोधादौ । सर्षपवृक्षे । मे देवताडवृक्षे रवा । क्ली । माचिके । हे च

**कदम्बक** । पु । कदम्बवृक्षे । त्रिकावनौ । हरिद्रुवृक्षे । रा नि व ६ । सर्षपवृक्षे । प मु हे च । श्चत्र स पादरोगभेदे । लक्षण—कदम्बफलमावलु मण्डूकीमध्यसंस्थित । मांसाङ्कुर कदम्बाख्य ते श्वाचिलसम्भव ।" अ द २८ष ।

**कदम्बका** । स्त्री । कलहस्याम् । वै निघ ।

**कदम्बद** । पु । सर्षपे । शब्द ।

**कदम्बनिर्य्यास** । पु । कदम्बस रैदकै । कदमेर आठा । च मू ४ष । [कुमुदी ।

**कदम्बपुष्प** । पु । हरिद्रुवृक्षे । क्ली । कदम्ब

**कदम्बपुष्पगन्धः** पु । कलमशाली । कलमाधान् । रा नि व १६ ।

**कदम्बपुष्पा** । स्त्री । महाश्रावण्याम् । गौरख मुण्डोति प्रसिद्धा । मुण्डीरी । रा नि व ५ ।

**कदम्बपुष्पिका (ष्पी)** । स्त्री । महाश्रावणिकायां । मुण्डीरी । हि गौरखमुण्डी । भा पू १भ । सु चि १८ष । "कदम्बपुष्पीं मन्दारी ।"

**कदम्बवायु** । पु । सुगन्धवायौ ।

**कदम्बा (म्बी)** । स्त्री । देवदालीलतायाम् । रा नि व ३ ।

**कदम्बिका** । स्त्री । कदम्बवृक्षे । वै निघ ।

**कदर (रा)** । पु, स्त्री । A white sort of mimosa श्वतखदिरे । पांपडिखदरे । तै तेल्लतुम्मचेट्टु वेल्लतुम्मचेट्टु । बर्बूरवृक्षे । ढौटौ दाबना गाछ । र मा । "खदिराङ्गार दसार ।" वा मू १५ष असनादिव । खदिर कदरभक्ष्यौ । ' कदर खदिराकार श्वेतसार । सु मू ३८ष ड । च मू ४ष ४१दशके । क्रकचे । क्ली ।

**कदरम्** । क्ली । व्याधिभेदे । कुनखाँटि कडाआमुडा । मे रविक । लक्षणम्—' शर्करोन्मथिपादे चते वा कण्टकादिभि । ग्रन्थि कीलवदुत्सन्नो जायते कदर हि तत्" मा नि सु नि १३ष पायसभेदे । श्र मा । [चाटुलिया । मे । श्र र.

**कदल (क)** । पु । कदलीवृक्षे । पृश्निपर्णी

**कदलम्** । क्ली । नराङ्कुरे । कपाले । मे लविक

**कदला** । स्त्री । कदलीवृक्षे । पृश्निपर्ण्याम् चाटुले । शाल्मलीवृक्षे । डिम्बिकायां मे लविक

**कदलिका (ली)** । स्त्री (Musa sapientum) स्वनामख्यातवृक्षे । कला गाछ । हि केला सवेज कैलापेड़ । तै अरटिचेट्टु कुकवेट्टु, दौ कलोगे । कदली बहुधा—काष्ठकदली, गिरिकदली, सुवर्णकदली, महेन्द्रकदली, इत्यन्यापि । "माणिक्यमर्त्यामृतचम्पकाद्या भेदा कदल्या बहवोऽपि सन्ति । उक्ता गुणास्तेष्वधिका भवन्ति

चाधिकारे। तत्र—रसगन्धः चित्रकः। तुर्य्यभागेन चतुर्थभागेन। पाठः—रसस्य तुर्य्यभागेन हेमभस्म प्रयोजयेत्। मनःशिला गन्धकञ्च तुल्यं माक्षिकतालकं॥ विषं टङ्कणकं सर्व्वं रसतुल्यं प्रदापयेत्। मर्द्दयेत्सर्व्वमेकत्र खल्लपात्रे च निर्म्मले। जयन्तीभृङ्गराजोत्थैः पाठाया वासकस्य च। अगस्तिलाङ्गलाग्नीनां स्वरसैश्च पृथक् पृथक्। भावयित्वा विशोष्याथ पुनश्चार्द्रकवारिणा। सप्तधा भावयित्वा च रसः कनकसुन्दरः॥ गुञ्जाद्वयं चयं वास्य राजयक्ष्मप्रशान्तये। मधुना पिप्पलीभिर्वा मरिचैर्वा घृतान्वितं॥ सन्निपाते प्रदातव्यमार्द्रकस्य रसेन वै॥ जयपालरजोभिर्वा गुल्मिने शूलरोगिणे। अम्लवर्ज्यं भवेत्पथ्यम्..॥ र.सा.स.। পারা, মনছাল, গন্ধক, তুঁতে, স্বর্ণমাক্ষিক, হরিতাল, বিষ, সোহাগা প্রত্যেকে সমান ভাগ, পারার চতুর্থাংশ স্বর্ণ। জয়ন্তী, চিতে, বাসক, বক, ইশলাঙ্গুলি, ভীমরাজ, আকনাদি ইহাদের রসে এক এক ভাবনা। পরে আদার রসে ৭ ভাবনা।

**कनकस्तम्भा** । स्त्री। सुवर्णकदलीवृक्षे। [কলা গাছ। रा नि.व.११। চাঁপা

**कनकक्षारः** । पुं। टङ्कणक्षारे। সোহাগার খৈ। रा.नि.व.१३।

**कनकक्षीरी** । स्त्री। सुवर्णक्षीर्य्याम्। শেয়ালকাঁটা, সোণাথিরুই। पीतकण्टकधुस्तूरे। सातलायाम्।

**कनककान्त(र)कः** । पुं। कोविदारवृक्षे। রক্তকাঞ্চন বৃক্ষ। रा नि.व.१०। See काञ्चनारः।

**कनकालुका** । स्त्री। सुवर्णभृङ्गारे। झारा।

**कनकासवः** । पुं। हिक्काश्वासे आसवः। पाठ. "सङ्गृह्य कनकं साध्वामूलपत्रफलैः सह। ततस्तु पलयाम्य स्फमूलत्वचस्तथा। मधुकं मागधी व्याघ्री केशरं विश्वभेषजं। भार्गी तालीसपत्रञ्च सचूर्णैर्या पलद्वयम्। संगृह्य धातकीप्रस्थं द्राक्षायाः पलविंशतिम्। जलद्रोणद्वयं दत्त्वा शर्करायास्तुलां तथा। क्षौद्रस्यार्द्धतुलाञ्चापि सर्व्वं संमिश्य यत्नतः। भाण्डे निक्षिप्य चावृत्य निदध्यान्मासमात्रकम्..."॥ ধুতুরার ফল মূল পত্র শাখা মিলিত ৪প. বাসকমূলের ছাল ৪ প. পিপুল, যষ্টিমধু, কণ্টিকারী, নাগেশর, শুঁট, বামুনহাটী, তালীশপত্র প্রত্যেকে চূর্ণ ২ প. ধাইফুল ১৬ প. দ্রাক্ষা ২০ প জল ১২৮ শ. শর্করা ১২॥০ শ. মধু ৬।০ সের একত্র কলসে ১ মাস রাখিয়া ছাঁকিয়া লইবে। भैष।

**कनकाह्वः (यः)** । पुं, क्ली। श्वेतधुस्तूरे। लगुडीयशाके। वै निघ.। जैपालवृक्षे। प.मु.। धुस्तूरवृक्षे। रा.नि व.१०। नागकेशरवृक्षे। रा.नि व.६। र मा।

**कनकोद्भवः** । पुं। महासर्ज्जवृक्षे। वै निघ.।

**कननः** । त्रि। काणे। কাণা। श.च.।

**कनिक्या** । स्त्री। समितायाम्। श.चि.।

**कनिचिः** । स्त्री। पुरणे। ওল। प.मु। गुञ्जायां। কুঁচ।

**कनिष्ठकम्** । क्ली। शूकतृणे। श.च.।

**कनिष्ठा** । स्त्री। अङ्गुष्ठात्पञ्चमाङ्गुलौ। কড়ে আঙুল। रा.नि.व.१८।

**कनी** । स्त्री। कन्यायाम्। हे.च.।

**कनीचिः** । स्त्री। गुञ्जालतायां। কুঁচ গাছ। श.र.। सपुष्पलतायां। उणादिकोषः।

**कनीनिका (नी)** । स्त्री। अक्षितारके। रा.नि.व.१८। अक्षस्य नासासमीपभागे। अ.द.२अ.। कनिष्ठाङ्गुलौ। मे.कचतुष्क।

**कनीयसम्** । क्ली। ताम्रे। हे च।

**कनीयान्** । पुं। सोमलताभेदे। सु.चि.२९ अ.। See सोमः। त्रि। अणुनि। निपातः। अल्पे। मे.।

**कनीयःपञ्चमूलम्** । क्ली। त्रिकण्टकबृहतीद्वयपृथक्पर्णीविदारिगन्धानाम्। त्रिकण्टकं गोक्षुरे। विदारिगन्धा शालपर्णी। सु सू ३८अ.।

**कनेरा** । स्त्री। हस्तिन्याम्। वै निघ.।

**कन्तुः** । पुं। हृदये। वै.निघ।

**कन्था** । स्त्री। स्यूतकर्पटे। কাঁথা। अम.। चीरे। तूलपूर्णगात्रवस्त्रे। লেপ।

**कन्थारी** । स्त्री। स्वनामख्यातवृक्षे। कण्टिमनसा। सं क कांथारी, कातरु, फणीनिवडुंग कोइरी। गुणा.—कटुतिक्तोष्णा वातकफघ्नी शोथघ्नी दीपनी

**कनकजीद्भवः** । पु । राजी । धूनो । रा नि व १२ ।

**कनकतैलम्** । क्ली । क्षुद्ररोगाधिकारे तैलम् । "मधुकस्य कषायेन तैलस्य कुडव पचेत् । कल्कैः प्रियङ्गुमञ्जिष्ठाचन्दनोत्पलकेशरैः । कनक नाम तत्तैल मुखकान्तिकर परम् । अभीरुनीलिकाव्यङ्ग शोधन परमार्चितम् ॥" च द. । तिलतैल १ श क्काथार्थे—यष्टीमधु १ श जल १६ श शे. ४ श । कल्कार्थे—प्रियङ्गुमञ्जिष्ठारक्तचन्दननीलोत्पलनागे श्वराणां प्र. ४ तो. ।

**कनकपरागः** । पु । सुवर्णरेणौ ।

**कनकपलः** । पुं । स्वर्णादिपरिमापकषोडश मापके । ১৬ মাষা । হারা ।

**कनकपुष्पिका (ष्पी)** । स्त्री । गणिकारि कायाम् । द्रुमोत्पले । ওলট কম্বল । वै निघ ।

**कनकप्रभः** । पु । सोमलताभेदे । सु चि २८ ऋ. । See सोम ।

**कनकप्रभा** । स्त्री । महाज्योतिष्मतीलतायाम् । বড লতাফট্কী । रा नि व ३ । पीतयूथिकायां । स्वर्णयूथिकायाम् । যুঁই । रा नि व १० । ज्वरातिसारोक्ते रसविशेषे । अत्र सुवर्णवीज कृष्णधुस्तूरवीजम् । मरालपाद धानकुनीति ख्यात । तथाहि विजयाक्काथे । "सुवर्णबीजं मरिचं मरालपाद कणा टङ्कणक विषञ्च । गन्ध जयाद्रिदिवस विमर्द्य गुञ्जाप्रमाणा वटिका विदध्यात् ॥" কালধুতুরার বীজ, মরিচ, থানকুনী, পিপুল, সোহাগার খৈ, বিষ, গন্ধক সমভাগ। সিদ্ধির রসে মর্দন । र.सा स. । [नि व १० ।

**कनकप्रसवा** । स्त्री । स्वर्णकेतकीवृक्षे । रा

**कनकप्रसूनः** । पु । धूलीकदम्बे । वै निघ ।

**कनकरम्भा** । स्त्री । सुवर्णकदल्याम् । চাঁপা কলা । रा नि व.११ । [१३।

**कनकरस.** । पु, क्ली । हरिताले । रा.नि.व.

**कनकल्लोद्भवः** । पु । सर्जरसे । धूना । रा. नि व १२ ।

**कनकवतीरसः** । पु । अर्शोऽधिकारे रस । पाठ.—"प्रद्रसूतं सम गन्ध तालसिन्धूत्थलाङ्गली । फलत्रयीपलैकैक लशुनञ्च चतुष्पल । कारवेल्ला द्रवैर्मर्द्य दिनैक वटकीकृत । गुञ्जामात्र सदा खादेत् पाडुजापि नाशयेत् । रक्तवातकफोत्थानि चार्शा सि नाशयेद्ध्रुवम् । वटी कनकवतीनाम चतुष्पानच कथ्यते । भल्लातत्रिफला दन्ती वह्निचूर्णं सम सम । सैन्धव सर्वतुल्य स्याद्वर्जयेत्खर्परे स्थिर । मदयित्वा भवेत्सिद्ध कर्षैकक त्रिदिवार ॥' পারা, গন্ধক, হরিতাল, সৈন্ধবলবণ, ঈশলাঙ্গুলিয়া, ইন্দ্রযব, তিৎলাউ প্রত্যেকে ১ পল, রশুন ৪ পল, উচ্ছেপাতার রসে মর্দন । বটী ১কুঁচ । र.र ।

**कनकबीजम्** । क्ली । धुस्तूरबीजे । कनकसुन्दररसे । See कनकसुन्दररस ।

**कनकसङ्कोचरस** । पु । कुष्ठाधिकारे रस । पाठ —"मृतस्वर्णाभ्रक सूत शुल्ब शुद्धमृतं त्रिभि सम । अम्लैर्मर्दन्तु तद्गोलं पिष्टा तुल्यञ्च गन्धक । कटुतैल युत पाच्य लौहे च मृदुनाग्निना । द्रवे जीर्णे विचूर्ण्याथ वह्निमूलकटुत्रिकै । त्रिविडङ्गविषैस्तुल्यै स्त्रिगुण त्रिफला विषात् । अजामूत्रे दिनं पिष्ट्वा गुञ्जैका भक्षयेद्वटीम् ।" क्रमेण २ गुञ्जा । अनुपानं वाकुचीतैल निष्कासित । रस र । স্বর্ণ, অভ্র, তাঁট এক এক ভাগ, পারা ৩ ভাগ, গন্ধক ৩ ভাগ, অম্লরসে পেষণ ও গোলকীকরণপূর্বক সেই গোলক লৌহপাত্রে সর্ষপতৈলের সহিত পাক করিয়া ভাজা ভাজা হইলে নামাইয়া চূর্ণ করিবে ও তাহাতে চিতামূল, ত্রিকটু, গুড়ত্বক্, বিড়ঙ্গ, বিষ প্রত্যেকে এক এক ভাগ ও ত্রিফলা ৩ ভাগ দিয়া ছাগমূত্রে মাড়িয়া বটী করিবে ।

**कनकसुन्दररसः** । पु । ज्वरातिसाराधिकारे रस । विजयाद्रवे मुक्तामनक्काथे । कनकस्य बीजं धुस्तूरबीजम् । अत्र टङ्कणस्याग्नि अभ्रक पर्यन्त केचित् । "शुद्धसूतं सम गन्ध मरिचं टङ्कण तथा । स्वर्णबीज सम सर्वं भार्गीद्रवैर्दिनार्द्धक । सुततुल्य मृतस्वार्भ रस कनकसुन्दर ॥" मात्रा १२ । अन्य —"हिङ्गुलं मरिचं गन्ध पिप्पली टङ्कण विषं । कनकस्य च बीजानि समांशं विजयाद्रवे । मर्दयेत् यामसात्रञ्च चणमात्रा वटीकृता॥" হিঙ্গুল, মরিচ, গন্ধক, পিপুল, সোহাগার খৈ, বিষ, ধুতুরবীজ সমান ভাগে সিদ্ধির কাথে মর্দন করিবে । বটী চণকপ্রমাণ । भैष. । द्रवैर ह

ঘম্। যথা—কটু তৈল ৪ শ। ক্বাথার্থ—ছাতিমছাল, কালিযাকড়া, গুলুঞ্চ, নিম্ছাল, শিরীষছাল, ঘোডানিম্ বা তিৎপলতা, জয়ন্তীপত্র, তিৎলাউ, রাখালশশার মূল বা গোবক্ষচাকুলে, হরিদ্রা প্রত্যেকে ১০ প. জল ৬৪ শ. শে. ১৬শ.। গোমূত্র ১৬ শ শোণালুপাতা, ভীমরাজ, জযন্তীপত্র, ধুতুরাপাতা, হরিদ্রা বা আমলা, সিদ্ধি খর্জ্জুর পত্র, গোময, আকন্দপত্র, সিজুবপাতা প্রত্যেকে স্বরস ৪ শ। কল্কার্থ—মাকালফল, বচ, ব্রহ্মীশাক, তিৎলাউ, চিতামূল, গোযালিনী, কুঁচিলা, মনছাল, আম্লা, খুদে নটে, গেঁটেলা, শোণালি, আকন্দ আটা, কালকাসন্দা, ঈশের মূল,আউচ, মঞ্জিষ্ঠা, ঘোড়ানিম্ বা তিৎপলতা, রাখালশশামূল, বিছাতিমূল, গন্ধভাদুলিয়া, হাপরনালী, মুস্তা, ছাতিমছাল, কুড়চিছাল, নিমছাল, ঘোড়া নিম্, গুলুঞ্চ, সোমরাজীমূল, হাকুচবীজ, চাকন্দাবীজ, ধনে, ভীমরাজ, যষ্টিমধু, কুন্দুরুখোটী (কান্দরুমিতি পাঠঃ) বন ওল, শটী, কট্‌কী, দারুহরিদ্রা, তেউড়ী, পদ্মকাষ্ঠ, পিপুলমূল, অগুরু, কুড়, কট্‌ফল, জটামাংসী, কর্পূর, সিদ্ধির পাতা, এলাচ, গুড়ত্বক্, টুম্বরিফল, হরীতকী, বহেড়া প্রত্যেকে ২ তোলা। গা.কৌ.শেষ পাঠঃসংগ্রহে দ্রষ্টব্যঃ।

**कन्दलः** । पुं । कपाले । कनके । धरणिः । क्षत्रसारमृगे । ह.च. । क्ली । शिलीन्ध्रपुष्पे । त्रिका. । कमलबीजे । कदलीपुष्पे । आर्द्रके । रा नि.व.६ । सूरणे । भा.पू.१भ भा.व । गण्डस्थले । अङ्कुरे । कोमलशाखायाम् ।

**कन्दलता** । स्त्री । मालाकन्दे । रा.नि.व.७ । चुद्रकारवेल्ल्याम् । वै निघ ।

**कन्दलिन् (ली)** । पु, स्त्री । पद्मबीजे । पद्मेर बीज । रा.नि.व.१० । सु.सू.२९ष.पित्तप्रशमने । मृगविशेषे । गुल्मभेदे । मे.त्रिकं ।

**कन्दलीकुसुमम्** । क्ली । शिलीन्ध्रे । কোড়কছাতা । श.च. ।

**कन्दवर्गः** । पुं । कन्दजातिमात्रे । গেঁড়ো, গেঁড়্। यथा—विदारीकन्दशतावरीमृणालबिसकशेरुशृङ्गाटपिण्डालुमध्वालुहस्त्यालुकाष्ठालुशङ्खालुरक्तालुकेन्दीवरोत्पलकन्दादिषु । गुणाः—रक्तपित्तहराणि शीतानि मधुराणि गुरूणि बहुशुक्रकराणि स्तन्यवृद्धिकराणि च । सु सू.४६अ. । "सूरणः पिण्डपिण्डालू पलाण्डुर्गृञ्जनस्तथा । ताम्बूलपर्णकन्द' स्यात् हस्तिकन्दस्तथा परः । वराहकन्द' अम्यन्यः कन्दशाका इमे स्मृताः ॥" अत्रि १६अ. ।

**कन्दवर्द्धनः** । पु । Esculent root. सूरणे । रा नि.व.७ । कटुसूरणे । वै.निघ. ।

**कन्दवल्ली** । स्त्री । बन्ध्याकर्कोटक्याम् । रा नि.व.३ । भूमिकुष्माण्डे । वै निघ. ।

**कन्दविषम्** । क्ली । यस्य कन्दे विषं वर्त्तते । कालकूट वत्सनाभ सर्षप पालक कर्द्दम वैराटक मुस्तक शृङ्गी पुण्डरीक मूलक हलाहल महाविष कर्कटकानीति त्रयोदश कन्दविषाणि । एषु वत्सनाभानि चत्वारि, मुस्तके द्वे, सर्षपानि षट्, शिष्टानि एकैकमेवेति । "गुणाः—कन्दजानि तु तीक्ष्णाणि तेषां वक्ष्यामि विस्तरं । स्पर्शाज्ञानं कालकूटे वेपथुः स्तम्भ एव च । ग्रीवास्तम्भो वत्सनाभे पीतविण्मूत्रनेत्रता । सर्षपे वातवैगुण्यमानाहो ग्रन्थिजन्म च । ग्रीवादौर्बल्यवाक्सङ्गौ पालकेऽनुमताविह । प्रसेकः कार्द्दमाख्ये तु विड्भेदो नेत्रपीतता । वैराटकेनाङ्गदुःखं शिरोरोगश्च जायते । गात्रस्तम्भो वेपथुश्च जायते मुस्तकेन तु । शृङ्गीविषेणाङ्गसाददाहोदरविवृद्धयः । पुण्डरीकेण रक्तत्वमक्ष्णोर्वृद्धिस्तथोदरे । वैवर्ण्यं मूलकैश्छर्द्दिर्हिक्काशोफप्रमूढता । चिरेणोच्छ्वसिति श्यावो नरो हलाहलेन वै । महाविषेण हृदये ग्रन्थिशूलोद्गमो भृशम् । कर्कटेनोत्पतत्यूर्द्ध्वं हसन्दन्तान्दशत्यपि । कन्दजान्युग्रवीर्य्याणि प्रयुक्तानि त्रयोदश । रूक्षमुष्णं तथा तीक्ष्णं सूक्ष्ममाशुव्यवायि च । विकाशि विशदञ्चैव लघ्वपाकि च तत् स्मृतम् । सर्व्वाणि कुशलैर्योग्यान्येतानि दशभिर्गुणैः ।" सु कल्प.२अ ।

**कन्दशाकः** । पुं । See कन्दवर्गः । [वै निघ. ।

**कन्दशालिनी** । स्त्री । बन्ध्याकर्कोटक्याम् ।

**कन्दसूरणः** । पुं । सूरणकन्दे । ওল,কটুওল । रा नि.व ७ ।

**कन्दसम्भ्रम्** । क्ली । (Prolapsus uteri.) योन्यर्शसि । যোনিকন্দরোগ । त्रिका. । See

कन्दः आर्त्तौ कन्दरोग. ।

**कन्दा** । स्त्री । कन्दगुडूच्याम् । वै निघ ।

**कन्दाढ्यः** । पुं । धारणीनाममहाकन्दशाके । धरणीकन्द । रा.नि व ७ । वै.निघ. ।

**कन्दामृता** । स्त्री। कन्दगुडूच्यां । रा.नि व.३।

**कन्दार्हः** । पुं कन्दसूरणे । रा.नि व ७ ।

**कन्दालुः** । पुं । त्रिपर्णीलतायां । काष्ठालुके । धारणीनाममहाकन्दशाके । रा नि.व.७ ।

**कन्दिरी** । स्त्री । लज्जालुकायाम् । श चि. ।

**कन्दी** । पुं । कटुसूरणे । रा नि व.७ ।

**कन्दुः** । पु, स्त्री । लौहमयतुलपात्रे । ताओया। ⁺कड़ा. । सुराकरणपात्रे । गेन्दुके ।

**कन्दुकम्** । क्ली । पूगफले । सुपुरी । वै.निघ. ।

**कन्दुपक्वः** । त्रि। जलोपसेक विना केवल पात्रे अग्निना भृष्टतण्डुलादौ। यथा —"कन्दुपक्वानि तैलानि पायस दधि शक्तव । द्विजैरेतानि भो ज्यानि शूद्रगेहकृतान्यपीति" स्मृति ।

**कन्देयुः** । पुं । काशभेदे । কেশে । वै.निघ ।

**कन्दोटः** । पु, क्ली । शक्लोत्पले । कुमुदे । नी लोत्पले । अ र. ।

**कन्दोतः** । पुं । कुमुदे। त्रिका । श्वेतपद्मे । अ र ।

**कन्दोत्थम्** । क्ली । नीलोत्पले । नीलउत्पि । रा.नि.व.१० ।

**कन्दोद्भवा** । स्त्री । कन्दगुडूच्यां । रा.नि व.३। क्षुद्रपाषाणभेदायाम् । रा नि.व ५ ।

**कन्दौषधम्** । क्ली । आर्द्रके । वै.निघ. ।

**कन्धरः** । पुं । मारिषशाके । मेघे । क्ली । समा रस दश तक्रं कन्धरमित्यने । कु.टी श्रीकण्ठ । सक्षीरं दधि कन्धरं । सि.यो.षट्कन्धरतैले ।

**कन्धरा** । स्त्री । मानविशेषे । वै निघ । ग्रीवा याम् । रा.नि व. १८ ।

**कन्धिः** । स्त्री । ग्रीवायाम् । हारा. ।

**कन्धुकः(कः)** । पु। भूमिबदरे । आरण्यबदरे । वन कून । वै निघ. ।

**कन्नम्** । क्ली । मूर्च्छायाम् । श.मा ।

**कन्यका** । स्त्री । गृहकन्यायाम् । घृतकुमार्यां । रा नि व ५ । कन्यायाम् । दृष्टौ ।

**कन्यसा** । स्त्री । कनिष्ठाङ्गुलौ ।

**कन्या** । स्त्री । घृतकुमार्यां । घृतकुमारी । रा नि.व ५ । स्थूलैलायाम् । रा नि.व ६ । वारा हीनाममहाकन्दशाके । रा.नि व ७ । कुमार्यां । रा.नि व १८ । नार्याम् । महौषधिविशेषे । See औषधि । बन्ध्याकर्कोटिका । रा नि.व.३। (Aloes perpoliata.) मुसब्बर इति ख्यातद्रव्ये । बन्ध्या यां । गान्दिनी । कन्दगुडूच्यां । वै.निघ. ।

**कन्याटः** पु । लम्पटे । कामुक । हारा. । आभ्यन्तरगृहे ।

**कन्युषम्** । क्ली । वस्तपुच्छे । हारा । बन्ध्याक- र्कोटकीफले । भा.पू.१भ ।

**कपटम्** । क्ली । चीडादेवदारुणि ।

**कपटचीड़ा** । स्त्री । चीडानामदेवदारुविशेषे। रा.नि व १२ ।

**कपटा** । स्त्री । कृष्णवृन्त्याम् ।

**कपटिनी** । स्त्री । चीडानामगन्धद्रव्ये देवदारौ वा । रा नि.व.१२ । [अ र ।

**कपटी** । स्त्री । परिमाणभेदे । एक आँकाड़।

**कपटेश्वरी** । स्त्री । श्वेतकण्टकार्यां । रा नि. व.४ । कृष्णवृन्त्याम् । वै निघ. ।

**कपर्दः** । पु । वराटके । कड़ि । तद्भेदा यथा – सुवर्णवर्णा सिंही धूम्रवर्णा व्याघ्री पीतपृष्ठा सितोदरा मृगी श्वेतवर्णा हंसी विदन्ता माति दीर्घा च । गुणा. —कटुतिक्तोष्णकर्णशूलव्रणगुल्म शूलनेत्ररोगनाशिनानि । रा नि व.१३ । "कपर्द कटुकस्तीर्ण्यो हृद्यश्चाग्निप्रदीपन । तिक्त शीत कर्णशूलव्रणनेत्ररुजापह । ग्रहणी गुल्मशूलानि . परिणामं क्षय तथा । वातं कफं नाशयतीवं प्रोक्तो मनीषिभि. ॥" वै.निघ. । शोधनं शङ्खवद्वि ज्ञेयम् ।

**कपर्दकरसः** । पुं । रक्तपित्ताधिकारे रस । "सूतं वा मूर्च्छितं सूतं कार्पासपुष्पजैर्द्रवैः । मर्द येद्दिनमेकन्तु तेन पूर्या वराटिका। निरुध्य भाण्ड- मूषायां भाण्डे दत्त्वा पुटे पचेत् । उद्धृत्य चूर्णये

च्छूर्णं मरिचद्विगुणै सह। गुञ्जैकैकं घृतैर्लेह्यं रक्तपित्तं नियच्छति। कपर्द्दकरसो नाम असाध्य साधयत्यलम्। उदुम्बरफल पक्व घृतै, पाच्य सितायुत। भक्षयेन्मरिचैर्युक्तमनु स्याद्रक्तपित्तनुत्॥" रस र.। কাপাস ফুলের রসে একদিন মর্দ্দিত মূর্চ্ছিত পারদ ২ তো. কড়ির ভিতর ভরিয়া কড়ির মুখ রুদ্ধ করিবে। পরে সেই কড়ি অন্ধমূষাযন্ত্রে রাখিয়া পুটপাক করিবে। শীতল হইলে তুলিয়া ৪ তো মরিচের সঙ্গে একত্র চূর্ণ করিবে। মাত্রা ১ কুঁচ।

**कपर्द्दा** । स्त्री । वराटके । वै.निघ. ।

**कपर्द्दिः** । पुं । कपर्द्दके । रा.नि.व.१३ ।

**कपर्द्दिका** । स्त्री । वराटिकायाम् । [शब्द. ।

**कपाटशयनम्** । क्ली । उत्तानशयने । सु चि

**कपाटसन्धिकः** । पुं । अभ्यन्तरदीर्घैकपालि रित्स्रात्सपालिरित्येव कर्णबन्धनाकृतिविशेषे । सु. सू.१६ष. । [गन्धकाष्ठविशेष । रा.नि व १२ ।

**कपाटिनी** । स्त्री । चीडानामदेवदारुभेदे ।

**कपालः** । पु, क्ली । मृन्मयघटादिखण्डे । খাপড়া, খোলাকুচি । रा.नि.व.१८ । भा.म.४भ. सु.रो.चि. । मस्तकाद्यस्थिषु । तानि च नितम्ब तालुशङ्खांसदेश मस्तक गण्डस्थल जानु शङ्खवह्नय-शिरोऽस्थीनि । सु.शा.५भ. ।

**कपालकुष्ठम्** । क्ली । महाकुष्ठभेदे । अस्य लक्षणम्—"कृष्णकपालिकाप्रकाशानि कपालकुष्ठानि।" सु.नि ५भ । "कृष्णारुण कपालाभं यद्रुच परुषं तनु। कपालं तोदबाहुल्यं तत्कुष्ठं विषमं स्मृतम्॥" भा. । [निका. ।

**कपालनालिका** । स्त्री । तर्कुट्या । টেকো।

**कपालरोगः** । पुं । शिरोरोगे ।

**कपालास्थि** । क्ली । स्वनामख्यातशरीरस्थास्थिकर्परसदृशास्थिनि । "जानुनितम्बांसतालुगण्डशङ्खशिरोऽस्थीनि तथाप्यभिधीयते" । सु शा.५भ ।

**कपालिका** । स्त्री । दन्तरोगविशेषे । तल्लक्षणं —कपालेष्विव दीर्यत्सु दन्तानां सैव शर्करा। कपालिकेति पठिता सदा दन्तविनाशिनी॥ भा.नि. सु.नि.१६ । शवकर्परिकायाम् । सु चि,१भ. ।

**कपाली** । स्त्री । विडङ्गायाम् । रा.नि व.६ ।

**कपिः** । पु, स्त्री । वानरे । रत्ना. । सिह्लके । शिलারস । रा नि.व.१२ । आम्रातके । शूकशिम्ब्याम् । करञ्जविशेषे । श.च ।

**कपिकच्छुः (च्छूः)** । स्त्री । शूकशिम्ब्याम् । আলাকুশী । सि.यो.उन्मा चि. । 'कपिकच्छाद्यवा तस्म् । 'See आत्मगुप्ता ।

**कपिकच्छुफलम्** । क्ली । शूकशिम्ब्या. फले। আলাকুশীর বীজ ।

**कपिकच्छुफलोपमा** । स्त्री । जन्तुकार्यां । जन्तुकारीति मालवे । रा नि व.३ ।

**कपिकच्छुरा** । स्त्री । शूकशिम्ब्या । प सु । See आत्मगुप्ता । [शुली । श.च. ।

**कपिकन्दुकम्** । क्ली । शिरोऽस्थिनि । মাথার

**कपिका** । स्त्री । नीलसिन्धुवारवृक्षे । रा.नि व. ४ । अर्कवृक्षे । रत्ना. । [খুলি । র.মা. ।

**कपिकोलिः** । पुं । शृगालकोलिकायां । শে-

**कपिचूड़ः (ड़ा)** । पुं, स्त्री । आम्रातकवृक्षे । আমড়া গাছ । रा.नि.व ११ ।

**कपिचूतः** । पुं । अश्वत्थभेदे । पलाशपिप्पल । गजकुण्डसदृशोरा इति । भा.पू.१भ.वटा.व. । आम्रातकवृक्षे । त्रिका. । [१२ ।

**कपिजः** । पु । सिह्लके । शिলারস । रा नि व.

**कपिजङ्घिका** । स्त्री । तैलपिपीलिकायाम् । श.च ।

**कपिञ्जलः** । पु । A bird, the francoline partridge. चातकपक्षिणि । ফটিকজল পাখি । गौरतित्तिरौ । পাছানাড়া পাখি । कपिञ्जल इति भाषे. कथिती गौरतित्तिरिः । भा । मांसगुणाः—शीतलं मधुरं लघु अतएव रक्तपित्ते रक्तश्लेष्मविकारे मन्दवातविकारे च प्रशस्तं । चक्र द. । तथा एतस्य मांसं चटकमांसाच्छीतलं । इदं रोचकञ्च । रा.नि.व.१७ । शिलारसे । शिलারস । ककातुया इति ख्याते पक्षिणि । कैचित् ।

**कपिञ्जला** । स्त्री । शालिधान्यविशेषे । सा श्लेष्मकरी । धन्व,१५ष. ।

**कपितैलम्** । क्ली । शिलारसे । रत्ना । तुरुष्कनामकगन्धद्रव्ये । भा ।

**कपि(वि)त्थः (क)** । पुं । (Feronia elephantum.) स्वनामख्यातवृक्षे । কয়েৎ গাছ । हिं कैथ् । म कविठ । क बेललु । तैं वेलगचेट्टु । पम् । गुणा —मधुराम्ल कषाय तिक्त शीतल वृष्य पित्तानिलघ्न सग्राही व्रणघ्न । आमं कपित्थमस्त्रीष्ण कफघ्न ग्राहि वातल । दोषत्रयहर पक्व मधुराम्लरसं गुरु । अपिच । आम जिह्वाजाड्यकर त्रिदोषवर्द्धन विषघ्न रोचक सग्राहि । पक्व श्वास वमिश्रमक्लमहरं हिक्कापनोदनम् । रा नि व ११ । "कपित्थमस्त्रं मधुर कषाय विशदं गुरु। कासातिसारहृद्रोगच्छर्द्दिकफरुजापहम् । कपित्थ मधुर शीत कषाय ग्राहक लघु" । अत्रि सू १७अ. । तत्फलमम्ल श्लेष्माणं शमयति रूक्षवीर्य्यत्वात् । सु सू ४०अ.। अपिच—"कपित्थमामं सग्राहि कषाय लघु लेखन । पक्व गुरु तृषाहिक्काशमन वातपित्तजित् । स्वादम्ल तुवर कण्ठशोधन ग्राहि दुर्ज्जरम्" ॥ भा । अश्वत्थवृक्षे ।

**कपित्थतैलम्** । क्ली। कपित्थबीजतैले। गुणा —"कपित्थतैल तुवर स्वादु चाखुविषापहम् ।" वै निघ ।

**कपित्थत्वक्** । क्ली । एलवालुके । रा नि व.४ ।

**कपित्थपत्रा (र्णी)** । स्त्री । वृक्षविशेषे । कपित्थालीति कवटपत्रीति महाराष्ट्रे । गन्धविवडार गाछ । रत्ना. । गुणा —"कपित्थपत्रा तीक्ष्णोष्णा ... कटुः ... । ... तिक्ता कृमिकफमेदसी ... जयेत् स्नायुरोग नाशयति ।" वै निघ

**कपित्थानी** । स्त्री । *कपित्थपत्राम् ।

**कपित्थाम्रः** । पु । आम्रभेदे । वै निघ ।

**कपित्थार्ज्जकः** । पु। श्वेतार्ज्जके । तुलसीभेदे । मद व.२ । [মুখপোড়া । भिका. ।

**कपित्थास्यः** । पु । वानरविशेषे, गोलाङ्गूले ।

**कपित्थाष्टकचूर्णम्** । क्ली । ग्रहण्यधिकारे । अत्र यमान्यादीनां प्रत्येकमेकैक भाग, मरिचादिकादिदाडिमान्तानां प्रत्येकं भागत्रयम्, शर्कराया षड्भागान् कपित्थफलचूर्णस्य चाष्टभागानेकत्र मेलयेत् । शर्कराया षट्तिंशत्भागा इति वा टी. । कश्चित्त "षड्गुणसिते कपित्थाष्टगणे" पठति। सुतरां तन्मते यमान्यादीनामनेकभागस्थले कपित्थस्याष्टौ भागा कपित्थात्र षड्गुणा सिता भवन्ति । अपरे च सर्व्वचूर्णापेक्षया षड्गुणसिता अष्टगुणकपित्थचूर्णं ददति । च.द. । आम चित्रके । जल बालके । যমানী, পিপুলমূল শুড়ত্বক, তেজপত্র, এলাইচ নাগেশ্বর, শুঁট্, মরিচ, চিতের মূল, বালা, জীরক, ধনে, সৌবর্চললবণ প্রত্যেকে ১ ভাগ, তিন্তিড়ী, ধাইফুল, পিপুল, বেল শুঁটা, পাটিয়া লোধ, দাড়িমছাল প্রত্যেকে ৩ ভ. চিনি ৬ ভ. কপিত্থচূর্ণ ৮ ভ ।

**कपिनामा** । पु । शिलारसे । रत्ना ।

**कपिपिप्पली** । स्त्री । रक्तापामार्गे । भा पू. १भ. । वानरपिप्पल्यां । वै निघ। मूर्व्वावर्त्तक्षुपे । र मा. । [म र. ।

**कपिप्रभा** । स्त्री । शूकशिम्ब्यां । আলকুশী।

**कपिप्रियः** । पु। आम्रातकवृक्षे । रा.नि.व.११। कपित्थवृक्षे । भा. ।

**कपिभूतः** । पु । पारिभाद्रवृक्षे । वै निघ ।

**कपिरसः** । पु । शिलारसे । [व.११ ।

**कपिरसाढ्यः** । पुं । आम्रातकवृक्षे । रा नि

**कपिरोमफला** । स्त्री । कपिकच्छ्वां । रा नि व ३ । [रा.नि.व ६ ।

**कपिरोमा** । स्त्री । कपिकच्छ्वां । रेणुकायां ।

**कपिलः** । पु । शिलारसे । रत्ना. । कुकुरे । ... । चित्रले । मूषिकभेदे । तद्दष्टे व्रणक्लेदः ज्वर ग्रन्थ्युद्भव । सु कल्प.६अ । त्रि । पिङ्गलवर्णे।

**कपिलच्छाया** । स्त्री । मृगनाभौ । भा म. । See कस्तुरिका ।

**कपिलद्राक्षा** । स्त्री । कपिलवर्णद्राक्षाविशेषे । आङ्गुर इति यस्याः प्रसिद्धि । আঙুর। गुणा —मधुरा शीतला हृद्या मददर्पदा दाहमूर्च्छाज्वरश्वासतृषाहृल्लासघ्नी च। रा नि व.११। मद्यतरसे । [म.व. ।

**कपिलद्रुमः** । पु । काष्ठीनामसुगन्धकाष्ठे ।

**कपिलफला** । स्त्री । कपिलद्राक्षायाम् । आङ्गुर । रा.नि व ११ ।

**कपिललोहम्** । क्ली । पित्तलो । दे च.वै.निघ ।

**कपिलशिंशपा** । स्त्री । Tawny-leaved śisu. (Dalbergia śiśu.) कपिलपत्रशिंशपावृक्षे । कपिलपत्र शिशु गाछ । मं क पिवला-शिसव । हींवदवीउ । गुणा.—तिक्ता शीतवीर्या श्रमघ्नी वातपित्तज्वरघ्नी छर्दिहिक्कानिवारणी च । रा.नि.व ९ । कटुका तिक्ता कषाया शीघ्रघ्नी उष्णवीर्या मेदःकुष्ठश्वित्रवमिक्रमिहरी वस्तिकजातव दाहरक्तवलासघ्नी गर्भपातिनी च । भा.पू.१म. वटा.व ।

**कपिला** । स्त्री । पित्तले । भा म.१भ. । राजरीती । पितलविशेष । गदहकन्यायाम् । रा.नि.व.५ । रेणुकायाम् । रेणुकबीज । रा.नि.व ६ । कपिलशिंशपायां । काल शिशु । रा.नि.व.८ । निर्विषजलायुकायाम् । निर्विषजोंक । सु.सू १३ च. । See जलायुका । स्वर्णवर्णकामधेनुभेदे । मैलचिके । लक्ष्मसाध्यलूतामेदे । See लूता ।

**कपिलाधिका** । स्त्री । तैलपिपीलिकायाम् ।

**कपिलाञ्जक:** । पुं । कपिलवर्णतुलसीवृक्षे । पा डुपत्र तुलसीवृक्ष । वै.निघ. ।

**कपिलाची** । स्त्री । कपिलशिंशपायाम् । रा.नि.व ८ । मगेवारुके । रा.नि.व.७ ।

**कपिलिका** । स्त्री । शतपदीभेदे । पिपीलिकाविशेषे । सु.कल्प.८च. । See शतपदी, पिपीलिका । [नाकुली । रा.नि.व ३ ।

**कपिलोमफला** । स्त्री । कपिकच्छाम् । आ-

**कपिलोमा (ला)** । स्त्री । रेणुकबीजे । रेणुक । रा.नि.व.६ । [रीती । ढाल पितल ।

**कपिलोहम्** । क्ली । पित्तले । दे.च. । राज

**कपिल्लक:** । पुं । कम्पिल्लके । कमलागुंडि । वै.निघ. ।

**कपिल्लिका** । स्त्री । औषधिविशेषे । गजपिप्पल वा कमलागुंड़ि । र.मा. । [गाछ ।

**कपिवदान्य:** । पुं । आम्रातकवृक्षे । आमड़ा-

**कपिवल्लिका (ल्ली)** । स्त्री । गजपिप्पल्याम् । भा पू.१भ. । कपित्थवृक्षे । [पुल ।

**कपिवास:** । पुं । पारिभद्रवृक्षे । पलाशपि-

**कपिविरोचनम् (विरोधि)** । क्ली । मरिचे । रा.नि व.६ ।

**कपिवीजम्** । क्ली । शूकशिम्बीवीजे । आलकुशीबीज । मैथ.कामेश्वरमोदके ।

**कपिवृक्ष:** । पुं । पारीशाखवृक्षे । वै.निघ. ।

**कपिश:** । पुं । सिह्लकनामगन्धद्रव्ये । शिलारस । ब्राह्मामये । वै निघ । चि । श्यावबर्णे । मै.मचिके । [माधवीलतायाम् । मै.मचिकं ।

**कपिशा(शी,शिका)** । स्त्री । सुरायां । त्रिका. ।

**कपिशायनम्** । क्ली । मद्यविशेषे । त्रिका. ।

**कपिशीर्षकम्** । क्ली । हिङ्गुले । श च. ।

**कपिहस्तक:** । पुं । कपिकच्छ्वाँ । रस र. ।

**कपीकच्छु:** । पुं कपिकच्छुलतायां । आलकुशी । श.र. ।

**कपीज्य:** । पुं । क्षीरिकावृक्षे । जटा. ।

**कपीत:** । पुं । श्वेतवृक्षावृक्षे । र.मा. ।

**कपीतक:** । पुं । प्लक्षवृक्षे । रा.नि.व.११ ।

**कपीतन:** । पुं । उदुम्बरवृक्षे । यज्ञडुमुर । हिं गुलार । श.द । आम्रातके । आमड़ा । वा.सू. १५अ.न्यग्रोधादौ । च.सू ४अ । शिरीषवृक्षे । रा. नि.व ८ । अश्वत्थवृक्षे । मै.मचतुर्थ्या । गुवाकवृक्षे । विल्ववृक्षे । श.र. । गर्दभुण्डे । गन्धभाण्डि । रत्ना. । प्लक्षवृक्षे । रा.नि.व २३ ।

**कपीन्द्र:** । पुं । हनुमति । श.र ।

**कपीष्ट:** । पुं । राजादनीवृक्षे । वै.निघ । कपित्थवृक्षे । रा.नि.व ११ ।

**कपोत:** । पुं । पारावतपक्षिणि । गदहकपोते । पायरा, कहेतर । मं परेवा । हिं कबुतर । तन्मांसगुणा:—बलवीर्यवर्द्धनं स्वादुकफपित्तघ्नदीपनिश्च । रा.नि.व १७। कपोतमांस पाण्डौ वर्ज्यं । च.द.पाण्डु-चिकित्सिते । पारावती गुरुः स्निग्धः रक्तपित्तानिलापहः । संग्राही शीतलस्तज्जः कथितो वीर्यवर्द्धनः ॥ भा.पू १भ. । रसे पाके च स्वादु कषायं विषदश्च । राज । कपोतो कंडधी वल्यी वातपित्तविनाशनः । तर्पणः शुक्रजनो हितो नृणां गुणप्रदः । चकि.२१च. । See पारावतः ।

पचिविशेषे। घूघू। मे वि य तविक। मूषिक भेदे। सु कल ६ष। कपोतसमूहे। पारदे। सर्जिचारे। पचिमात्रे। पारीशवृचे। पलाश पिप्पल। भा।

**कपोत(क)म्** । क्ली । Antimony सौवी राञ्जने। रा नि व १३। कपोताञ्जने। मे तविक।

**कपोतकनिषादी** । पु। अश्वस्य वातव्याधि भेदे। लचण यथा—"कष्टादुत्थापितश्चापि पुनर्यो याति मेदिनीं। कपोतकनिषादीति स ज्ञेय क च्छजीवम ॥" ज द ५३ष ।

**कपोतचक्रः** । पु। कवाटचक्रवृचे। रवा।

**कपोतचरणा** । स्त्री। नलीनामगन्धद्रव्ये। नलुका। जटा। [गाछ। रा नि व १२।

**कपोतपर्णी** । स्त्री। एलायाम्। एलाईच

**कपोतपुटम्** । क्ली। औषधपुटविशेषे। लच ण यथा—"यत्पुट दीयते खाते अष्टसङ्ख्यैर्वनोप ले। कपोतपुटमेतत्तु कथितम् ॥ भा म १भ।

**कपोतपुरीषः** । पु। पारावतविष्ठायां। एष अण्डदारण।

**कपोतवक्ता (क्त्रा)** । स्त्री। काकमाच्याम्। "कैउआठुंठी। कड्ड। च द अरी चि कषायतैले।

**कपोतवङ्का** । स्त्री। ब्राह्म्यां। भा म ४भ घृत मा यह चि। "कपोतवङ्काश्वीषाक।" लताफट कौति प्रसिद्धायां लतायां। सु सू ३८ष। "कपो तवङ्कासुवर्चला। अन्ये 'शिरीषसदृशपचखल्पविट पवृचे' इति द्रव्याभिधानरमाहू। ङ.। सु चि ७ष।

**कपोतवर्णा (र्णी)** । स्त्री। सूक्ष्मैलायां। रा नि व ६। [व १२।

**कपोतवाणा** । स्त्री। नलुकायाम्। रा नि

**कपोतविष्ठा** । स्त्री। पारावतपुरीषे। इय अण्डदारणी। सु सू ३६ष। [नि व ५।

**कपोतवेगा** । स्त्री। ब्राह्मीनामकक्षुपे। रा

**कपोतसारम्** । क्ली। स्रोतोऽञ्जने। रा नि व १३। [विशेषे। अम।

**कपोताङ्घ्रि** । स्त्री। नलिकायाम्, गन्धद्रव्य

**कपोताञ्जनम्** । क्ली। नीलाञ्जने। [वै निघ।

**कपोताण्डोपमफलम्** । क्ली। निम्बूभेदे।

**कपोतारि** । पु। श्येनपचिणि। श र.।

**कपोतिका** । स्त्री। चाणक्यमूलके। कोमल मूलके। वै निघ।

**कपोल** । पु,क्ली। मस्तके। गण्डस्थली। गाल। रा नि व १८। स्त्री (खी)। जान्वग्रभागे।

**कपोलफलकम्** । क्ली। प्रशस्तगण्डस्थली।

**कप्याख्य** । पु। सिह्लके। शिलारस।

**कप्यासः** । पु। वानरगुदे।

**कफ** । पु। Phlegm शरीरस्थसौम्यधातुवि शेषे। श्लेष्मा। गुणा—"श्लेष्मा गुरु श्लक्ष्णमृदु प्रमत्सुक स्निग्ध पटु शीतजडश्च शैत्यवान्। शीते वसन्ते च भृश निशामुखे पूर्व्वेऽह्नि भुक्तोपरि च प्रकुप्यति ॥ रा नि व २१। तत्प्रकोपकारणम् यथा—"गुरुमधुररसातिस्निग्धदुग्धेक्षुभक्ष्यद्रवदधि दिननिद्रापूपसर्पिः प्रपूरै। तुहिनपतनकाले श्लेष्म च सम्प्रकोप प्रभवति दिवसादौ भुक्तमात्रे वसन्ते। इति। तल्लक्ष्म यथा—स्तैमित्य मधुरास्यता स्निग्धरता शोफ: शक्तिरो मलप्राचुर्य्य स्थिरता लवण कण्डूयतिस्वल्पता। आलस्य चिरकारिता कठिनता शीतारुचिस्निग्धता। तन्द्राद्युपदेश कासगुरुता एता कफोत्था रुज ॥ इति। तच्छा न्तिहेतुर्यथा—"गुरुशीतमृदुस्निग्धमधुरस्थिरपिच्छि ला। श्लेष्मण प्रशम यान्ति विपरीतगुणैर्गुणा ॥ इति। माधुर्य्यात्पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च। आमाशये सम्भवति श्लेष्मा मधुरशीतल। श्लेष्मा श्वेतो गुरु स्निग्ध पिच्छिल शीत एव च। मधु रस्त्वविदग्ध स्याद्विदग्धो लवण स्मृत ॥ सु सू २१ च। श्लेष्मा श्वेतो गुरु स्निग्ध पिच्छिल शीतल स्तथा। तमोगुणाधिक स्वादुर्विदग्धो लवणो भ वेत् ॥ इति स्वरूपम्। तस्य स्थानभेदेन तस्य ना मानि यथा—क्लेदन आलम्बन रसन स्नेहनश्चे ति स्थानभेदेन। तानि च स्थानानि यथाक्रम आमा शयहृदयकण्ठशिर सन्धय। तत्स्थानगतानाञ्च तेषां कर्म्माणि यथा—क्लेदन क्लेदयत्यन्नमन्यानि च श्ले ष्मस्थानानि उदककर्म्मणानुगृह्णाति। रसद्रुताक वीर्य्येण हृदयस्यावलम्बनम्। त्रिकसन्धारणन्द विदधात्यवलम्बन। उभावपि तत्र सौम्यौ दिवद यान्तिके यत। यतो रसान्विजानीते रसनः रसने समौ॥ स्नेहन स्नेहदानेन समस्तेन्द्रियतर्पण॥

श्लेष्मण सर्व्वसन्धीनां संश्लेषं विदधात्यसौ ॥ भा प्र. १ भ. । अवलम्बक इत्येक. क्लेदक श्लेष्मकोऽपर' । बोधकस्तर्पकश्चेति श्लेष्मा पञ्चविधः स्मृत' इति ॥ तेषां लक्षणानि—कफधाम्नां तु शेषाणां यत्करोत्यवलम्बन । ततोऽवलम्बनव्यक्ति श्लेष्मा प्राशोरु र.स्थितः । आमाशयाश्रितः सोऽन्नक्लेदनात्क्लेदकः स्मृत । श्लेष्मक' श्लेष्मणास्मि; स च सन्धौ व्यवस्थित । रसनायस्थितस्तेषु बोधको रसबोधनात् । शिरसि प्रस्थितश्चासौ तर्पकः । वा टी. । श्लेष्मधाम्नाञ्च शेषाणां यत्करोत्यवलम्बनं । अतोऽवलम्बकः श्लेष्मा यस्त्वामाम्यर्संश्रित. । क्लेदकः सोऽन्नसङ्घातक्लेदना द्रसबोधनात् । बोधको रसनास्थायी शिर सस्थोऽक्षितर्पणात् । तर्पकः सन्धिसंश्लेषात् श्लेषक सन्धिषु स्थितः ॥ वा. । कपित्थवृक्षे । रा.नि व.११ । स सुद्रफेने । च द.अर्श.चि.प्रलेपे ।

**कफकूर्चिका** । स्त्री । लालायाम् । मुखेर लाल, थुतु । हे.च ।

**कफकेतुरसः** । पुं । कफरोगाधिकारे रस. । मागधी पिप्पली । र सा सं. । पाठः—"टङ्कण मागधी शङ्ख वत्सनाभं समं समं । आर्द्रकस्वरसेनाथ दापयेद्भावनात्रयम् । गुञ्जामात्रं प्रदातव्यम् ·· ॥" द्वितीये यथा—"दग्धशङ्खं त्रिकटुक टङ्कणं समभागिक । विषञ्च पञ्चभिस्तुल्यमार्द्रतोयेन मर्द्दयेत् । वारत्रय रक्तिकाञ्च वटीं कुर्य्याद्विचक्षण. ।" साय प्रातरार्द्रकरसेन देयं । भैष.कफज्व.चि. ।

**कफगण्डः** । पुं । गलरोगे । तस्य लक्षणम्—"स्थिरः सवर्णो गुरुरुग्रकण्डू शीतो महांश्चापि कफात्मकस्तु । पारुष्ययुक्तश्चिरवृद्धिपाको मद्धच्छया पाकमियात् कदाचित् । वैरस्यमास्यस्य च तस्य जन्तोर्भवेत्तथा तालुगलप्रशोष ॥" भा.नि ।

**कफगुल्मः** । पु । श्लेष्मजगुल्मे । तस्य रूप—"स्तैमित्यशीतज्वरगात्रसादहृल्लासकासारुचिगौरवाणि । शैत्यं रुगल्पा कठिनोन्नतत्वं गुल्मस्य रूपाणि कफात्मकस्य ।" शीत गुरुस्निग्धमचेष्टनञ्च सम्पूरणं प्रस्वपनं दिवा च । गुल्मस्य हेतुः कफसम्भवस्य सर्व्वस्तु दृष्टो निचयात्मकस्य ।" च.चि ५ भ. ।

**कफघ्नः** । त्रि । श्लेष्मनाशके । [नि.व.४ ।

**कफघ्नी** । स्त्री । शुकनासायाम् । क्षुपभेदे । रा.

**कफज्वरः** । पुं । श्लेष्मजन्यज्वरे । See ज्वर' ।

**कफ(फो)णिः (णी)** । पुं, स्त्री । भुजमध्यग्रन्थौ । कणुइ । रा.नि म १८ ।

**कफनाड़ी** । स्त्री । दन्तमूलगतरोगविशेषे । দাঁতের গোড়ার কফজন্য নালী । यथा—"दन्तमूलगता नाड्यः पञ्च ज्ञेया यथेरिताः । ज्ञेया कफाद्धृष्टमार्ज्जनपिच्छिलास्रा स्तब्धा सकण्डूरुजा रजनीप्रवृत्ता ।" मा नि. । [स्त्रादौ । कफोधातौ ।

**कफप्रकृतिः** । स्त्री । स्थिरचित्ततास्निग्धकेश-

**कफमन्दिरम्** । मण्डभेदे । মাড, ফেন ।

**कफरुहा** । स्त्री । नागरमुस्तायाम् ।

**कफरोगः** । पुं । कफजन्यरोगमात्रे ।

**कफरोहिणी** । स्त्री । कफजन्यगलरोगविशेषे । तस्य लक्षण यथा—"स्रोतोनिरोधिन्यपि मन्दपाका स्थिराङ्कुरा या कफसम्भवा सा । मा नि । See गलरोहिणी ।

**कफवर्द्धकः** । त्रि । श्लेष्मवर्द्धके ।

**कफवर्द्धनः** । पुं । पिण्डीतगरवृक्षे । त्रिका । त्रि । कफवर्द्धके । [त्रि । श्लेष्मरोधके ।

**कफविरोधि** । क्ली । मरिचे । रा.नि.व.६ ।

**कफसंशमनवर्गः** । पुं । कफशान्तिकरद्रव्यगणेषु यथा—"रूक्षक्षारकषायतिक्तकटुकव्यायामनिष्ठीवन धूमाद्युष्णशिरोविरेकवमनस्वेदोपवासादिकम् । स्त्रीसेवाध्वनियुद्धजागरजलक्रीडाङ्गनासेवन पानाहारविहारभेषजमिद श्लेष्मापहत्वं नयेत् ॥" भा.पू.२भ. ।

**कफसम्भवः** । त्रि । कफोत्थे ।

**कफस्थानम्** । क्ली । कफाश्रयेषु, आमाशयोरःकण्ठशिरःसन्धिषु । सु सू. २१ अ. ।

**कफस्रावः** । पुं । नेत्रसन्धिगतरोगविशेषे । लक्षणं यथा—"पाकः सन्धौ संस्रवेद्यस्तु पूर्यं पूयास्रावोऽसौ गदः सर्व्वजस्तु । श्वेतं सान्द्रं पिच्छिलं संस्रवेद्धि श्लेष्मास्रावोऽसौ विकारो मतस्तु ॥" मा नि. ।

**कफातिसारः** । पुं । कफजन्यातिसारे । सा. चिकित्सा—"श्लेष्मातिसारे प्रथमं हितं लङ्घनपाचन । योज्यश्चामातिसारघ्नो यथोक्तो दीपनो गण ॥" तस्य लक्षणं यथा—शुक्लं सान्द्रं सकफं श्लेष्मयुक्तं

विर्स शीत हष्टरीमा मनुष्य. । मा.नि. ।

**कफान्तकः** । पुं। वर्वूरकवृक्षे । बाबला गाछ। रा.नि.व ८ ।

**कफापहा** । स्त्री । जीरके ।

**कफारिः** । पु । आर्द्रके । शुण्ठ्या । रा.नि व ६।

**कफी (इन्)** । त्रि। कफयुक्ते । अम । पु । गजे । हाती।

**कफेलुः** । त्रि । कफयुक्ते । उणा. ।

**कफोल्वटः** । त्रि । कफप्रधाने । च.द सान्निपातिकाज्व त्रि । "कफया च कफोल्वटे ।"

**कफोत्क्लिष्टः** । पुं। नेत्ररोगभेदे । लक्षणम् —'कफेन पक्ष्मोद्भूतानि स्निग्धानि च सितानि च । स लिलमावितानीव परिजाद्यानि मानव ॥ मा.नि.।

**कफोत्क्लेशः** । पु। कफस्य वमनार्थोपस्थितौ ।

**कफोदरम्** । क्ली । कफजन्योदररोगे । लक्षण —"यच्छीतलं शुक्लशिरावनद्ध गुरु स्थिर शक्लन स्वाननस्य । स्निग्ध महच्छोफयुत ससाद कफोदर तत्र शिराभिवृद्धि॥" सु नि.७अ । [दरे । मे.।

**कयन्धम्** । क्ली । जले । रा.नि.व १४। पु । उ

**कबित्थः** । पु। कपित्थवृक्षे । अ टी. ।

**कम्** । अव्ययं । मस्तके । श चि. ।

**कमठः** । पुं, क्ली । कच्छपे । भाण्डविशेषे । मेठविकं। शल्लक्यां। शजाङ्ग । धरणि,। वंशे । श र।

**कमठी** । स्त्री । कच्छप्याम् । अम. ।

**कमण्डलु. (लुः)** । पु प्लक्षवृक्षे। पाकुड गाछ । पसु । करके । सन्न्यासीर पात्र । मेषशृङ्ग्यां । अश्वत्थभेदे । गजकुण्डसहीरा । पलाश पिप्पल । भा पु १म वटा.व ।

**कमनः** । पुं । अशोकवृक्षे। मे नविक । मदने। त्रि । कामुके । [क्षीरपर्चिवि।

**कमनच्छदः** । पुं । कङ्कपक्षिणि । हे,च.१

**कमन्धम्** । क्ली । जले । अ.टी रा. ।

**कमलम्** । क्ली। Nelumbium speciosum or Nymphæa nelumbo पद्मसामान्ये। पद्म । ते तामर । तत्र श्वेतरक्तनीलभेदेन त्रिविधम् । कमलगुणा —शीतल वर्णकर मधुर पित्त कफघ्न तृष्णादाहरक्तविस्फोटकविषविसर्पहरं । श्वेतं शीतलं मधुरं कफपित्तघ्नम् । रक्तनीलि तु तथाल्पगुणे भवत । भा पु १म । पु । मृगविशेषे । मे लविक । सारसविहङ्गमे । अम. । ताम्रे । क्लोमि। भेषजे । मे लविक । पद्मकाष्ठे । कुङ्कुमे । मूत्र शये । जले । रा नि व.१४ ।

**कमलकन्दः** । पु । शालूके । पद्मेर गेंड़े। गुणा — "शालूक कटुकशीत तुवरी मधुरी गुरु । मलस्तम्भकरो रुची नेत्री ह्यथ शीतल । दुर्जरी ग्राहको रक्तपित्त दाहं तृषां कर्फ । पित्त वातघ्न गुल्मघ्न पित्त कास क्रमीस्तथा। मुखरोग रक्तदोषान्नाशयेदिति चर्चितः ।" वै निघ ।

**कमलकर्णिका** । क्ली । पद्मबीजकोशे । पद्मेर चाकि । गुणा —"बीजकोशस्तु मधुरं तुवर शीतलो लघुः ।तिक्तो मुखशुद्धिकारी रक्तदोषप्रणाशन ॥" वै निघ. ।

**कमलकेसरः** । पु, क्ली । पद्मकिञ्जल्के । पद्म-केसर । गुणा.—"शीतल ग्राही मधुर कटु रुच गर्भस्थैर्यकर कफघ्न।" वै.निघ. ।

**कमलच्छदः** । पु । कङ्कपक्षिणि । पद्मदले ।

**कमलनालम्** । क्ली । पद्मनालायाम् । पद्मेर डाँटा । वै निघ. । See मृणालम् ।

**कमला** । स्त्री । वरस्त्रियां । मे लविक । निम्बु कविशेषे । कमला लेबु, सतरञ्जी लेबु। तत्र सार ।

**कमलाक्षः** । पु । कमलबीजे; पद्मबीज । गुणा —"स्वादुरुच्य पाचन कटुक स्मृत । शीतलस्तुवरस्तिक्तो गुरुर्विष्टम्भकारकः । गर्भस्थिति करी रुची ग्राही वातकरो मत । कफघ्नलेखनो ग्राहीबल्य पित्तविनाशन । रक्तदग्धविदाहाथा पत्यनाशकरो मत. ।" वै.निघ.छर्दि त्रि वमनाधत योगे ।

**कमलिनी** । स्त्री । पद्मिन्याम् । गुणाः—शीतला गुरु. मधुरा लवणा कषा पित्तासृक्कफघ्नी वातविष्टम्भकारिणी च । भा पु १म पुष्प. । तत्कन्दः—"शीतस्तुवरो मधुरो मत । तिक्त दाहे ऽतिकटुक लघुर्वे ग्राहको मत. । वातहृत्कफहृत् नानां नाशको मुनिभि. स्मृत. ॥" वै.निघ. ।

**कमलोत्तरम्** । क्ली । कुसुम्भपुष्पे । हे.च ।

**कमोद्‌पुष्पम्** । क्ली । जलपुष्पविशेषे ।

**कम्पः** । पुं । वेपथौ । रा नि.व २० ।

**कम्पनः** । पुं, क्ली । कम्पे । मे नविकं । शिशिरकाले । रा.नि.व.२१ । सन्नामकसन्निपातज्वरे । लक्षणम्—"जडता गद्गदा वाणी रात्रौ निद्रा भवत्यपि । प्रलब्धे नयने चैव सुखमाधर्षेणैव च । कम्पोन्मत्तस्य लिङ्गानि सन्निपातस्य लक्षयेत् । कम्पनसञ्जक. ।" भा म ख.१भा ।

**कम्पलक्ष्मा** । स्त्री । वायौ । श.र. ।

**कम्पवायुः** । पुं । वायुरोगविशेषे । "सर्वाङ्गकम्प शिरसो वायुर्वेपथुसञ्ज्ञकः ।" मा.नि. ।

**कम्पाकः** । पुं । वायौ । हे.च. । [युक्ते ।

**कम्पितम्** । क्ली । चलने । श र. । त्रि । कम्प

**कम्पिलः** । पुं । श्वेतत्रिवृतायाम् । वै.निघ २भ.

**कम्पिला** । स्त्री । कुमार्याम् । घृतकुमार्याम् ।

**कम्पिल्लः (कः)** । पुं । रेणुवद्गुण्डारोचन्याम् । कमलागुण्ड़ि । र.मा । रा नि.व.१३ । रञ्जनके । वा सू १५अ विरेचने । कुङ्कुमे । च द.ज्व चि सुखादिगणे । "नीलीकम्पिल्लकं त्रिवृत् । कम्पिल्लको रोचनिका रक्तनामस्तात." । ड. ।

**कम्पिल्लमालकः** । पुं । वकुलभेदे ।

**कम्प्रः** । त्रि । कम्पयुक्ते । अम. ।

**कम्बलः** । पु । लोधिकायाम् । वनशूनिया । प.मु. । मेषादिरोमजातवस्त्रादौ । कम्बल । अम । सास्नायाम् । रत्ना. । नागराजे । कृमौ । उत्तरासङ्गे । मे.लत्रिकं । मृगभेदे । जटा । क्ली । जले । मे.लत्रिकं ।

**कम्बलिवाह्यकम्** । क्ली । वृषवाह्यशकटे । गरुर गाड़ी । अम ।

**कम्बिः** । स्त्री । दर्व्याम् । श.च. । वंशांशे । बाँशेर पाब । मे वद्विक । वंशाङ्कुरे ।

**कम्बुः (कः)** । पुं, क्ली । शङ्खे । शाँक । रा नि व १३ । शम्बूके । वलये । गजे । मे.वद्विकं । शोणितवहनाडायाम् । ग्रीवायां । गलके । नलि, -हाड़ । हे.च. । मालभेदे ।

**कम्बुककुसुमा** । स्त्री । शङ्खपुष्याम् ।

**कम्बुका** । स्त्री । अश्वगन्धावृक्षे । र.मा. ।

**कम्बुकाष्ठा** । स्त्री । अश्वगन्धाक्षुपे । रा.नि.व.४ ।

**कम्बुग्रीवा** स्त्री । शङ्खाकृतिरेखात्रययुक्तग्रीवायाम् । रा.नि.व.१८ । [व.३ ।

**कम्बुपुष्पी** । स्त्री । शङ्खपुष्पीलतायां । रा नि.

**कम्बुमालिनी** । स्त्री । शङ्खपुष्पीलतायाम् । रा नि व.३ ।

**कम्बूः** । स्त्री । शङ्खे । वलये ।

**कम्बूपुतः** । पु । शङ्खे । शाँक । रा नि व.१३ ।

**कम्बोजः** । पुं । शङ्खविशेषे । हस्तिविशेषे । मे. जत्रिक ।

**कम्बूतायी(इन्)** । पुं । शङ्खचिल्ले ।

**कम्भारी** । स्त्री । गाम्भार्यां । गामर गाछ । रा.नि.व.९ ।

**कम्भु** क्ली । उशीरे । रा.नि व.१२ ।

**कम्रः** । त्रि । मैथुनेच्छायुक्ते । अम ।

**कयस्था** । स्त्री । हरीतक्यां । काकोल्यां । क्ष. टी.स्वा. । सूक्ष्मैलायां । च द.उन्मा चि.महापैशाच घृते ।

**कयाहः** । पुं । पक्वतालसदृशवर्णाश्वे । लक्षणं यथा—"पक्वतालनिभो वाजी कयाह. परिकीर्तित ।" ज द ३प. ।

**करः** । पु । बाहुल्यक्षुपे । तवरङ इति काश्मीरे रा.नि.व.४ । वर्षोपले । रश्मौ । पाणौ । शुण्डादण्डे । मे.रद्विक । हस्ते । रा.नि.व.१८ ।

**करकः** । पु । दाडिम्बवृक्षे । रा.नि व ११ । पलाशवृक्षे । दारा । वकुलवृक्षे । कोविदारवृक्षे । रक्तकाञ्चनवृक्षे । रा.नि.व १० । See काञ्चनार. । करवीरवृक्षे । रा.नि.व ८ । नारिकेलास्थिनि । माला । रा नि.व.११ । नाटा इति प्रसिद्धे करञ्जवृक्षे । हे.च । कुसुम्भवृक्षे । पक्षिविशेषे । मे. कत्रिकं । क्ली । करङ्के । गोमयच्छत्रे । त्रिका. ।

**करकचः** । पुं । नखे । वै निघ. ।

**करकाटः** । पु । भरद्वाजपक्षिणि । वै.निघ. ।

**करकण्टक:** । पु । नखे । त्रिका ।

**करकशालि.** । पु । रसालेचौ ।

**करका** । स्त्री । कारवल्लाम् । करेना । रा नि व ७ । वर्षोपले । अम ।

**करकाजलम्** । क्ली । दिव्यजलभेदे । "दिव्य वायुग्निसंयोगात्संहता खात्पतन्ति या । पाषाण खण्डवच्चापस्ता कारकोऽमृतोपमा ॥ करकाजं जलं रूक्ष विशदं गुरु च स्थिरं । दारुणं शीतलं सान्द्रं पित्तहृत्कफवातकृत् ॥" वैद्यके ।

**करकाम्बु** । क्ली । करकजले । वै निघ. ।

**करकाम्भा:** । पु । नारिकेलवृक्षे । त्रिका । क्ली । करकजले ।

**करकुड्मलम्** । क्ली । कराङ्गुलौ ।

**करकृष्णा** । स्त्री । जीरके । वै निघ. ।

**करग्रह:** । पु । विवाहे । त्रिका । करग्रहणे ।

**करघर्षणः** । पु । दधिमन्थनदण्डे । श च ।

**करघर्षी** । पु । चन्द्रमन्थानदण्डे । ছোট মউনি । हि छोटीरयी ।

**करघाट:** । पु । तन्नामकस्थावरविषभेदे यस्य त्वचि निर्यासे च विषं वर्त्तते । अथ मूलविषाण्युच्यते । सु कल्प २अ. ।

**करङ्क:** । पु । मस्तके । विश्व कणिक । अमरस्य नारिकेलफलास्थिनि । নারিকেলের খোল, মা মা । श च । कङ्काले । रा.नि व १८ ।

**करङ्कशालि:** । पु । करङ्कनामिचौ । म रस शालि । क रसालभस । गुणा —मधुर शीतल रुचिकृत् मृदु पित्तघ्न दाहहर हृद्य तेजो बलवर्द्धनश्च । रा.नि व १४ ।

**करङ्कीभूत:** । त्रि । अस्थिमात्रेण स्थित । भा म ४अ गर्भ चि. । "करङ्कीभूतगीमूर्द्धा ।"

**करच्छद:** । पु । शाखोटवृक्षे । সেওড়া গাছ । हिं सिहोड़ा । मा । [शाकतरौ ।

**करच्छदा** । स्त्री । सिन्दूरपुष्प्याम् । रा नि.व.१० ।

**करज:** । पु । करञ्जवृक्षे । ডহরকরঞ্জ গাছ । नखे । क्ली । व्याघ्रनखे । नखौ । मे अविर्क । [रक्ता ।

**करजाख्य:** । पु । नखीनामगन्धद्रव्ये । नखी ।

**करज्योडि:** । पु । हस्तज्योडिमहाकन्दमाके । হাডজোডী । रा नि.व ७ । काष्ठपाषाणभेदे ।

**करज्योड़िकन्द** । पु । तन्नामकन्दचकन्दे । एषां गुण रसवश्यकृद्रसायनकृच्च । रा.नि व ७ ।

**करञ्ज. (क:)** । पु । (Pangamia glabra Syn. Galedupa Indica) स्वनामख्यातवृक्षे । বৃহৎ করঞ্জ গাছ, ডহরকরঞ্জ গাছ । हि कर जुवा करौदा । कण्टकरैजी । तें कानुगचेट्टु । स च षड्विध —तत्रैक ডহরকরঞ্জ, द्वितीय নাটা করঞ্জ তৃতীয়, কাঁটা বা গেঁটেকরঞ্জ, চতুর্থ নাটাকরঞ্জ, পঞ্চম বিষকরঞ্জ, ষষ্ঠ অঙ্গার বল্লী इति बङ्गे कथ्यते । कण्टकरैजाकरञ्ज । घी राकरञ्ज भा । तत्र प्रथमस्य पर्याय —चिर बिल्वो नक्तमाल करजश्च करञ्जके । द्वितीयस्य यथा —प्रकीर्य्य पूतिकरञ्ज पूतिक कलिकारक । तृतीयस्य- षड्ग्रन्थ । चतुर्थस्य —मर्कटी । पञ्चमस्य —अङ्गारवल्लरी । षष्ठस्य— करमर्द्दी वनद्राक्षा करमर्द्दक इति । गुणा —कटुक तीक्ष्ण वीर्य्योष्ण अनिलघ्न कुष्ठोदावर्त्तगुल्मार्शोव्रणकृमि कफघ्न । करञ्जपत्रं कफवातार्शःकृमिशोथहर भेदनं पाककटुक वीर्य्योष्ण पित्तल लघु च । तत्फलं कफवातघ्न मेहार्शःकृमिकुष्ठघ्नं । इत्थं पूर्वकरञ्जोऽपि करञ्जसदृशो गुणे । भा.पु १भ गु. व । तद्गुण —उष्णवीर्य्य पित्तवातकफघ्न । तद्ङ्कुरा —अग्निदीपना रसे पाके च कटुका पाचना कफवातार्शः कुष्ठकृमिविषघ्ना शोथहराय । वै निघ । केचित्तु महाकरञ्जघृतकरञ्जपूतिकरञ्ज च्छकरञ्जकराञ्जकादिभेदामाह । तथा गुणाः स्वपर्याये गम्या । भद्रराजि । जटा । करञ्जकी । मियौ हृद्दधिमुखचूर्णे ।

**करञ्जतैलम्** । क्ली । तन्नामकफलोत्थतैले । করঞ্জতৈল । गुणा —तिक्त मातुघ्न । बाटी । नेत्ररोगघ्न वातरोगघ्न तीक्ष्णमुष्ण कुष्ठकण्डूति चर्मिकाहर लेपेन नानाविधचर्मरोगघ्नञ्च । रा.नि. व १५ । क्रिमिघ्न कृमिघ्न रुचिपित्तदोषकरञ्च । राज ।

**करञ्जद्वय(युग्म)म्** । क्ली । ডহরকরঞ্জ, নাটাকরঞ্জ इति द्वये । "एकादिमरिम, द्वितीय कण्टकोविटपकरञ्ज ;" इत्यविटपकरञ्जी । ८.४

३८च.ड.खामादिः। सि.यो.उमा.चि.। "करञ्जौ देवदारु च।" (एकः पूतिकरञ्जश्चिरविल्वाख्य, द्वितीय, नक्तमालाख्य।) वा.मू.१५ष.आरग्वधादिः। "भूनिम्बसैर्यकपटोलकरञ्जयुग्मम्।" [नि.व.११।

**करञ्जफलः(कः)** । पुं। कपित्थवृक्षे। रा.

**करञ्जस्नेहः** । पुं। करञ्जतैले। रा.नि.व.८। See करञ्जतैलम्।

**करञ्जाद्यघृतम्** । क्ली। उपदंशे। पाठः—'करञ्जनिम्बार्जुनशालजम्बूवटादिभिः कल्ककषायसिद्धं। सर्पिर्निहन्यादुपदंशदोषं सदाहपाकं सुतिरागयुक्तम्।" वटादीनां लक्षषायेण तेषामेव कल्केन तैलं पाच्यं। तैलं ४ श. क्वाथद्रव्यं ४ श जलं ६४ श. शे १६ श. कल्क १ श.। च द।

**करञ्जिका** । स्त्री। काँटाकरञ्ज इति लोके। गुणाः—कटुयुक्ता: करञ्जस्तु पाके कटुश्च तुवरः। ग्राहकशोषवीर्यः स्वात्विकः मेहश्च मेहहा। कुष्ठार्शोविषवातानां कृमीणां नाशनः परः। पुष्पन्तु वीर्ये चोष्णं स्वात्विकं वातकफापहम्॥ वै.निघ.। नक्तमालफले। सु.चि २ष.सद्योव्रणे।

**करञ्जी** । स्त्री। महाकरञ्जे। श च.। डहरकरञ्ज। हि करारि। गुणा.—लघ्वी तिक्ता तुवरी कटुपाका वीर्योष्णा पित्तार्शोविषक्रिमिकुष्ठप्रमेहघ्नी च। भा.पू.१भ.। करञ्जवर्गस्थम्।

**करटः (कः)** । पुं। कुसुम्भवृक्षे। रत्ना.। करिगण्डस्थले। हला.। वायसे। मे.। [द्वि.चि.।

**करटवी** । स्त्री। वृन्तमूषिकायाम्। रस.र.श्वास

**करटा** । स्त्री। दुःखदोह्यायां गवि। हे.च.।

**करटी(टिनी)** । पुं, स्त्री। हस्तिनि। हस्तिन्याम्। हे.च.। [हे.च.।

**करटुः** । पुं। कर्करेटुपक्षिणि। कर्कटिया पक्षी।

**करणः** । पुं। जम्बीरवृक्षे। हला.। क्ली। देहे। गात्रे। विषयेन्द्रिये। "क्रियाभिदेन्द्रियक्षेत्रकायसवेशनेषु च। कायस्थे साधने क्लीवम्।" मे.णत्रिकं।

**करणत्राणम्** । क्ली। मस्तके। हे.च.।

**करणाधिपः** । पुं। जीवे।

**करण्टकः** । पुं। पद्मकन्दे। [सु.।

**करण्टुः** । पुं। लोपिकामांके। वनशुनिशा। प.

**करण्डः** । पुं। मधुकोषे। মৌচাক। दलाढके। करण्डायां। ফুলের সাজি। मे.डत्रिकं। कारण्डवपक्षिणि। द्वारा.। [नि व.११।

**करण्डफलः (कः)** । पुं। कपित्थवृक्षे। रा.

**करण्डा** । स्त्री। यकृति। कालखण्डे।

**करण्डी (न्)** । पुं। मत्स्ये। त्रिका.।

**करतलः** । पुं। हस्ततले। হাতের তেলো। हि हथेली। "करे करतले मूर्ता" रा नि व १८।

**करतृणम्** । क्ली। श्वेतकेतके।

**करतोयम्** । क्ली। वर्षोपलजले। শীলেরজল।

**करद्रुमः** । पुं। कारस्करवृक्षे। कूँचिला। रा. नि.व.९।

**करपत्रम्** । क्ली। क्रकचास्त्रे। করাত, কাঁচি। सु.सू ८ष.। तच्च छेदनलेखनकर्मणि प्रयुज्यते। यथा—"भिदेद्वस्थ्नां करपत्रन्तु खरसारं दशाङ्गुलं। विस्तारे द्व्यङ्गुलं सूक्ष्मदन्तमसक्तबन्धनम्" ॥ चवि.।

**करपत्रवान्** । पुं। तालवृक्षे। श च।

**करपत्रिका** । स्त्री। जलक्रीडायाम्। जटा.। तिलपर्ण्याम्। [के। रा नि.व ८।

**करपर्णः** । पुं। भिण्डाद्ववृक्षे। रा.नि.व४। रतोर-

**करपल्लवः** । पुं। अङ्गुली। शब्दकल्प.।

**करपात्रम् (त्रिका)** । क्ली, स्त्री। जलक्रीडायाम्। द्वारा। [भ.टी सा.।

**करपा(वा)लिका** । स्त्री। एकधारास्त्रे।

**करबडावल्ली** । स्त्री। श्वेतपर्ण्याम्। हिं बल्लीपूरण। रा.नि.व.३।

**करबालः** । पुं। नखे। श.मा.। खड्गे।

**करभः** । पुं। गजशिशुपुच्छे। प.मु.। उष्ट्रे। रत्ना। उष्ट्रशावके। सूर्यावर्ते। गजशिशौ। भ.टी. सा.। करिग्रहे। नखीनामगन्धद्रव्ये। रा.नि.व.१२। Seeनखः। मणिबन्धात् कनिष्ठाङ्गुलिपर्यन्तहस्तबहिर्भागे। मे. भत्रिकं। [रा.नि.व १०।

**करभकाण्डिका** । स्त्री। उष्ट्रकाण्डिवृक्षे।

**करभञ्जि(ण्डि)का** । स्त्री। महाकरञ्जे। डहरकरञ्ज। हिं करारि। भा.पू.१भ.। लताकरञ्जे।

कनार गाछ। प.मु। छिद्रपत्रे। सोमलताभेदे। सु.चि २८च.। See सोम:।

**करवीरकः** । पुं। श्वेतकरवीरवृक्षे। तन्मूलविषे। वै.च.। अर्जुनवृक्षे। रा.नि.व.८।

**करवीरकन्दसंज्ञः** । पुं, क्ली। A species of onion or bulb. तैलकन्दे। पलाण्डुविशेष। रा.नि.व.७।

**करवीरका** । स्त्री। मन.शिलायां। वै.निघ.।

**करवीरणी** । स्त्री। करवीरणी कररखिरणी इति कोङ्कणदेशप्रसिद्धे पुष्पवृक्षविशेषे। या रक्तपुष्पा वीथे जायते। गुणाः—"तिक्ता चोष्णा च कटी च कफवातविषापहा। चाध्मानवात छर्दिंघ्न स्वरश्वासहृल्लोशयेत्। इत्येवं करवीरण्या गुणाः प्रोक्ताः"...। वै.निघ.। रा.नि.व.१०।

**करवीरभुजा** । स्त्री। आढकाम्। हिं रहर। रा.नि.व.१६।

**करवीराद्यतैलम्** । क्ली। भगन्दराधिकारे तैलम्। पाठः—"करवीरनिशादन्तीलाङ्गलीलवणाग्निभिः। मातुलुङ्गार्कवत्साह्वैः पचेत्तैलं भगन्दरे"। तिलतैलं ४श. करवीरादिकल्कः १श. वारि १६ श. एकत्र पाच्यम्। च.द, रस.र। अन्यत् नासारोगे—"रक्तकरवीरपुष्प जात्यालम्बुषनम ल्लिकायाय। एते. समन्तु तैलं नासार्शोनाशनं श्रेष्ठम्॥" च द.। अमनः पीतशाले (पिण्याशाल)। पाकः पूर्ववत्। [वै.निघ.।

**करवीरानुजा** । स्त्री। आढका। हिं रहर।

**करवीरिका** । स्त्री। मनःशिलायां। र.सा.स।

**करवीर्यः** । पुं। चिकित्सकविशेषे।

**करशाखा** । स्त्री। अङ्गुली। रा.नि.व.१८।

**करशीकरः** । पुं। वमने। करिशुण्डनिर्गतजलकणे। हला.।

**करशूकः** । पुं। नखे। त्रिका.।

**करशोथः** । पुं। (Oedematous swelling of hand) करशोथे। हातेर फुला फोला। [नवण। रवा.।

**करसम्भवम्** । क्ली। रोमकलवणे। साम्भरि

**करसारः** । पुं। दसदीर्मस्ये।

**करहाटः (कः)** । पुं। मदनवृक्षे। प.मु.; रा.नि.व ८। योगरत्न ए.ख.केशरपाके.सु कल्प५. अ.। महापिण्डीतरौ। रा.नि.व ८। सु.चि.१८अ.। पद्मकन्दे। मे। शर्करायां। आकरकरा। श्वेतमदने। वै.निघ.।

**कराग्रम्** । क्ली। करिपुष्करे। हला.।

**कराग्रपल्लवः** । पुं। अङ्गुली।

**कराघातः** । पुं। ब्रह्माङ्गुली।

**कराङ्गणम्** । क्ली। हट्टे। हारा.।

**करादीनः** । पुं। खञ्जने। दिरूपकोषः।

**करामर्दः** । पुं। करमर्दकवृक्षे। अ.र.।

**कराम्बुकः** । पुं। पानीयामलकवृक्षे। श.च.।

**कराम्लः (कः)** । पुं। करमर्दकवृक्षे। प.मु.।

**करायिका** । स्त्री। पक्षिभेदे। क्षुद्रवके। वै.निघ.।

**करालः (कः)** । पुं,क्ली। पर्यासे। कृष्णतुलसी। प मु। भा.पू.१भ.। त्रि। दन्तुरे, तुङ्गे, भीषणे। पुं। सर्जरसतैले। गर्जनतेल। मे.धनिके। नयाम-कदन्तरोगे दन्तोपरिदन्तोद्भेदनरूपे। दाँतेर उपर दाँत ओठा। तल्लक्षणम्—शनैः शनैः प्रकुपितो वायुर्दन्तसमाश्रितः। करालान् विकटान् दन्तान् करालो न च सिध्यति॥ मा नि.। कर्पूरीवने। सु मू.४६च.। गुणाः—लताङ्गलवत्। क्ली। कृष्णार्जके। कृष्णबर्बरके। तैलेन घृतेन वा क्षते वेसवारे। इति पाकराजः।

**करालकलिकः** । पुं। कुन्दपुष्पवृक्षे। प.मु।

**करालाङ्गम्** । क्ली। विडङ्गे। वै.निघ.।

**करालत्रिपुटा** । स्त्री। लङ्कानामग्रिन्बीधान्ये। तेउडा धान। रा नि.व.१६।

**कराला** । स्त्री। अनन्तमूले। अनन्तमूल। प. मु.। विडङ्गायाम्।

**करालास्यः** । त्रि। दन्तुरवदने।

**करालिकः** । पुं। वृक्षे। वै.च.।

**कराली** । स्त्री। अग्निजिह्वायाम्। पुं। (लिन्) महादोषान्वितास्वे। यस्य नीचत उर्ध्वं वा एको दन्तुरी दन्तो जायते स कराली। अ.द.२च.।

**करिकः** । पुं। विट्खदिरे।

**करिकणा** । स्त्री । गजपिप्पल्याम् । भैष. प्लीहा.कामेश्वरमोदके । [চই গাছ । रा.नि.व ६ ।

**करिकणावल्ली** । स्त्री । चविकालतायाम् ।

**करिकर्णपलाशः** । पुं । हस्तिकर्णपलाशे । भैष.ज्व चि.सर्वतोभद्ररसे ।

**करिकवलः** । पुं । विधाने । हारा ।

**करिका** । स्त्री । कारीतवे । कण्टिकारी । रा.नि.व.८ । नखक्षते ।

**करिकुम्भः** । पुं । गजकुम्भे ।

**करिकुम्भकः** । पुं । नागकेशरचूर्णे । हारा. ।

**करिकुसुम्भः** । पुं । नागकेशरचूर्णे । नागकेशर चूर्णे । हारा. ।

**करिकृष्णा** । स्त्री । गजपिप्पल्याम् ।

**करिकेसरम्** । क्ली । नागकेसरे । वै.निघ.श्वास चि.चन्द्रावलेहे ।

**करिचर्म** । क्ली । गजचर्मणि ।

**करिजः** । पुं । गजशावके । श मा. ।

**करिणी** । स्त्री । हस्तिन्याम् । चम. ।

**करिदन्तः** । पुं । गजदन्ते ।

**करिदन्ताभम्** । क्ली । मूलके ।

**करिदमनः** । पुं । नागदमने । नागदना । भैष.स्त्रीरोगचि ।

**करिदारकः** । पुं । सिंहे । श.र. ।

**करिनासिका** । स्त्री । यन्त्रविशेषे ।

**करिपत्र(क)म्** । क्ली । तालीशपत्रे । তালীশপত্র । रा.नि व.६ ।

**करिपिप्पली** । स्त्री । गजपिप्पल्याम् । গজপিপুল । प सु. । भा.पू १भ. ।

**करिपोतः** । पुं । करिशावके । हला. ।

**करिभः** । पुं । अश्वत्थवृक्षे । चैत्यवृक्षे । त्रिका ।

**करिमाचलः** । पुं । गजमाचले । सिंहे । त्रिका ।

**करियादः** । क्ली । जलहस्तिनि ।

**करिरः** । पु,क्ली । वंशाङ्कुरे । বাঁশের কোঁড় । अश्वगन्धे ।

**करिशावकः** । पुं । दशवर्षपर्यन्तहस्तिशिशौ । श मा. ।

**करिस्कन्धः** । पुं । गजाविस्कन्धे ।

**करी** (इन्) । पुं । हस्तिनि । रत्ना. ।

**करीरः** । पुं, क्ली । वंशाङ्कुरे । বাঁশের কোঁড় । गुणा.—कटुतिक्ताम्लं कषायं लघु शीतलं पित्त रक्तदाहकफघ्नं रुचिकृच्च । एतत्पक्वं निर्गुणं । रा. नि व.७ । (Capparisaphylla) मरुजे वृक्षभि- द्यते । करील, कचड़ा इति लोके । मं मिपत्री । कं निष्पतिते । सं एतुगदम्लकुमोदय । रा.नि व. ८ । गुणा—"करीरमाध्मानकरं कषायं कटूष्ण मितश्लेष्मकारि भूरि । श्वासानिलारोचकसर्वशूल हृदामिखर्जूव्रणदोषहारि ।" रा.नि व.८ । गुरु भेदि श्लेष्मलघ । मद.व ७ । श्लेष्माम्लं कषायत्वं दाहजनकत्वम । राज. । घटे । कि. । क्ली । करी- रफले ।

**करीरकुणः** । पुं । करीरफलकाले । [ব্যাতফলী ।

**करीरफलम्** । क्ली । करीरबीजे, टींट् इति

**करीरा** । स्त्री । हस्तिदन्तमूले । चीरिकायाम् । झिंझिं পোকা । उज्वा. । मन शिलायाम् । ई.च. ।

**करीरिका** । स्त्री । हस्तिदन्तमूले । त्रिका ।

**करीरी** । स्त्री । हस्तिदन्तमूले । चीरिकायाम् । भी रविक्षं ।

**करीषः** । पुं, क्ली । शुष्कगोमये । वनगवकरीषे वा । विनघाटी । सि.यो.मदा.चि । 'वन्यकरी- षाग्नावाम् जलपानाम् ।" [गुन । घाट ।

**करीषाग्निः** । पुं । गोमयाग्नौ । घुंटের আ-

**करुणः** । फलिन्कचे । करबन्दु वनी इदं । वि.। मल्लिकावृचे । ई च. । (Citrus Decumanus) स्वनामख्यातनिम्बुकवृक्षे । करुणातिदुग्ध लेबु । प.मु । गुणा:—कषायाम्लभेदीश्च पित्तकोपन । राज.१प. ।

**करुण(णा)मल्ली** । क्ली । The plant Jasminum Sambac. मल्लिकायाम् इ च. ।

**करुणा** । स्त्री । दयायाम् । करुणदे । वै.निघ ।

**करुणी** । स्त्री । रौप्यपुष्पाम् । पुष्पार्द्रार्त्ते । रा.नि.व १० । See करवीरके ।

**करुपकम्** । क्ली । फलविशेषे ।

**करेटः** । पुं । नखे । त्रिका. । [त्रिका. ।

**करेटव्या** । स्त्री । धनच्छूपक्षिणि । धानुसपक्षी ।

**करेटुः (कः)** । पुं । कर्करेटौ । कर्कटिया पाखी । रत्ना. । नखे । त्रिका. ।

**करेडुकः** । पुं । करेटुपक्षिणि । कर्कटे ।

**करेणुः(कः)** । पुं । गजे । स्त्री । हस्तिन्यां । गणिकारे । कर्णिकारवृक्षे । विश्व । महौषधिविशेषे । सक्षीरगजाकारकन्दलतविशेषे । यथा— करेणु मत्तक्षीरा कन्देन गजरूपिणी । हस्तिकर्णपलाशस्य तुल्यपर्णा द्विपर्णिनी ॥ सा च सोमरसतुल्यगुणा । सु.चि.३०ध । See ओषधिः ।

**करेणुकम्** । क्ली । कर्णिकारफले । तच्च विषमयमिति ज्ञेयम् ।

**करेणुभूः** । पुं । पालकाव्यमुनौ । त्रिका ।

**करेणुसुतः** । पुं । पालकमुनौ । त्रिका. ।

**करेनरः (वरः)** । पुं । मूषिके । शिह्लके शिलारसे । वै.निघ । रा.नि.व,१२ ।

**करोटः (टिः,का,टी)** । पुं, स्त्री । शिरोऽस्थिनि । रा.नि.व,१८ ।

**कर्त्रादिजनः** । पुं । क्षणसर्पे । वै.निघ. ।

**कर्कः** । पुं । शुक्लवर्णाश्वे । जे.द. । कुलीरके । दर्पणे । घटे । मेषादितः कर्कटराशौ । काँकरोल । रा.नि.व.११ । कङ्कपक्षिणि । तालभेदे । इक्षुविशेषे । काके । शिरोऽवच्छालने । हे.च. । कटुरे । वदरीवृक्षे । विल्ववृक्षे । गन्धके । वै.निघ,२भ.य एर्वारुकबाटरसे । अग्नौ ।

**कर्कचिर्भिटिका (टी)** । स्त्री । Small cocumber. चिर्भिटायाम् । कर्कटीभेदे । रा. नि.व.७ । [टकम् ।

**कर्कटम्** । क्ली । विषभेदे । प.स. । See कर्क

**कर्कटः** । पुं । The Numidian crane. कर्करेटौ । कर्कटि पाखी । गुणाः—वातघ्न. शुक्रप्रदः वमनघ्न । चवि २२ध. । स्वनामख्यातवृक्षे । काँकरोल । तत्फलगुणाः—कर्कं कषायं अतिदीपनं कफपित्तकरं ग्राहि वस्त्यं लघु शीतलञ्च । रा.नि.व.११ । शाल्मलीफले । बालुकायाम् । मे,ट-त्रिकं । कुलीरके । सामुद्रकर्कटे । च.द.वा.व्या. एलादितैले । सन्निपातविशेषे । See कर्कटक. । पद्मकन्दे । लटा. । विल्ववृक्षे । रस.र.बालचि. । गोक्षुरे । कर्कटशृङ्गे । काँकड़ाशृङ्गी । च.द.वा. व्या.एकादशशतिकमहाप्रसारणीतैले ।

**कर्कटकम्** । क्ली । काण्डभग्नलासास्थिभङ्गविशेषे । तत्र "संमूढमुभयतोऽस्थि मध्यमयं ग्रन्थिरिवोन्नतम् ।" सु.नि.१५ध । See भग्नम् । त्रयोदशविधस्थावरकन्दविषान्यतमविषे । सु.कल्प.२ध । See कन्दविषम् ।

**कर्कटकः** । पुं । हस्ती । रा.नि.व १४। कर्कटे । काँकड़ा । रत्ना. । गुणाः —कर्कटः स्वष्टविण्मूत्रः सन्धानानिलपित्तजित् । राज । तामेची । वै.निघ. २भ.वा.व्या एलादितैले । पक्षिविशेषे । कर्कटे । काष्ठामलके । मध्यहीनप्रवृद्धवातादिजन्यसन्निपातज्वरे । तेन व्यथाविपर्य्यादिहृदाहादिगौरवाग्निमान्द्यादिरोगा जायन्ते तथान्तर्दाहवाक्यनिरोधादयश्च भवन्ति । भा.म.१भ । कर्कटशृङ्गे । काँकड़ाशृङ्गी । भैष च.पि.चि वृहत्क्षुधावतीगुडिकायां।

**कर्कटकास्थि** । क्ली । कुलीरकास्थिनि । काँकड़ार खोला । [कर्कटस्त्रियाम् ।

**कर्कटकी** । स्त्री । कर्कटशृङ्ग्याम् । वा.चि,३ध.।

**कर्कटचरणः** । पुं । कुलीरकपादे । काँकड़ार पा । रस.र.बाल.चि ।

**कर्कटच्छदा** । स्त्री । पीतघोषायाम् । पीतघोषा । वै.निघ.। [न्याम् । अपामार्गे । वै.निघ.।

**कर्कटवल्ली** । स्त्री । गजपिप्पल्याम् । शुकशि-

**कर्कटशृङ्गिका** । स्त्री । कर्कटशृङ्ग्याम् । भद. व.१ ।

**कर्कटशृङ्गी** । स्त्री । (Rhus succedanea, Syn. Acuminata) स्वनामख्यातकर्कटदंष्ट्राकारौषधौ । काँकड़ाशृङ्गी । हि काकड़ाशृङ्गी, ककरसिं । मं काकडाशिंगी । कं लें कर्काटशृंगी। गुणाः—गुरुरुष्णा तिक्ता वातघ्नी हिक्कातीसारकासघ्नी श्वासरक्तपित्तघ्नी च । रा नि.व ६ । कषाया वमिघ्नी ज्वरघ्नी तृष्णा चयकासघ्नी ऊर्द्ध्ववातघ्नी च । मद व १ । तृष्णारुचिघ्नी । भा,पू,१भ. । महाघोषायाम् । बड़ घोषा ।

थाली। अम। तथा। तण्डुलधावनपात्रे। गलन्ति
काया। भाण्डविशेषे। घटी। दर्पणे। मे.रत्रिक।

**कर्करेटुः।** पु। करेटुपक्षिणि। कर्कटे पा-
थी। रवा। [न्याम्। शुकशिम्ब्याम्। वै.निघ.।

**कर्कवल्ली।** स्त्री। अपामार्गवृक्षे। गजपिप्प-

**कर्कशः।** पुं। इक्षुभेदे। मे.शब्दरत्ने। काम्पिल्ले।
कमलागुंडि। अम.। कासमर्द्दे। पटोले। प मु.
रत्ना.। गुडत्वचि। वै.निघ.। त्रि। अमसृणे।
निर्द्दये। मे.शब्दरत्ने।

**कर्कशच्छदः।** पुं। पटोले। रा.नि.व.३।
पाटलवृक्षे। पारुल गाछ शाखोटवृक्षे। त्रिका.
वनी। शाकवृक्षे। कृष्णकुष्माण्डे। वै निघ.।

**कर्कशच्छदा।** स्त्री। घोषायां। झिङा गाछ।
हि तोरइ। दग्धावृक्षे। रा नि.व.६।

**कर्कशदलः।** पुं। पटोलफलवृक्षे। रत्ना.।

**कर्कशदला।** स्त्री। दग्धिकायाम्। कोडयि
कुरुडीति ख्याता। रा.नि व ६।

**कर्कशा।** स्त्री। वृश्चिकालीवृक्षे। विछाति
गाछ। रा.नि.व.६। क्षुद्रसिपयङ्गाम्। वनवदरे।
वै निघ। [रत्ना।

**कर्कशिका।** स्त्री। वनकोल्यां। बुनो कुल।

**कर्कसारम्।** क्ली। दधिशक्तौ। हारा.।

**कर्काकः।** पुं। कर्कटिकायाम्। दाँकुड़। प
थ्यापथ्ये।

**कर्कारुः।** पुं। (Benincasa cerifera)
कुष्माण्डभेदे। त्रिगाछि कुमड़ा। हिन्. कम्हाड़ु।
कुष्माण्डीबीजं कुष्माण्डभेदे। कालिङ्गलतायाम्। उ-
रुबूक वा धर्मुज। रत्ना। चालिगरकुष्माण्ड। हि
कोहड़ो, कोहणो। तैं गुम्मडिकायि। कुष्माण्डो
तु भृशं लघ्वी कर्कारुः परिकीर्त्तिता। गुणाः—
कर्कारु. दाहिका शीतला रक्तपित्तघ्नी गुरुः पक्वा
तिक्ताग्निजननी सक्षारा कफवातनुत्। भा पु १भ.
शाकव.। तैलगुणा. विभीतकतैलवत्। स्त्री। कु
ष्माण्डीलतायाम्। रत्ना.।

**कर्कारुकः।** पुं। (Convolvulus Paniculatus.)क्षीरविदार्याम्। उदबूस। मं भदुपा।
रत्ना.। कुष्माण्डे। प.इ.। सु चि.१८च।

**कर्कारुः।** स्त्री। कुष्माण्डीलतायाम्।

**कर्केतनः (रः)।** पुं। रत्नविशेषे। "कर्केत-
नाख्ं परमं पवित्रं।" गारुडे। विषशल्यक
वीर्य्यवहिषभेदे। "कर्केतन मरकत।"वा सू २६अ.।

**कर्कोधुकी।** स्त्री। भूबदर्याम्। वै.निघ.।

**कर्कोटः (कः)।** पुं बिल्ववृक्षे। मे काचतु-
ष्क। काँकरोल इति प्रसिद्धफलशाकलतायाम्।
च द.ज्व.चि शाकविधौ। "कर्कोटकं पर्पटकम्।"
एतत्फलञ्च स्थावरविषान्तर्गतफलविषे वर्त्तते। सु.
कल्प.२अ.। See फलविषम्। एतदुभयगुणा —
कफपित्तघ्नं शुक्रनाशनं रुचिकरञ्च। 'कर्कोटकं
फलं शीर्यं कारवेल्लकवद्गुणे।" राज.२प। कर्को-
टक त्रिदोषघ्नं रुचिरक्तमधुरं तथा। अत्रि १६अ।
इक्षुदण्डे। रा.नि.व १४। सर्पविशेषे। मे.।

**कर्कोटका (की)।** स्त्री। फलशाकविशेषे।
गोल कुमडा। मं कोहले। गुणाः—मूत्राघात-
हर प्रमेहघ्न कृच्छ्राश्मरीभेदनं विष्टम्भपर्न तथा
तिक्तमन पुष्टिकरं हृद्यं स्वादु बलीवकर्षं बल्यं
पित्तघ्नञ्च। रा.नि.व ७। कर्कोटकी रुचिकरी
कटु दीपनी तिक्तोष्णा वातकफघ्नी विषपित्तघ्नी
च। वै.निघ.। पीतघोषायाम्। पीतघोषा वा
झिङा। मं कटोली, काकली। रत्ना। कोषा
तक्याम्।

**कर्कोटकीफलम्।** क्ली। घोषाफले। हरि
कुष्माण्डे। झिङाफले। वै.निघ.। कर्कोटफले।
दाँकुड़ेरोल।

**कर्कोटपत्रम्।** क्ली। कर्कोटदले। दाँकुड़ेरो-
लपाता। एतद्वमने हितम्। वा.ज्व चि.१च.।

**कर्कोटमूलम्।** क्ली। कर्कोटकमूले। दाँकु-
ड़ेरोलमूल। मि यो काम चि.। "नस्यं कर्कोटमूलं
स्यात्।" च.द.पाण्डु चि।

**कर्कोटिका।** स्त्री। कुष्माण्डलतायां। त्रिगा-
छिकुमड़ा। कर्कोटके। दाँकुड़ेरोल। रा नि व.७।

**कर्कोटिकाकन्दरजः।** क्ली। धेनुमागुल-
चूर्णम्। भा म १म.शीतलाद.का.ज्व चि। "कर्को-
टिकाकन्दरजः प्रयुक्तः।"

**कर्कोटी।** स्त्री। कर्कोटिकायां। दाँकुड़ेरोल।
देवदालीवृक्षे। घोषाडाड़ा। वै.निघ।

**कर्कोलम्** । क्ली । कङ्कोली । कक्कोल । रा नि. व.१२ ।

**कर्चरिका (री)** । स्त्री । कचुडीति प्रसिद्धे पिष्टकभेदे । पाकराजः । [तालविशेषे ।

**कर्चु(र्चू)रम्** । क्ली । सुवर्णे । मे.रत्रिकं । हरि-

**कर्चूरः (कः)** । पुं । एकाङ्गीनामगन्धिद्रव्ये । একাঙ্গী । हिं कचूरा । ते भौकानीकचेट्टा । मं कं कचोरा । योग.रत्ना.वाजीक. । गुणाः—कटुः तिक्तोष्णः कफकासघ्न मुखवैशद्यकर. गलगण्डघ्न । रा.नि.व.६ । दीपन. रुच्य. सुगन्धी कटुपाक कुष्ठार्शोव्रणकासघ्न. लघु श्वासगुल्मकृमिघ्न । भा. पू.१भ । कर्चूरकन्दे । (क.) आमहरिद्रायाम् । কাঁচাহলুদ । च.टी.स्त्रा. । शट्याम् । मे.रत्रिक । वै निघ.२भ ज्व.चि. । See शटी ।

**कर्णः** । पुं । स्वनामप्रसिद्धदीर्घपत्रवृक्षे । कान-খোড়া গাছ । च.द.वि.ज्व.चि. । "दीर्घपत्रकक-र्णाख्यनेत्र खदिरसंयुतम् ।" श्रवणेन्द्रिये । रा.नि. व १८ । सुवर्णाली । শোণালু । "सुवर्णाली युता-श्रपि ।" मे.णद्विकं । मधुरत्वचि । दारचिनि । च कर्णमन्दारे । वै.निघ. ।

**कर्णकः** । पुं । मल्लविशेषे । तन्नामकसन्निपात विशेषे । कर्णमूली । लक्षणं —"दोषत्रयेण जनिता किल कर्णमूले तीव्रा ज्वरे भवति तु श्रवणव्यथा च । कण्ठग्रहो बधिरता श्वसनं प्रलाप प्रस्वेदमोहदह नानि च कर्णिकाख्ये ॥" भा.ज्व.चि. ।

**कर्णकण्डु (ण्डूः)** । पुं, स्त्री । कर्णस्रोतोगत रोगविशेषे । तस्य निदान यथा—"मारुतः कफ संयुक्तः कर्णकण्डुं करोति च ।" मा.नि. ।

**कर्णकिट्टम्** । क्ली । कर्णमले ।

**कर्णकीटा (टी)** । स्त्री । (Julus cornifex.) कर्णजलौकायाम् । शतपद्याम् । কাণ-কোটারী, কেন্নুই । हिं कानखजूरा । वै च. ।

**कर्णक्ष्वेडः** । पुं । कर्णरोगविशेषे । কাণের ভিতর সর্ব্বদা ভোঁ ভোঁ শব্দ । तस्य लक्षणं— "वायुः पित्तादिभिर्युक्तः वेणुघोषसमं स्वनम् । करोति कर्णयोः क्ष्वेडं कर्णक्ष्वेडः स उच्यते ।" मा नि । अत्र वायु. पित्तादिसहितः कर्णे वेणु घोषवच्छब्दमुत्पादयति ।

**कर्णगूथः** । पुं । कर्णमले । কাণের খোল। ত্বারা. ।

**कर्णगूथकः** । पुं । कर्णरोगविशेषे । यथा— "पित्तोष्मशोषितः श्लेष्मा जायते कर्णगूथक. ।" मा नि. ।

**कर्णच्छिद्रम्** । क्ली । कर्णरन्ध्रे ।

**कर्णजलूका** । स्त्री । (Julus) कर्णजलौकायाम् । श र ।

**कर्णजलौका (काः)** । स्त्री,पुं । शतपद्याम् । কানকোটারী । हिं कानखजूरा । वै.च. । च टी.स. ।

**कर्णजार्शः** । क्ली । कर्णार्शोरोगे । কাণের অর্শ । "प्रकुपिता दोषा ग्रीवायाश्रिताश्रवणेषु च. मांसमुपनिवर्त्तयन्ति । तत्र कर्णजेषु बाधिर्यं पूतिक-र्णता च ।" सु.नि २थ. ।

**कर्णजाहम्** । क्ली । कर्णमूले ।

**कर्णजित्** । पुं । गुडाकेशे ।

**कर्णजीरकम्** । क्ली । क्षुद्रजीरके । रत्ना. ।

**कर्णज्योतिः** । स्त्री । कर्णस्फोटायाम् । वै. निघ । [श मा. ।

**कर्णदुन्दुभिः** स्त्री । शतपद्याम् । কেন্নুই ।

**कर्णधारिणी** । स्त्री । हस्तिन्या । হস্তিনী ।

**कर्णनादः** । पुं । कर्णस्रोतोगतरोगे । কাণে শোঁ শোঁ রোগ । कर्णस्रोतोगतवायु. कर्णे भेरी मृदङ्गशङ्खप्रमादमदृशंशब्दमुत्पादयति । मा नि । "श ब्दवाहीषु सिरासु विमार्गगमगत. स एव शब्दाभिवहा-दा तु नाडीषु विमार्गगमगत. स एव शब्दाभिवहा-सु तिष्ठति । शृणोति शब्दान् विविधान् तदा स्व प्रणादमेनं कथयन्ति चामयम् ।" सु उ २०थ. ।

**कर्णपाकः** । पुं । कर्णस्रोतोगतरोगविशेषे । কাণপাকা । "कर्णपाकस्तु पित्तेन कोथविक्लेद लक्षवेत् ।" मा.नि । [কাণের পাকা ।

**कर्णपाकमः** । पुं । कर्णपाकमर्णविशेषे ।

**कर्णपाली** । स्त्री । कर्णपालीगतरोगे । কাণের পাতার রোগ । स पञ्चविधः—परिपोटोत्पातोन्मन्थ दुःखवर्धनपरिलेहिभिदेन, एवं लक्षणानि तत्-पर्याये कृतानि । सु.चि.२२थ. ।

**कर्णपुत्रिका** । स्त्री । कर्णशष्कुल्याम् । मीरट लतायाम् । [रटे । रा.नि व ३ ।

**कर्ण(कीर्ण)पुष्पः** । पुं । नीलझिण्ट्याम् । मी

**कर्णपूरः** । पुं । बालवृक्षे । र.मा.। शिरीषवृक्षे । नीलोत्पले । मे. । अशोकवृक्षे । रा.नि व.१० । नन्दीवृक्षे । त्रिका ।

**कर्णपूरकः** । पुं । कदम्बवृक्षे । कदम गाछ । रा नि व.८। अशोकवृक्षे । रा.नि.व १० । तिलके । वै.निघ ।

**कर्णपूरणम्** । क्ली । तैलादिभिः कर्णपूरणे । *काणे तेल देओया* । "कर्णं प्रपूरयेत्सम्यक् स्वेदयेमांचया भिषक् । नीचैः शुतिर्न बाधिर्य्यं स्या न्नित्यं कर्णपूरणात् ॥ रसाद्यैः पूरणद्यर्थे भोजना त्प्राक् प्रशस्यते । तैलाद्यैः पूरणद्यर्थे भास्करेऽस्तमुपागते ॥ स्वेदयेत्कर्णदेशन्तु परिवर्त्तनशायिनः । मूत्रैः स्नेहरसैः कोष्णैः पूरयेच तमो भिषक् ॥ स्वस्थस्य पूरितं रचेत् मात्राशतमवेदने । अतएव शीचगदे शिरोरोगे तथैव च ॥" वैद्यकम् ।

**कर्णप्रतिनाहः** । पुं । कर्णरोगविशेषे । "स कर्णगूथो द्रवतां यदा गतो विलायितो घ्राणमुखं प्रपद्यते । तदा स कर्णप्रतिनाहसंज्ञितो भवेद्विकारो शिरसोऽर्द्धभेदकृत् । मा नि. ।

**कर्णफलः** । पुं । (Ophiocephalus kurrawey.) मत्स्यविशेषे । काणनि माछ । गुणाः —अजीर्णकफकरः । राज ३प. ।

**कर्णबन्धनाकृतिः** । स्त्री । कर्णवेधनानन्तरं तद्बन्धमाकृतौ । सा पञ्चदशविधा । यथा—नेमिसन्धानकः, उत्पलभेद्यकः, वल्लूरकः, आसङ्गिमः, गण्डकर्णः, आहार्य्यः, निर्वेधिमः, व्यायोजिमः, कपाटसन्धिकः, अर्द्धकपाटसन्धिकः, संक्षिप्तः, हीनकर्णः, वल्लीकर्णः, यष्टिकर्णः, काकौष्ठक इति । सु.सू.१६ध. । विशेषाः स्वस्वपर्य्याये द्रष्टव्याः ।

**कर्णभूषणम्** । क्ली, पुं । अशोकवृक्षे । नाग केशरे । प.मु. ।

**कर्णमद्गुरः** । पुं । (Silurus unitus.) मत्स्यभेदे । काणमागुर । वै.निघ. ।

**कर्णमलम्** । क्ली । कर्णगूथे । हारा. ।

**कर्णमूलम्** । क्ली । कर्णस्य मूलदेशे । कर्णमूली। मा ज्व.नि. ।

**कर्णमोचकः** । पुं । कर्णस्फोटायाम् । काणछिडा । वै निघ २भ र.वि.चि दूर्व्वाद्यतैले ।

**कर्णमोटा** । स्त्री । वर्व्वूरवृक्षे । वै.निघ ।

**कर्णमोरटः** । पुं । कर्णस्फोटायां । काणछिडे, कान्दडा । रसेन्द्र चि.सूर्य्यपातकताम्रे । काणछिडाइय, *"जलस्थलभवः कर्णमोरटः ।"* शा.को दूर्व्वाद्यतैले ।

**कर्णरोगः** । पुं । कर्णव्याधौ । कानेर रोग । तस्य निदानादि ।—*नादोऽतिरुक् कर्णमलस्य* शोषः स्रावस्तनुश्चाश्रवणञ्च वातात् । भ्र.थ: ज्वराभीदरणं विदाहः सपीतपूतिश्रवणञ्च पित्तात् । वैश्रुत्यकण्डूस्थिरशोथशुक्लस्निग्धश्रुतिस्वल्परुजः कफात् । सर्व्वाणि रूपाणि च सन्निपातात् स्रावश्च तत्राधिकदोषवर्णः ।" मा नि. । कर्णरोगा सावस्थेनाष्टाविंशतिविधाः । यथा—"कर्णशूलं प्रणादश्च बाधिर्य्यं क्ष्वेड एव च । कर्णस्राव, कर्णकण्डूः कर्णगूथस्तथैव च । क्रमिकर्णप्रतिनाहौ विद्रधिर्द्विविधस्तथा । कर्णपाक पूतिकर्णः तथैवार्शश्चतुर्विधम् । तथार्बुदं सप्तविधं शोफश्चापि चतुर्विध. । *एते कर्णगतारोगा अष्टाविंशतिरीरिताः ॥"* वै. निघ. । [कर्णपाली । कानेर पाता । ई.च. ।

**कर्णलतिका** । स्त्री । Lobe of the ear.

**कर्णवंशः** । पुं । मञ्चे । हारा. । [वंशोनै ।

**कर्णवर्ज्जितः** । पुं । सर्पे । श च. । त्रि । क-

**कर्णवशः** । पुं । मत्स्यविशेषे । कानवश । तस्य स्वरूपं—हृस्वः गोलः कृष्णः शल्कवांश्च । तन्मांसगुणाः—दीपनं पाचनं पथ्यं हृद्यं बलपुष्टिकरञ्च । वैद्यकम् ।

**कर्णविद्रधिः** । पुं । Ulceration of the ear. कर्णसीतोगतस्फोटके । स द्विविधः दोषजागन्तुजभेदेन । तेन स्रोदधूमनिर्गमवत्पीडा दाहसन्तापा पक्वस्रावाश्च भवन्ति । मा.नि. । अपिच "क्षताभिघातप्रभवस्तु विद्रधिः भवेत्तदा दोषकृतोऽपरः पुनः । सरक्तपीतारुणमस्रमास्रवं प्रतोदधूमायनदाहचोषवान् ।" सु उ.२०ध. ।

**कर्णविधिः** । पुं । कर्णक्लेदनादौ । तद्विधिः

यथा—"स्वेदयेत् कर्णदेशन्तु किञ्चित् पार्श्वशायिन। मूत्रै स्नेहैरसैरुष्णै श्रोत्रस्रं प्रपूरयत्। कर्णञ्च पूरित रक्षेत् शत पञ्चशतानि वा। सहस्र वापि मात्राणां श्रोत्रकण्ठशिरोगदे। मूत्राद्यै पूरणञ्चैव भोजनात्प्राक् प्रशस्यते। तैलाद्यै पूरणञ्चैव भास्करेऽस्तमुपागते॥" भा।

**कर्णवेधनिका (नी)**। स्त्री। करिकर्णवेधनास्त्रे। द्वारा। कर्णवेधनास्त्रे। यथा—"कर्णमालोच्य बहुलां बहुलायाञ्च शस्यते। सूचिविभाग सुषिरा चाङ्गुला कर्णवेधनी॥" अत्रि.।

**कर्णव्यध.**। पु। कर्णवेधने। कानबेंधा। "स च रक्षाभूषणनिमित्त, षष्ठे सप्तमे वा मासि कर्त्तव्य। अयञ्च न जन्मकालाद्गृहे किन्तु श्रवस्रादिभाद्रपदाद्य षष्ठ माघ सप्तमी वा फाल्गुनलक्षिन् वेध्य।" सु.सू.१६अ।

**कर्णशष्कुली**। स्त्री। कर्णगोलके। कर्णमध्यवर्त्तिनि आकाशे। हे च।

**कर्णशूलम्**। पु, क्ली। Ear ache. कर्णस्रोतोगतरोगविशेषे। कान शूलन, कान काम ड़ान। तत्र श्रोत्रमारुत प्रतिलोम विचरन् दारुणशूलमुत्पादयति। कुपितरक्त कफेन पित्तेन वा येन केनचिदावृत भवेत, तल्लक्षणमपि प्रदर्शयति। भा नि। तदुक्त—"समीरण श्रोत्रगतोऽन्यथाचर समन्तत शूलमतीव कर्णयो। करोति दोषैश्च यथास्वमावृत स कर्णशूल कथितो दुराचर॥ सु.उ२०अ। हनुशङ्खशिरोग्रीव यस्य भिन्दन्निवानिल। कर्णयो कुरुते शूल कर्णशूल तदुच्यते॥" सु नि १अ।

**कर्णशूली**। त्रि। कर्णशूलयुक्ते।

**कर्णशेखरः**। पु। शालवृक्षे। रत्ना।

**कर्णशोथः (कः)**। पु। कर्णस्रोतोगतरोगविशेषे। "कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणै।" मा नि। "तेषु दुष्टपूतिकर्णत्वं बधिरत्वञ्च बाधते।" वा उ.१७अ।

**कर्णसंस्रावः**। पु। The discharge of pus from the ear. कर्णस्रोतोगतरोगविशेषे। कानेर पूंज। तस्य निदानरूपाणि—"शिरोऽभिघातादथवा निमज्जतो जले प्रपाकादथवापि विद्रधे। स्रवेद्धि पूय श्रवणोऽनिलावृत स कर्णसंस्राव इति प्रकीर्त्तित॥" मा नि।

**कर्णसमीपः**। पु। शङ्खदेशे। रा.नि.व.१८।

**कर्णसूटी**। स्त्री। कीटविशेषे।

**कर्णस्फोटा**। स्त्री। स्वनामख्यातलतायाम्। कानछिड़ा, कानफोटा। म कानफोडी। गुणा—कटुतिक्तहिमा विषघ्नी ग्रहभूतादिदोषघ्नी। रा नि व ३। "कर्णस्फोटा तु कटुका चोष्णा च ग्निप्रदीपनी। वातगुल्मोदरप्लीहकर्णव्रणविषापहा। कफपित्तज्वरानाहकफशूलविनाशिनी। सा तु पीता बुधैर्ज्ञेया चाज्ञने च प्रशस्तिका॥" वै निघ।

**कर्णस्रावः**। पु। कर्णसंस्रावे।

**कर्णाख्य.**। पु। श्वेतभिण्टायाम्। वै निघ.।

**कर्णाञ्जलिः**। पुं। कर्णशष्कुल्याम्।

**कर्णाटी**। स्त्री। हंसपादीक्षुपे। रा नि व ५।

**कर्णान्दु. (न्दू)**। स्त्री। कर्णपाल्याम्। कान तड़क। इति भाषा। हे.च.।

**कर्णाभरणकः**। पु। आरग्वधवृक्षे। बड़ ?र्गनू। रा नि व ९।

**कर्णारा**। स्त्री। कर्णवेधन्याम्। त्रिका.।

**कर्णारि.**। पु। अर्जुनवृक्षे। नदीसर्जवृक्षे। आजन् इति लोके। रा नि.व ९।

**कर्णार्बुदः (र्ब)**। पुं। कर्णस्रोतोगतरोगविशेषे। "कर्णशोथार्बुदार्शांसि जानीयादुक्तलक्षणै।" मा नि।

**कर्णिक.**। पु। गणिकारिकायाम्। चक्रके। सन्निपातज्वरविशेषे। लक्षण—"दारुणश्च कर्णिका ?? कर्णमूले शोथा ज्वरे भवति तु चरदुर्था च। कण्ठग्रहो बधिरता श्वसन प्रलाप प्रस्वेदमोहदहनानि च कर्णिकाख्ये।" भा.म.१अ।

**कर्णिका**। स्त्री। दाशपोशपीड़ायां। वा उ १८ अ.। मद्यागिमन्थवृक्षे। बड़ आ?न्द्र। रा.नि व ९। वै निघ १अ कानरोग दन्तपदर्द्याम्। कर्णगृहाग्रभागरूपाङ्गुली। करमध्याङ्गुली। हे च। हस्तिशुण्डाग्रे। ढोंटो। म कर्णिके। पद्मबीजकोषे। हे च। स्त्रीयोनौ कर्णिकाकारे मांसकीलप्रदरोगे। भा म ३अ.योनिरो। तदर्थ—"

र्बिन्यां कर्णिका योनौ श्लेष्मासृग्भ्याञ्च जायते ।" भा.नि । कठिन्याम् । कलचक्राम् । সেউতি গু নাব । वीजमातृका । वीजकोषे । वीजकोषन् कर्णिका । পদ্মচাকি বা কোষক । हारा । मु-ख्या: —तिक्ता कषाया मधुरा हिमा मुखवैशद्यकृत् लघ्वी तृषास्रकफपित्तघ्नी च । भा.पू.१भ ।

**कर्णिकार: (क:)** । पुं । A sort of cassia (Cassia fistula.) क्षुद्रस्वर्णालुवृक्षे । ছোট সোণালু গাছ । मं लघुवाहवा । तें किच गके । गुणा: —तिक्तरस: कटूष्ण: कफशूलघ्न: उदरक्रमिमेहघ्न: व्रणघ्न: गुल्मघ्नश्च । रा.नि व.८ । (Pterospermum acerifolium.) द्रुमोत्पले । ওলট্ কম্বল । हि कनियार, कनिकार । ते रेलचेट्, कोंडगोगुचेट्, गोगुचेट् । गुणा: – कटुतिक्त: लघु शोधनतुवर: रञ्जन सुखद: शोथश्लेष्मरक्तव्रणकुष्ठहरश्च । रा.नि व ८ । स्थलपद्मे । र.मा । उडुके । कडुया । रवा. ।

**कर्णिकारिका** । स्त्री । हारिद्राद्वृक्षे । वै निघ ।

**कर्णिकी (इन्)** । पुं । गजे । जटा. ।

**कर्णिन:** । त्रि । विकटकर्णे ।

**कर्णिनी** । स्त्री । Disease of the Uterus or Polypus uteri. श्लेष्मजन्यस्त्रीयोनिरोगविशेषे । यत्र योनौ श्लेष्मासृग्जा कर्णिकाकारग्रन्थिर्जायते । भा म.४भ.योनिरो.चि. । 'कर्णिन्यां कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते ॥" सु. उ.३८च । "अकाले वाहमानाया गर्भेण पिहितोऽनिल. । कर्णिकां जनयेद्योनौ श्लेष्मरक्तेन मूर्च्छित: । रक्तमार्गविरोधिन्या सा तया कर्णिनी मता ॥" च ।

**कर्णी** । पुं । आरग्वधवृक्षे । रा.नि.व १२ । वीवा पार्श्वभागे । गणिकारिकायाम् । वै.निघ. । त्रि । प्रशस्तकर्णे । कर्णयुक्ते । [शर्थरि, डलो । च.टी.भ. ।

**कर्णीरथ:** । पुं । स्कन्धवाह्ययाने । চৌপালা ।

**कर्णीवान्** । पु । आरग्वधवृक्षे ।

**कर्णेजपमन्त्र:** । पुं । विषनाशमन्त्रविशेषे । "ओं हर हर नीलग्रीवशिखाकृतजटामण्डित-खण्डेन्दुचूर्णसमलकपाय विषप्रसर्गहर उपसंहर हर हर हर नास्ति विषं नास्ति विष नास्ति विष उच्छिरे उच्छिरे मच्छिरे । इति कर्णेजपमन्त्रेण वारं वारं तालुमुखं सिञ्चेत् शीतवारिणा वारपरकम् ।" चचि.२स्थान.५६च. ।

**कर्णेन्द्रियम्** । क्ली । श्रवणेन्द्रिये । कान । 'भत आकाशतन्मात्रनिर्मितम् ।" सु.शा.१भ. ।

**कर्णोर्णम् (र्णा)** । क्ली, स्त्री । कर्णरोमणि । ·

**कर्त्तनम्** । क्ली । छेदने । मे.नत्रिकं । तर्कूटे । भिका. ।

**कर्त्तरी** । स्त्री । कृपाण्याम् । কাতারি । शस्त्रकर्त्तनोपयुक्ते शस्त्रे । কাঁচী, ক্ষুর প্রভৃতি । सु.चि.१च. यथा च "स्नायुत्वग्गर्भमल्यानां केशादीनाञ्च कर्त्तने । विविधाकृतयो योज्या: कर्त्तर्य: कर्त्तरीनिभा: ॥" चचि. ।

**कर्त्तरीयम्** । क्ली । स्थावरविषान्तर्गतवल्कसारनिर्यासविषभेदे । सु.कल्प.२च. । [द्वक. ।

**कर्त्तरीयुगम्** । क्ली । सिन्धुवारद्वये । निर्गिन्दा- ।

**कर्द:** । पु । कर्दमे । श.र ।

**कर्दट:** । पुं । करहाटे । पङ्के । मे.टत्रिकं । म-णालि । अवत्रवयमाने । [त्रि.च. ।

**कर्दनम्** । क्ली । कुक्षिशब्दे । পেটের ডাক ।

**कर्दमम्** । क्ली । मलराशौ । रा.नि.व.१२ । सु. चि.२५च. । मांसे । श.च. । मयीदग्धविषकन्दविपाकतमविषभेदे । प.सु सु.कल्प २च. । See कन्दविषं । वर्त्मकर्दमाख्यनेत्ररोगे । See वर्त्मकर्दम: ।

**कर्दम: (क:)** । पुं । पङ्के । कादा । गुणा:— "कर्दमो दाहपित्तार्त्तिशोथघ्न. शीतल: सर: ।" भा. । शालिधान्यविशेषे । भा.पू.१भ.शाकव. । See शालि: । पद्मिनीकर्दमे । "पुनर्नवा कर्दमकण्टकार्य्यौ ।" सु.चि.२५च. । राजिमत्सर्पविशेषे । सु कल्प.४च. । See सर्प: । अन्ने । वै निघ. ।

**कर्दमविसर्प:** । पुं । विसर्परोगभेदे । लक्षणं यथा—"कफपित्ताज्ज्वरस्तम्भो निद्रा तन्द्रा शिरोरुजा । अङ्गावसादविक्षेपौ प्रलेपारोचकभ्रमा: । मूर्च्छाग्निहानिर्भेदोऽस्थ्नां पिपासेन्द्रियगौरवम् । आमोपवेशनं लेप: स्रोतसाञ्च विसर्पति । प्रायेणामाशयं गृह्णन्नेकदेशं न चातिरुक् । पीडकैरवकीर्णोऽतिपीतलोहितपाण्डुरै । स्निग्धोऽसितो मेचक-

इत्थं दन्दार्थंकरत्व पित्तहरत्वञ्च । रा नि व १५। ह्रीवेरे । वाला ।

**कर्पूरनालिका** । स्त्री । पक्वान्नविशेषे । क र्पूरनाली, নেওয়ালা इति च ख्याता । यथा— 'घृताख्यया समितया कृत्वा लम्बपुट तत । लवङ्गो षणकर्पूरयुतया सितयान्वितं । पचेदाज्येन सिद्धेषा ज्ञेया कर्पूरनालिका । सर्वावस्थसुखी ज्ञेया गुणे कर्पूरनालिका ॥'' भा. ।

**कर्पूरमणिः** । पुं । पाषाणभेदे । প্রস্তরবি শেষ । गुणा —'मणि कर्पूरकस्तिक्त कटूष्णो व्रणापह । लन्दोवशातदोषादीन् नाशयत् ।'' रा नि व १३ ।

**कर्पूररसः** । पु । रसविशेषेऽतिसाराधिकारे । "हिङ्गुलम् अहिफेनञ्च मुस्तकेन्द्रयवं तथा । जाती फलञ्च कर्पूरं सर्व्वं संमर्द्य यत्नत । अनेन वटिका काय्या दिगुञ्जापरिमाणत ॥'' इत्यादि । भैष ज्य रत्ना चि. । रसकर्पूरे । রসকপূ র । तत्करणवि धि —'गुडमतसम कुर्यात् प्रत्येकं गैरिकं सुधी । पुष्टिका खटिका तद्वत स्फटिका सिन्धुजन्म च । वल्मीकं क्षारलवण भाण्डरञ्जकमत्तिका । सव्वाण्ये तानि सञ्चूर्ण्य वाससा चापि शोधयेत । एभिश्चूर्णै र्यत सूत यावद्याम विमर्दयेत् । तच्च चूर्णं सूतञ्च स्थालीमध्ये परिक्षिपेत् । तस्या स्थाल्या मुखे स्था लीमपरां धारयेत्समाम् । तयस्त्र कुट्टितमृदा मुद्र येदनयोर्मुखम् । सशोष्य मुद्रयञ्चुर्यो भूय सशोष्य मुद्रयेत् । सम्यग्विशोष्य मुद्रां तां स्थाल्यां चुल्ल्यां निधारयेत । अधि निरन्तरं दद्यात् यावदिनचतु ष्टय । अङ्गारोपरि सदनं रचयेदाद्र्दपर्णम । स्र नैवग्ड्यपरस्थालीगत रस । कर्पूरवत्सुविमल गृह्णीयादथ खण्डसम् । सदैव कुसुमचन्दनकस्तूरीकु ङ्कुमैर्युत । खादन्हरन्ति फिरङ्ग व्याधि सोपद्रव स पदि । विन्दति वह्निदीप्ति पुष्टि वीर्य्यं बल विपुल। रमयति रमणीशतक रसकर्पूरसेवक सततम् ॥' भा । গিরিমাটী, ঝিনুক, ফুলখড়ি, ফটকিরি, সৈন্ধবলবণ, উইমাটী, খারিলবণ, নাভামাটী প্রত্যেক চূর্ণ এক এক ভাগ, এক ভাগ পা- রাব-সহিত ১ প্রহর মাড়িয়া হাণ্ডীমধ্যে পাক করিবে ।

**कर्पूरहरिद्रा** । स्त्री । स्वनामख्यातद्रव्ये । आ मआदा । हि कर्पूरहलदी । ते.कर्पूरहरिद्रम्न वस्तुविशेष । गुणा —शीतला वातला मधुरा पि त्तघ्नी तिक्ता सर्व्वकण्डूघ्नी च । भा पू १भ ।

**कर्पूरा** । स्त्री । तरण्यां ।

**कर्पूरादितैलम्** । क्ली । योनिरोगे हितम् । पाठ "कर्पूरभल्लातकमद्धचूर्णं चारो यवानाथ मन शिला च । तैल विपक्व हरितालमिश्र रोमाणि निर्मूलयति क्षणेन' । कर्पूरादिभि कल्क । सिद्धे हरितालचूर्णं पादिकं प्रक्षेप्यम् । তিলতৈল ১ শ. কল্ক—কপূ র,ভেলার সুটী, শঙ্খচূর্ণ যবক্ষার এবং মনছাল প্রত্যেকে ৪ তো. জল ৪ শ ,। পাক সিদ্ধ হইলে হরিতাল চূর্ণ এক পোষা বা ২০ তোলা প্রক্ষেপ দিবে ।

**कर्पूराश्मा** । पुं । उपरत्नविशेषे । हि कर्पूर चीनिया । स्फटिके । वै निघ ।

**कर्ब.** । पुं । मूषिके ।

**कर्बर** । पु, क्ली । पुण्डकेशी । পুঁড়িইক্ষু । रा. नि व १४ । स्वर्णे । धुस्तूरस्य । व्याघ्रे । मे रत्रिकं ।

**कर्बरी** । स्त्री । प्रगाल्यां । व्याघ्रां । मे रत्रिकं । हिङ्गुपत्राम् । जटा ।

**कर्बुदार. (क.)** । पु । नीलम्लिष्टाम् । म. च श्वेतकाञ्चने । प मु , च मू ४श. । गुणा'— ग्राहिल रक्तपित्ते हितत्व । राज । श्वेतस्तु काञ्चनो ग्राही तुवरो मधुर स्मृत । रुच्यो दच श्वासकास पित्तरक्तविकारहा । क्षतप्रदरगुल्मार्नी गुणाश्चान्ये तु रक्तवत् ॥'' वै निघ । च । (क ,शैवालकाश्चे । চানতাপাছ । मु मू ४३श ।

**कर्बुरम्** । क्ली, पुं । स्वर्णे । हे च । हरिताले । श्रम । (र ) धुस्तूरवृक्षे । गन्धशट्यां । प मु । क महरिद्रायां । কাঁচা হলুদ, वै निघ । जले । मे. ।

**कर्बु(र्बू)र (क)** । पु। (Curcuma Zer umbet Rox । गन्धशट्यां । श्रम । आम्रहरिद्रा यां । हि कर्चीहलदी । च टी भ ग र । नदीनि- ष्पावधान्ये । रा नि व १६ ।

**कर्बुरफल** । पु । साकुरुण्डवृक्षे । रा नि व ६ ।

**कर्बुरा** । स्त्री । सविषजलायुकाभेदे । सु मू १९ श. । See जलायुका । पाठ्याइवृक्षे । वर्व्वर्याम् । वाबूईतुलसी । मे.रत्रिक ।

**कर्म्मूरम्** । क्ली । स्वर्णे । हरिताले । त्रिका. ।

**कर्म्म** । क्ली । यत् कुर्व्वन्ति, तत्कर्म्म । सु.सू.४१ अ. । तच्च त्रिविधं पूर्व्वकर्म्म प्रधानकर्म्म पश्चात्कर्म्म चेति । सु.सू.५अ. । [कालतायां । मे रचतुष्क ।

**कर्म्मकारी** । स्त्री । मूर्व्वायां । वै.निघ । विम्बि

**कर्म्मजः** । पुं । वटवृक्षे । जटा. ।

**कर्म्मपुरुषः** । पु । जीवे, "यस्मिन् चिकित्सा वर्त्तते स एव कर्म्मपुरुषश्चिकित्सिताधिकृत. ।" सु शा १अ ।

**कर्म्मफलम्** । क्ली । कर्म्मरङ्गफले । रत्ना. । कर्म्मविपाके । मे.लचतुष्कं । सुखे । दुःखे । त्रिका ।

**कर्म्ममूलम्** । क्ली । कुशे । कुश । श.च. । श रत्नी ।

**कर्म्मरङ्गः** । पुं । (Averrhoa arambola.) स्वनामख्यातवृक्षे । कामराङ्गा गाछ । अ कर्म राचे ँ झाड । फलगुणा—"अम्लत्वम् उष्णत्व वातहरत्व पित्तजनकत्वं । पक्वस्य मधुराम्लत्वं बल-रुचिकारत्वञ्च । रा.नि.व ११ । कटुपाकित्व अम्लपित्त कारित्वं तीक्ष्णत्वञ्च । राज ३प.। "कर्म्मारस्य फल श्याम ग्राह्यम्ल वातनाशन । उष्ण पित्तकरञ्चैव त त्पक्वं मधुरं मत । अम्लञ्च बलपुष्टीनां रुचेश्चैव तु वर्द्धकम् ॥" वै.निघ. । "कर्म्मरङ्ग हिम ग्राहि स्वाद्वम्लं कफवातहृत् ।" भा. ।

**कर्म्मरी** । स्त्री । The manna of the bamboo. वंशलोचनायाम् । वै.निघ. ।

**कर्म्मविपाकः** । पु । पूर्व्वजन्मकृतशुभाशुभ फलभूते रोगादौ ।

**कर्म्मारः** । पुं । वंशे । कर्म्मरङ्गे । रा.नि.व.७।११ ।

**कर्म्मारकः** । पु । कर्म्मरङ्गवृक्षे । वै.निघ. ।

**कर्म्मार्हः** । पु । मनुष्ये ।

**कर्म्मारिकः** । पुं । शाखोटवृक्षे ।

**कर्म्मेन्द्रियम्** । क्ली । कर्म्मसाधनेन्द्रिये पाय्वादि पञ्चके व्यस्ते समस्ते च ।

**कर्व्वः** । पु । मूषके । कामे । उणा. ।

**कर्व्वरः** । पु । व्याघ्रे । मे ।

**कर्व्वरी** । स्त्री । [illegible]पत्राम् ।

**कर्श्यः** । पुं । कर्च्चूरे । आम आदा । हि कचूर । रा.नि.व.६ ।

**कर्षः** । पुं । औषधभक्षणादौ मानप्रमाणे । स च षोडशमाषात्मक । १६० र. । च । तोलकद्वयात्मक कपरिमाणादिमाने । "कोलद्वयन्तु कर्षं स्यात् ।" प.प्र.१ख. । दशमाषकात्मकवालिङ्गमाने । "कर्ष स्याद्दशमाषक ।" शार्ङ्ग.पू.१अ । सुश्रुतस्तु पञ्च रक्तिकामाषमुक्त्वा १६माषात्मकं कर्षं कथयति । भरणद्वयात्मकश्रीह्यादिमाने ८०र । विभीतकवृक्षे । श र. । क्ली । सुवर्णे ।

**कर्षकः** । पुं । अयस्कान्तमणौ ।

**कर्षणम्** । क्ली । कृशीकरणे । है. च. ।

**कर्षणिः** । स्त्री । श्वतसोडचे । मदिना गाछ । उणा. । [श्वेतवचायां । वै निघ. ।

**कर्षणी** । स्त्री । चौरिणीक्षुपे । रा.नि.व ५ ।

**कर्षणीया** । स्त्री । कामवल्कवीजे । वै निघ. ।

**कर्षफलः** । पु । विभीतकवृक्षे । वहेड़ा वृक्ष । रा.नि.व.११ । भा पू.१भ. । भल्लातकवृक्षे । वै निघ ।

**कर्षफला** । स्त्री । आमलकवृक्षे । आमला गाछ । रत्ना. ।

**कर्षार्द्धम्** । क्ली । तोलकपरिमाणे । प.प्र.१ख. ।

**कर्षिका** । स्त्री । कामवीजे । वै.निघ. ।

**कर्षिणी** । स्त्री । चौरिणीक्षुपे । गोक्षुरे गाछ । रा.नि व ५ । वै.निघ. । [दिर्क ।

**कर्षुः** । पुं । करीषाग्नौ । जीविकायाम् । मे च

**कर्षूः** । स्त्री । अभ्यन्तरप्रसृते सङ्कीर्णमुखे खात विशेषे । च.सू.१४अ. । करीषाग्नौ । वै.निघ. ।

**कर्षूस्वेदः** । स्वेदविशेषे । लक्षणं यथा—"खात येऽक्षधनसाध. कर्षू स्थानविभागवित् । दोषैर धूमैरङ्गारैस्तां कर्षू पूरयेत्तत । तस्यामुपरि शय्या या स्वपन् स्विद्यति ना सुखम् ॥" च.सू १४अ ।

**कलः** । पुं । शालवृक्षे । शाल्गाछ । रा नि.व.ध ।क्ली । शुक्रे, रेतसि । मे.लद्विकं । मदरोट्के । वै.निघ.२भ.सङ्क्षणौ चि ध्वीयादिचूर्ण । त्रि । च कोर्णे । मे. ।

**कलकः** । पुं । मद्गुमत्स्ये । हे.च. । वेतूरवे ।

**कलकण्ठः** । पुं । हंसे । पारावते । कोकिले । मे.ठचतुष्कं । ग्रुकपक्षिणि । টেয়া পাখী । प.सु.।

**कलकफलः** । पुं । दाडिमवृक्षे । [चतुष्कं ।

**कलकलः** । पु । सर्ज्जनिर्य्यासे । धूने । मे ल

**कलघण्टिका** । स्त्री । कणगारिवायाम् । श्यामा लता । भा.पू.१भ. । See कनका ।

**कलघोषः** । पुं । कोकिले । श.र. ।

**कलङ्कः** । पुं । लौहमले । क्रोडे । अपवादे । मे कत्रिकं । मत्स्यभेदे । वै.निघ ।

**कलङ्कषः** । पुं । सिंहे । श.मा. ।

**कलङ्की** । त्रि । लौहमलयुक्ते ।

**कलजः** । पु । कुक्कुटे । वै.निघ ।

**कलजातः** । पुं । कलमशाली । কলমা ধান।

**कलञ्जः** । पुं । ताम्रकूटे । দোক্তা তামাক, খর্ষান তামাক । हिं तामाकू, सुरती । धूमपर्णी धूमपानगुणाः—"कलञ्जसेवनधूमपानात् स्यात् वयार्डिर्मुखरोगहानिः । कफप्रमामज्वरहानिकारी गान्धर्व्वविद्याप्रवणैकसेव्यम् ॥" इति विष्णुसिद्धान्त सारावली । सख्याविशेषे यथा—"सप्ताली प्रोच्यते गुञ्जा सा तिस्रीरूपक भवेत् । रूपकैर्दशभि. प्रोक्तः कलञ्जो नाम नामत ।" युक्तिकल्पद्रुम । वेत्रल तायाम् । विषास्त्रहतमृगपक्षिणी । त्रिका. ।

**कलत्रम्** । क्ली । श्रोणी । रा नि व १८ । भार्य्यायाम् । मे.रत्रिक । भगे । त्रिका. । [१२ ।

**कलदूतम्** । क्ली । रौप्ये । रूपा । रा.नि.व

**कलधौतम्** । क्ली । रजते । रूपा । स्वर्णे । সোনা । रा नि व.१२ । [मे नचतुष्क ।

**कलध्वनिः** । पुं । मयूरे । पारावते । कोकिले।

**कलनः** । पुं । वेतसे । বেতগাছ । रा.नि.व.८। क्ली । एकमासिकगर्भे । गर्भवेष्टने । हला. ।

**कलनादः** । पु । कलहंसे । वै.निघ ।

**कलन्धुः** । पुं । घोषीशाके । रा.नि.व ७ ।

**कलभः** । पुं । त्रिंशद्वर्षपर्य्यन्तकरिशावके । उष्ट्रे । हला. । धुस्तूरवृक्षे । रा.नि.व.१० ।

**कलभवल्लभः** । पुं । पीलुवृक्षे । रा.नि.व.११।

**कलभवल्लभा** । स्त्री । पिप्प्ली । रा.नि.व.२३।

**कलभी** । स्त्री । चञ्चुपे । रा.नि.व ४ ।

**कलमः (शालिः)** । पुं । शालिधान्यविशेषे । রোওয়া ধান । रा नि.व.१६ । मगधादिषु प्रसिद्धे धान्यविशेषे । কলমা ধান । स एव महातण्डुल इति काश्मीरदेशे ख्यात । "कलमः कालविख्यात जायते स इहदने । काश्मीरदेश एवोक्तो महातण्डुल एव च ॥" भा. । गुणाः—अयं महती हीनगुण स्वादुपाकरसत्वादियुक्तश्च । वा.सू.६ष. हेमाद्रि.धान्यवर्गे । पित्तश्लेष्मकरः तथ्य. मधुरश्च । रा नि व १६ । कलमोऽस्रकत्रिदोषघ्नश्चक्षुष्य कषायवान् । राज ३प. ।

**कलमा** । स्त्री । शालिधान्ये । सा च श्लेष्मपित्तहा । श्वया च लघु पथ्या वातश्लेष्मवर्द्धिनी च । अत्रि.१६श्र । [रा नि.व.१६ ।

**कलमोत्तमः (मा)** । पु,स्त्री । सुगन्धशाली।

**कलम्बः (कः)** । पु। कदम्बवृक्षे । विश्व । शाकनाडिकायाम् । अम । शरे । मे.बत्रिकं । सर्पे । धाराकदम्बे । কেলিকদম্ । रा नि.व.९ ।

**कलम्बशालिः** । पुं । शालिधान्यविशेषे । কলমা ধান । [वै निघ ।

**कलम्बिकः** । पु। पक्षिविशेषे । চটক পক্ষী ।

**कलम्बिका** । स्त्री । कलम्बीशाके । কলমীশাক । श.र. । ग्रीवापश्चाद्भागे । हे.च. ।

**कलम्बिकी** । स्त्री । पक्षिणीभेदे ।

**कलम्बी** । स्त्री । *Convolvulus repens.* स्वनामख्यातजलजशाकविशेषे । কলমীশাক । हि करेमु । तें तीमीवकलिचेट्टु । प.मु. । गुणा.—स्तन्यदुग्धप्रकृत्योकरत्व मधुरत्व कषायत्व गुरुत्वरत्व । राज.३प. । "कलम्बी स्तन्यदा प्रोक्ता मधुरा शुक्रकारिणी ॥" भा. । उपोदकायाम् । पुंदेशाक रा.नि.व.७ । [र. । See कलम्बी ।

**कलम्बुः (म्बूः)** । पुं, स्त्री । कलम्बीशाके । श.

**कलम्बुका** । स्त्री । जलजशाकविशेषे । কলমীশাক । मैष.गुलचि शम्बुकादिगुडी । [हारा. ।

**कलम्बुटम्** । क्ली । हैयङ्गवीने । नवनीते ।

**कलयष्टः** । पु । सर्जरसे । धूने । वै.निघ. ।

**कलायः** । पु। (Pisum sativum.) Name of various leguminous seeds. मटर इति ख्याते शिम्बीधान्ये । र मा. । माषकापरमा- मधिये शिम्बीधान्यविशेषे । बाँटुला मटर,तेउड़ा मटर । हि केराव । ते पेद्‌दर्म्ल । स द्विविध.— विपुटो वर्तुलश्च । गुणाः —अतिवातलः । वा मू शिम्बीधान्यव । पित्तदाहकफघ्न शीतः कषाय. रुचिपुष्टिप्रदः आमदोषकरश्च । रा.नि.व.१६ ।

**कलायकः** । पुं । कलमशाली । कलमा धान । रा.नि.व.१६ । गुणाः—"किञ्चित्कषाया मधुरा प्रदिष्टा रक्तप्रशान्तिं जनयन्ति बल्या. । किञ्चित् सवातं विनिघ्नन्ति पित्त कलायका मुद्गसमानक पा. ।" अत्रि.१५अ । [दूर्वाया । वै निघ. ।

**कलायका** । स्त्री । मस्याख्या । हिञ्चे । गण्ड

**कलायखञ्जः(खण्ड.)** । पुं । वातरोगभेदे । लक्षणम् —"कम्पते गमनारम्भे खञ्जन्निव च ल क्ष्यते । कलायखञ्ज तं विद्यान्मुक्तसन्धिप्रबन्धनम्॥" सु नि.१अ. । "क्रम. कलायखञ्जस्य खञ्जपङ्गोरिव स्मृत । विशेषात्तैरेव कर्म कार्यमत्र विचक्षणै.॥"

**कलायशाकम्** । क्ली । शाकविशेषे । हि केरावशाक । गुणाः—"कलायशाकं भेदि स्याल्लघु तिक्तं त्रिदोषजित्" । भा.पू १भ शाकव । "कला यशाकं पित्तघ्नं कफघ्न वातलं गुरु । कषायानुर सयैव विपाके मधुरश्च सत् ।" सु.सू.४६अ. ।

**कलायसूपः** । पुं । कलायकृतयूषे । गुणा.— "कलायसूपः कथितो लघु याही सुशीतल. । रु च्यो मेध्य. पाककाले स्वादुसमदपित्तनुत् । अरो चकहरश्चासौ कफनाशकरो मत. । वै निघ. ।

**कलाया** । स्त्री । गण्डदूर्वायाम्। श्वेतदूर्वायाम्। श्वेतदूर्वा । रा.नि.व ८ । लम्बयवके । काल छोला । प.मु. । [व.१० ।

**कलारुहा** । स्त्री । सर्पबेतकौषधे । रा नि.

**कलालापः** । पुं । भ्रमरे । रा.नि.व.१९ ।

**कलाविकः** । पुं । कुक्कुटे । त्रिका. ।

**कलाविकलः** । पुं । चटके । श.र. ।

**कलिः** । पुं । विभीतकवृक्षे । भा.म.१भ मेद. . वि. । स्त्री । कलिकायाम् । मे धरिर्बे । श्वेतमुस्तके । भल्लातकवृक्षे । वै.निघ. ।

**कलिकः** । पुं । क्रौञ्चपक्षिणि । क्रौंचबक । वंशधान्यभेदे । बाँशेर धान ।

**कलिका** । स्त्री । वृश्चिकाल्याम् । विछातिगाछ। रा नि व ८ । अस्फुटायाम् । पुष्पकोरके । उत्पल- नीलिकायाम् । वै.निघ.।पुष्पविशेषे । कलके फूल।

**कलिकारः** । पुं । धूम्याटपक्षिणि । फिर्डे । पीतमस्तकपक्षिणि । करञ्जवृक्षे । मे । जलपिप्प- ल्याम् । वै.निघ. । [स्त्री । नाटीकरञ्ज । श्रम ।

**कलिकारकः** । पुं । पूतिकरञ्जे । लटाकर-

**कलिकारिका** । स्त्री । लाङ्गलीवृक्षे । विष- लाङ्गलिया । वै.निघ. ।

**कलिकोत्तमः** । क्ली, पुं । लवङ्गे । गन्धशाली ।

**कलिङ्ग(क)म्** । क्ली । इन्द्रयवे । च द पि ज्व. कलिङ्गादि । "कलिङ्गं कटफलं मुस्तं पाठाति- कटुरोहिणी ।" च.द.ज्वरातिसार.र. । "दारु- पाठाकलिङ्गकम् ।"

**कलिङ्गः (कः)**। पुं । मधवृक्षे । पाकुड़ गाछ। कुटजवृक्षे । कुड़चि गाछ । शिरीषवृक्षे । रा नि. व.८ । इन्द्रयवे । रत्ना.८ । र.सा.सं. सि यो.राजि- ज्वरे । कलिङ्गकल्पामलकौ । सि.यो पिप्पल्यादि घृते । पूतिकरञ्जे । पक्षिविशेषे । फिङा । मे.ग- त्रिक । वा.चि.१अ । तरम्बुजे । तरमुज । गुणाः —मधुरः शीतलो वृष्यो बल्य. पित्तदाहघ्नः सम- र्पण. वीर्यकरश्च । रा.नि.व ७ । घातकपक्षिणि । ह्युला. । विभीतके वृक्षे । त्रिका. ।

**कलिङ्गजः** । पुं । इन्द्रयवे । वै निघ. ।

**कलिङ्गद्रुः** । पुं । कुटजवृक्षे । भा म.१भ.काल. चि. । "कलिङ्गद्रुफलं रजः ।"

**कलिङ्गयवः** । पुं । इन्द्रयवे । च.द. । सि.यो. लवणोत्तमाद्यचूर्णे ।

**कलिङ्गबीजम्** । क्ली । इन्द्रयवे । रा नि व.८।

**कलिङ्गशाठी** । स्त्री । नदीजात शठीविशेषे । गुणाः—तिक्ता बलकरी वह्निदीपनी चर्मोदरी वातकातिसारघ्नी । सा यवक्षारयुक्ता गर्भिण्या वान्तिं हरेत् । अत्रि. । [त्रिवृतायां । श.च. ।

**कलिङ्गा** । स्त्री । कर्कटशृङ्ग्याम् । र.मा.। श्वेत-

**कलिङ्गादिकषायः** । पुं । "कलिङ्गकाः प-

टीक्ष्ण पत्रं कटुकरोहिणी" इत्येतद्द्रव्यकृतकषायं। स च सन्तातादीनां शमन.। वा चि १भ.। कषायोऽयं पित्तज्वरघ्न। च द.पित्तज्व.चि.।

**कलिङ्गाद्यगुडिका** । स्त्री । ज्वरातिसारे। पाठः—"कलिङ्गबिल्(बिल्व)जम्ब्वामकपित्थ सरसाञ्जनं। लवा हरिद्रे ह्रीवेर कट्फल शुकनासिका। लोध्र मोचरस शङ्ख धातकी वटशुङ्गक। पिष्ठा तण्डुलतोयेन वटकानक्षसम्मितान्। छायाशुष्कान् पिबेत्॥" इन्द्रयवादीनां प्रत्येकं समभाग गृहीत्वा तण्डुलोदकेन विमर्द्य वटी कार्या छायाया शोषणीया च। शुकनासिका श्योणाकलक्। च. द.भैष.। चर्मकषेति केचित्। "जलमष्टगुणं दत्त्वा पलं कण्डिततण्डुलात्। भावयित्वा ततो ग्राह्यं तण्डुलोदककर्मणि॥" प प्र ३प। [ह्रिकज्व.चि।

**कलिञ्जः** । पुं । कुलिञ्जने। वै निघ २भ.जि

**कलितरुः** । पु । विभीतकवृक्षे। वै.निघ.स्वरभेदचि.।

**कलिद्रुः (मः)** । पु । सरलदेवदारौ। भल्लातकवृक्षे विभीतकवृक्षे। रा.नि.व.११,भा.म.१भ कण्ठकुब्ज ज्व.चि। "किरातकटुकाकषा कुटजकण्टकारीशटीकलिद्रुकिलिमाभया।"

**कलिन्दः** । पु । सूर्ये। विभीतकवृक्षे। रा नि व २३। भेलकवृक्षे। सरलदेवदारौ। वै निघ।

**कलिन्दकः** । पुं। कर्कारौ। तरम्बुजे। वै.निघ।

**कलिप्रदः** । पु । मद्यशालायाम्। वै निघ.।

**कलिप्रियः** । पु । वानरे। श र.।

**कलिफलम्** । क्ली । विभीतकफले। च.द.।

**कलिमः** । पु । शिरीषवृक्षे। वै.निघ।

**कलिमारः(क)** । पु । पूतिकरञ्जे। कण्टकवति करञ्जे। च टी र।

**कलिमालः,(ल्यः)कः** । पु । पूतीकरञ्जे। नाटाकरञ्ज। रा.नि.व.९। [पु.१भ.।

**कलियुगालयः** । पुं । विभीतकवृक्षे। भा

**कलियुगावासः** । पु । विभीतकतरौ। भा।

**कलिवृक्षः** । पु विभीतकवृक्षे। दे च।

**कलिहारी** । स्त्री। लाङ्गल्याम्। विषनाङ्गनिम्ना। हिं करिहारी। भा.पू.१भ। वै.निघ वा व्या.महाविषगर्भतैले।

**कली** । स्त्री। कलिकायाम्। च टी भ.।

**कलुः** । पु । गरुडशाली। पक्षिराज धान्यं। रा नि.व.१६।

**कलुषः(षा)** । पु,स्त्री। महिषे। रा.नि.व.१९। मण्डलिसर्पे। सु कल्प ४भ.। See सर्प।

**कलुषमञ्जरी** । स्त्री जिङ्गिन्याम्। वै निघ।

**कलेवरम्** । क्ली। शरीरे। रा नि व.१८।

**कलोद्भवः** । पु । कलमशाली। कलमा धान। रा.नि.व.१६।

**कल्कः (ल्कम्)** । पु, क्ली। रसपिष्टद्रव्यपिण्डे। जले वाटा द्रव्य। यत्पिण्डं रसपिष्टानां तत्कल्कं परिकीर्त्तितम्। च। मध्वादिप्रेषितद्रव्ये। "कल्की मध्वादिपेषिते।" रा.नि व २०। तस्य मात्रा कर्षमिता। तत्र मधुघृततैलमात्रा द्विगुणा, सितागुड सम, द्रवाश्च चतुर्गुणा ग्राह्याः। प प्र.१ख.। घृततैलादिविषये। मै.कल्कि। घृततैलादिपाके द्रवादिपेषिते देयद्रव्ये। "द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा जलमिश्रितं। तदेव सुरभिः पूर्व्वैः कल्क इत्यभिधीयते॥" प.प्र.१ख.। द्रव्यमार्द्रं शिलापिष्टं शुष्कं वा सजलम्भवेत्। प्रक्षिप्य गालयेद्वस्त्रे तन्मात्रकर्षसम्मितम्॥ भा.। "यः पिण्डश्चार्द्रपिष्टानां स कल्क इति कीर्त्तितः। तद्वदेवच साधात्कल्को द्रवादिपेषितः॥ मात्रा पिचुमिता तत्र द्विगुणं माक्षिकादिकम्। सितां गुडं समं दद्याद्द्रवा देयाश्चतुर्गुणाः॥" इति कल्कविधि.। कर्षमले। श र। शुष्कनाम गन्धद्रव्ये। शिलारस। रा.नि.व १२। See किट्टक.। विष्ठायां। किट्टे। मै.कल्कि। कल्किटने। वै निघ।

**कल्कफलः** । पु । दाडिमवृक्षे। रा नि.व.११।

**कल्करोध्रः** । पु । पट्टिकारोध्रे। रा.नि व ६।

**कल्किवृक्षः (धर्म्मघ्नः)** । पुं। विभीतकवृक्षे। रा.नि.व ११। [नि व २०।

**कल्पः** । पुं। विधौ। रोगक्षयौ। कल्पादौ। रा.

**कल्पकः** । पुं। नापिते। श्र.भा.। कर्चूरे। भा. पू.१भ.।

**कल्पतरुः** । पुं । कल्पवृक्षे । क्रमुकवृक्षे । रा.नि.व ११। तन्नामकज्वरघ्नरसे । पाठ —"रस गन्धं विष ताम्र सम्भाग विचूर्णयेत् । भावयेत्पञ्चभि. पित्ते क्रमश पञ्चवासरम् ॥ निर्गुण्डी स्वरसेनैव मर्द्दयेत्सप्तवासरम् । आर्द्रकस्य रसेनैव भावयेच्च त्रिधा पुन ॥ सर्षपाभा वटी कार्य्या छायया परि शोषिता ।" जीर्णज्वरे विषमज्वरे च २१ वटाः प्रयोज्या । कज्जलीपिप्पलीयुतमुष्णजल पाययेत् । शर्करया दधि देय खादयेच्च । भैष.ज्व.चि. ।

**कल्पद्रु (मः)** । पु । कल्पतरौ । कुल्माषवृक्षे । সোণালু গাছ । वै निघ ।

**कल्पनम्** । क्लो । कृतौ । कर्त्तने । त्रिका ।

**कल्पना** । स्त्री । हस्तिसज्जायाम् । अम. । रचनायाम् ।

**कल्पनी** । स्त्री । कर्त्तर्याम् । কাঁচি । हे.च. ।

**कल्पपादपः** । पु । कल्पवृक्षे । विभीतकवृक्षे ।

**कल्पवृक्षः** । पु । विभीतकवृक्षे । कल्पपादपे । अम. । रत्ना. । [मद्ये । वै निघ. ।

**कल्पा** । स्त्री । श्वेतजातीवृक्षे । শ্বেতচামিলী ।

**कल्पान्तः** । पु । प्रलयकाले । अम. ।

**कल्मषम्** । क्ली । पापे । कारपुच्छे । त्रिका. ।

**कल्मापः** । पु । सुगन्धशाली । रा नि.व १६ ।

**कल्यम्** । क्ली । सुरायाम् । हला. । प्रभाते । मे. यविक । मधुनि । हे.च. । त्रि । वाकश्रुतिरहिते । नीरोगे । सु चि.२६अ. । "कल्यस्योदयवयस. ।" दर्पे । मे यविक ।

**कल्यजग्धिः** । स्त्री । प्रातर्भोजने । जटा. ।

**कल्यद्रुमः** । पुं । विभीतकवृक्षे । वै.निघ. ।

**कल्यवर्त्तः** । पुं । प्रातराशे । त्रिका । [म.र. ।

**कल्या** । स्त्री । मद्ये । मे यविके । हरीतक्याम्

**कल्याङ्गः** । पुं । पर्पटवृक्षे । ক্ষেৎপাপড়া । रा.नि व ५ ।

**कल्याणम्** । क्ली । सुवर्णे । सुखे । रा नि.व. १२ । पुं । लघुसर्ज्जवृक्षे । শাল গাছ । [वै निघ. ।

**कल्याणकः** । पुं । पर्पटके । ক্ষেৎপাবড়া ।

**कल्याणगुडः** । पुं । यक्ष्माधिकारे । पाठ.—"प्रस्थत्रयेणामलकीरसस्य शुद्धस्य दत्त्वार्द्धतुलां गुडस्य । चूर्णीकृतैर्ग्रन्थिकजीरचव्यव्योषेभकृष्णाहपुषाजमोदै । विडङ्गसिन्धुत्रिफलायमानीपाठाग्निधान्यैश्च पलप्रमाणैः । दत्त्वा त्रिवृच्चूर्णपलानि चाष्टावष्टौ च तैलस्य पचेद्यथावत् । त भक्षयेदक्षफलप्रमाण यथेष्टचेष्ट त्रिसुगन्धियुक्तम् ।" पाकनियम —आमलकीस्वरसा. १२श. इक्षुगुडा. ६।०श यथाविधि एकत्र पचेत् । सिद्धप्राये पाके पिप्पलीमूलादीनां प्रत्येकं कर्षं (৮ তো ), त्रिवृच्चूर्णस्य शराव (৮ তো ) तैलस्य च शराव (৮ তো.) प्रक्षिपेत् । तथा त्रिसुगन्धस्य पृथक् पल मिश्रयेत् । तथा त्रिवृता तैलभर्जिता देया इति वृद्धा । प्रक्षेपद्रव्याणि—पिप्पलीमूल जीरक चव्यं त्रिकटु गजपिप्पली हपुषा वनयमानी विडङ्ग सैन्धवं त्रिफला यमानी पाठा चित्रकमूलं धान्यकञ्च । च.द यक्ष्म.चि. । रस र । भैष. ।

**कल्याणघृत(पानीय)म्** । क्ली । विषमज्वरे उन्मादे च । पाठ —"विडङ्गत्रिफलादन्तीभद्रदारुहरेणव. । तालीशपत्रमञ्जिष्ठाकेसरोत्पलपद्मका दाडिमं मालतीपुष्पं रजन्यौ शारिवे स्थिरे । प्रियङ्गुस्तगरं कुष्ठ बृहत्यौ चैलवालुकं । सचन्दनगवाक्षीभिरेतै. सिद्ध विषापह । सर्पि. कल्याणक .. । বাথারশশা, ত্রিফলা, রেণুক, দেবদারু, এলবালুক, শালপাণি, তগরপাদুকা, হরিদ্রা, দারুহরিদ্রা, অনন্তমূল, শ্যামালতা, প্রিয়ঙ্গু, নীলোৎপল, এলাচ, মঞ্জিষ্ঠা, দন্তী, দাড়িম, নাগেশ্বর, তালীশপত্র, বৃহতী, মালতীপুষ্প, বিড়ঙ্গ, চাকুন্দিয়া, কুড, রক্তচন্দন, পদ্মকাষ্ঠ প্রত্যেকে ২ তো ঘৃত ৩২ প. জল ১৬ শ । एतच्च घृत द्विगुणजल चतुर्गुणञ्च दुग्धं दत्त्वा यदा पचेत् तदा क्षीरकल्याणमुच्यते । सा को.उन्मा. चि. । सु.कल्प.७अ । भैष. । अन्यत् दाहाधिकारे महत् कल्याणकं घृतम् । पाठ.—"चतुर्गुणे जलामर्द्धे रसे क्षीरे चतुर्गुण । सर्पि. प्रस्थ बलाश्वगन्धा मञ्जिष्ठा पीवरी स्थिरा । काकोल्यौ मधुमेदे द्वे ऋद्धी द्वे देवदारु च । एषामक्षपलैः कल्कैः पचेत्कल्याणकं महत् ॥ ঘৃত ৪ শ শতমূলীরস ১৬ শ. দুগ্ধ ১৬ শ. । কল্ক—জীরা, শ্বেত বেলেড়া, মঞ্জিষ্ঠা, অশ্বগন্ধা, হরিদ্রা, কাকোলী, ক্ষীরকাকোলী, যষ্টিমধু, মেদা, মহামেদা, ঋদ্ধি,

व्यञ्जनं पाकतो घनं । लेह्वरखल इत्यन्ये दोषलाः स्वस्वयोनिवत् । कल्को विल्वशलाटूनां तिलकल्कश्च तत्समः । दध्नः सरोऽम्ल. सस्नेहः खलो हन्ति प्रवाहिकाम् ॥" शौकुक्कुटः अपराजितश्च नामापरौ खलावपि । वा.चि.९।१२श.स्रग्यः । तमालवृक्षे । श.च. । त्रि । नीचे । अधमे । मे. ।

**खलकाम्बलिकः** । पुं। तिलकल्के। वै निघ.।

**खल(लि)तिः** । पुं । इन्द्रलुप्तरोगिणि । टेको । हे.च. । त्रिका. ।

**खलमूर्त्तिः** । पुं । पारदे । श.च. ।

**खलयूपः** । पुं । खडयूपे ।

**खलाधारा** । स्त्री । तैलपायिकायाम् । তেলা পোকা । जटा. । [इत्यपि पाठोऽस्ति ।

**खलिः** । पुं । तिलकिट्टे । रा.नि.व.१६ । खल

**खलिद्रुमः** । पुं । सरलदेवदारौ । वै.निघ. ।

**खलि(ली)नः** । पुं, क्ली । खलीने । লাগাম । अ.टी.रा. । [खलसमूहे । अम. ।

**खलिनी** । स्त्री । क्षुपतालमूल्याम् । वै.निघ. ।

**खलिशः** } **खलेशयः** } पुं । (Tricopodus colisa.) मत्स्यविशेषे । খলশে মাছ । हारा। वाहित्वं कषायत्व वायुकोपनत्वं रुचत्व लघुत्वं शूलहरत्वं किञ्चिदामघ्नत्वञ्च। राअ.२प। रा.नि.व १९।

**खलुरेपः** । पुं । मृगविशेषे । श.च. । [जटा. ।

**खलेधानी** । स्त्री । खले पशुबन्धनदारुणि ।

**खलेवाली** । स्त्री । खले गोबन्धनकाष्ठे । মেই কাঠ । हे.च. ।

**खल्लः** । पुं । चातकपक्षिणि । मे. । चर्मणि । থাল । त्रिका. । औषधमर्द्दनपात्रे । খল । क्ली । वाजिदन्तायस्य निम्नकपाले । "निम्नकपालश्च दन्तानां खल्लमित्यभिधीयते ।" अ.द.४ष. ।

**खल्लकी** । स्त्री । शर्करायां । খাঁড । वै.निघ.।

**खल्लिका** । स्त्री। पिष्टकादिभर्ज्जनपात्रे । श च ।

**खल्लि(ल्ली)टः** । त्रि। खलतौ । श.र.। त्रिका.।

**खल्ली** । स्त्री । हस्तादौ शिरामोटने । খাঁলধরা। सि यो.विषूची चि. । "खल्ली तु पादजङ्घोरुकरमूलावमोटनी।" सरलदेवदारौ। वै निघ.वा.व्या.चि.।

**खल्लीवर्द्धनः** । पुं । दन्तवेष्टजरोगविशेषे । मारुतेनाधिको दन्तो जायते तीव्रवेदनः । खल्लीवर्द्धनसंज्ञोऽसौ सञ्जाते रुक् प्रशाम्यति ॥ भा.म.४भ. मुखरो चि. । [निघ. ।

**खल्वटः** । पुं । कासरोगे । म खोक्ला । वै.

**खल्वाटः** । पुं । खलतौ । हे.च ।

**खल्लुका** । स्त्री । नाभिशङ्खे । र.सा.सं. ।

**खवल्ली** । स्त्री । आकाशवल्ल्याम् । रा.नि.व.३ ।

**खवारि** । क्ली । आन्तरिक्षोदके । रा नि व.१४।

**खवास्पः** । पुं । हिमे । हारा. । [व.१३ ।

**खशब्दाङ्कुरः** । पुं, क्ली । वैदूर्य्यमणौ । रा.नि.

**खशा** । स्त्री । मुरामांस्याम् । म मरवा । श.च.।

**खशेटः** । पुं । खलिशमत्स्ये । त्रिका. ।

**खश्वासः** । पुं । वायौ । त्रिका. ।

**खसः** । पुं । पामायाम् । খোস্ রোগ । वीरणमूले । वै.निघ.वा.व्या.चि. ।

**खसकन्दः** । पुं । वाराहीकन्दे । वै.निघ. । चोरीशवृक्षे । কৌবীশ গাছ । प.मु. । चोरकक्षुकोवृक्षे । र.मा. । [ड़ाव । र.मा ।

**खसगन्धः** । पुं । चोरकाख्यकाम् । कौरक-

**खसतिलः** । पुं । खसखसे । পোস্তা গাছ । गुणाः—"तिलभेदः खसतिलः कासश्वासहरः स्मृतः । स्वादु खसफलोद्भूतं वल्कलं शीतलं लघु । ग्राहि तिक्तकषायञ्च वातश्लेष्मकफासहृत् । धातूनां शोषकं रुच्यं मदकृद्वाग्विवर्द्धनम् । मुहुर्मोहकरं रुच्यं सेवनात्पुंस्त्वनाशनम् ॥" भा. ।

**खसफलम्** । क्ली । खसखसे । পোস্ত, ঢেঁড়ি। वै.निघ. । [टामांसी । रा.नि.व.१२ ।

**खसम्भवा** । स्त्री । आकाशमांस्याम् । सूक्ष्म ज-

**खसर्पणवटी** । स्त्री । ग्रहण्यधिकारे । See खर्परवटिका ।

**खसवीजम्** । क्ली । खसखसे । পোস্তদানা । हिं खाखसदाना । गुणाः—बल्यं वृष्यं गुरु कफकरं वातशमनञ्च । भा. ।

**खसखसः** । पुं । स्वनामा मालवदेशे प्रसिद्धः ।

मध्यिमे देशे सा छोहारेति कीर्त्त्यते ॥" सा. गुणाः —"खर्ज्जूरीत्रितयं शीतं मधुरं रसपाकयोः । स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु ॥ तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदं । कोष्ठमारुतजिद्बल्यं वान्तिवातकफापहम् । ज्वरातिसारक्षुत्तृष्णाकास-श्वासनिवारकम् । मदमूर्च्छामरुत्पित्तमद्योद्भूतग दान्तकृत् । खर्ज्जूरीतरुतोयन्तु मदपित्तकरं भवेत् । वातश्लेष्महरं रुच्य दीपनं बलशुक्रकृत् ॥" भा. । मस्तिष्कगुणाः —स्वादु तिक्त. कषाय मूत्ररोगघ्न बलप्राणशुक्रवृद्धिकरञ्च । राज । "अपक्व खर्ज्जूर फलं त्रिदोषशमनं मतम् । पक्वमेव हितं शेषं त्रि दोषशमन परम् ॥" अत्रि १७अ । मधुरं शीतलं गुरु क्षयाभिघातदाहवातपित्तेषु हितं हृद्यं शुक्र करञ्च । च सू २७अ । कृष्णसुमल्याम् । वै निघ. ।

**खर्पतुत्थम्** । क्ली । खर्परीतुत्थे । वै.निघ. ।

**खर्परम्** । क्ली। स्वनामख्यातोपधातुविशेषे । खा-पर । हि खापरिया । म कललापरी । प सु. । तस्य शोधनं यथा—"पुष्पाणां रक्तपीतानां रसै. पिष्टेश्च भावयेत् । नरमूत्रैश्च गोमूत्रै यवाम्लेन स सैन्धवै. । सप्ताह त्रिदिन वापि पश्चाच्छुध्यति ख र्परम् । सम्मारण वङ्गवत् ज्ञेयम् । खर्पर पारदे नैव बालुकायन्त्रगं पचेत् । चूर्णयित्वा दिनं यावत् शोभनं भस्म जायते ।" अथवा पत्तलीकृतं खर्परं लवणाम्लनिधाय पचेत् ॥ मतान्तरे गुणा.—ख र्परं कटु क्षारं कषायं वामक लघु लेखन भेदनं शीतलं चक्षुष्यं रक्तपित्तहर विषाश्मरीकुष्ठकण्डू घ्नञ्च । भा । पुं । स्थानभेदे । खापरा । प.सु । स्वभाकारापूपपचनादिपात्रे । তাওয়া, চাটু । बा.टी.हेमा । कपालास्थनि । মাথার খুলি । रा नि व.१८ । नेत्राञ्जनभेदे । छत्रे । विका. ।

**खर्परवटिका** । स्त्री । यकृदधिकारे । "पक्वे ष्टका हरिद्राभ्यामागारधूमकेन च । शोधित पार दञ्चैव कर्षार्द्धं तुलया धृतम् । भृङ्गराजरसै. शुद्ध-गन्धकं रससम्मितं । द्वाभ्यां कज्जलिकां कृत्वा भावये त्ततु भेषजं. । सिन्धुवारदलरसे मण्डूकपर्णिकार सै. (मधूकपुष्पजे रसे इति वा पाठः) । केशराजरसे चापि शोभाञ्जनरसे रसे । रसेऽपराजितायाश्च सो-मराजरसे तथा । रक्तचित्रकपत्रोत्थे रसे च परि भावितम् । रसमानप्रमानेन छायायां शोषयेद्भिष-क् ॥" वटी सर्षपाभा, अनु दधिमस्तु । ইষ্টক-চূর্ণ, হরিদ্রাচূর্ণ ও ঝুলের সহিত শুদ্ধ পারা ১ তো. ভীমরাজরসে শুদ্ধ গন্ধক ১ তো কজ্জলি করিবে। পরে নিশিন্দাপাতার রস, থুলকুড়ির রস, বা মৌলফুলের রস বা কাথ, কেশুরের রস, শিমে শাকের রস, অপরাজিতাপাতার রস সোমরাজকাথ এবং রক্তচিত্রকপত্ররস প্রত্যেকে ১ তোলা দ্বারা মাড়িয়া সর্ষপতুল্য বটী করিবে । रस.को । भैष. ।

**खर्परालः** । पुं । अश्वत्थविशेषे । मं लाखोर्पिंप्री । वै.निघ ।

**खर्परिका(री)तुत्थकम्** । क्ली । A sort of collyrium नेत्रप्रसाधनविशेषे । तुत्थाञ्जनै, कृत्रिमरसाञ्जने । गुणा. – कटु तिक्त चक्षुष्यं रसा यनं त्वग्दोषघ्न दीपनं बलपुष्टिकरञ्च । रा नि व. १३ । खर्परे । थापर । मं कलखापरी ।

**खर्परीयकम्** । क्ली । खर्परीतुत्थे । खर्परे । वै.निघ. ।

**खर्परीरसकम्** । क्ली । खर्परीतुत्थे । कृत्रिम रसाञ्जन । रा.नि.व १३ । खर्परे । वै निघ. ।

**खर्व्वः (र्व्वं.)** । पुं । कुब्जकपुष्पवृक्षे । रा.नि.व. १० । त्रि । ह्रस्वे । वामन ।

**खर्व्वशाखः** । त्रि । वामने । हे च. ।

**खर्व्वा** । स्त्री । नागबलायाम् । रा.नि.व ४ ।

**खर्व्वु(र्व्वू)रः** । पुं, क्ली । मदोनिष्पावे । रा.नि. व १६ ।

**खर्बु(र्बू)रा** । स्त्री । तरदीवृक्षे । रा.नि व.८

**खर्बूजम्** । क्ली । स्वनामकफलविशेषे । খরমুজ । गुणा.—"मूत्रलं बल्य कोष्ठशुद्धिकरं गुरु । स्निग्धं स्वादुतरं शीतं वृष्यं पित्तानिलापहम् । तेषु यदाम्लमधुर सक्षारञ्च रसाद्भवेत् । रक्तपित्तकरं तत् मूत्रकृच्छ्रकरम्परम् ॥" भा. ।

**खर्म्मम्** । क्ली । पट्टवस्त्रे । पौरुषे । मे. ।

**खलम्** । क्ली । कल्के । मे. । स्थलस्थाने । त्रिका ।

**खलः (कः)** । पुं । सूर्य्ये । धुस्तूरवृक्षे । रा.नि. व.१० । मालवे व्यञ्जनविशेषे । "आलुवार्त्ताकयुग्मं यदितिगुणः स खल इत्युच्यते । फलमूलैर्दलाद्यं

**खुड्कः** । पुं । गुल्फे । सु नि १४.१

**खुड्वातः** । पुं । वायुरोगभेदे । वै निघ १

**खुड्डाकः** । त्रि । क्षुद्रे । ह्रस्वे । कनिष्ठे । च. ।

**खुड्डाकपद्मकतैलम्** । क्ली। वातरक्ते तैलम्। यथा.—"पद्मकोशीरयष्ट्याह्वरजनीक्वाथसाधितम् । स्यात्पिष्टैः सर्ज्जमञ्जिष्ठावीराकाकोलिचन्दनैः । खुड्डाकपद्मकमिदं तैलं वातासदाहनुत् ॥" रस.र.। च.चि.२९श ।

**खु(क्षु)रः** । पुं । शफे । पशोदिव खुर । श्मश्रुच्छेदनास्त्रे । क्षुर । श.र.। कोलदले । कुलपाता। नखीनामगन्धद्रव्ये । मे.। खट्वादिपादुके । खुरो। धरणि.।

**खु(क्षु)रकः** । पुं । तिलवृक्षे । श च । कोकिलाक्षवृक्षे । कुलेखाडा । क्ली । चतुष्पथवृक्षे । वै. निघ.२भ.जीर्णज्व.चि. । [कयुक्त । श्रम. ।

**खुरणसः** । त्रि । चिपिटनासिके । চেপ্টা না

**खुरसानी** । स्त्री । खोरासनीयमान्याम् । वै. निघ.। पुं । खोरसानदेशीयोत्तमाश्वे । "ताजिका. खुरसानाख दुषाराश्चोत्तमा हयाः ।" नकुल ।

**खुराकः** । पुं । यवनाले । जनार । पशौ । वै निघ. । [তেজ ভাঁড । उपधाने । मे. ।

**खुरालिकः** । पु । नापितभण्डाम् । नापि

**खुरासनी-वचा** । स्त्री । तद्देशीयवचायाम् । শ্বেত বচ । मं श्वेतवेखण्ड । वै निघ. ।

**खुरासानी-यमानी** । स्त्री । यमानीभेदे ख रसाय इति महाराष्ट्रे । गुणा.—"खुरासानी यमानी तु कटुः रुचा च पाचिका । ग्राहिकोष्णा मादिका च गुर्व्वी वातकरी मता । कफनाशकरी प्रोक्ता गुणास्त्वन्ये यमानिवत् ॥" वै निघ. ।

**खुरिकापत्रः** । पुं । वेनीनामपत्रशाके । मं वेनी । वै निघ । [श. ।

**खुलकः** । पुं । जङ्घापादयो सन्धौ । सु.चि.१८

**खुल(ल्ल)मा** । स्त्री । नाभिगर्ते । र.सा.सं. ।

**खुल्लम्** । क्ली । नखीनामगन्धद्रव्ये । श.च. ।

**खुल्लकः** । त्रि । खले । च टी ।

**खेगमनः** । पुं । कालकण्ठपक्षिणि । श मा. ।

**खेचरः** । पुं । पारदे । पक्षिणि । क्ली । खेचराञ्ने । वै.निघ. । कासीसे । হিরেকস । र सा स.।

**खेचरा** । स्त्री । आकाशवल्याम् । वै.निघ. ।

**खेचराञ्जनम्** । क्ली । कासीसे । হিরেকস । वै.निघ । [भावराज. ।

**खेचरान्नम्** । क्ली । खेचरिकायाम् । খিচুড়ী।

**खेटः** । पुं। कफे । मे.। अश्वे । क्ली । तृणे । श.र.।

**खेदिनी** । स्त्री । अग्नपर्णीवृक्षे । श.च ।

**खेला** । स्त्री । खनामख्यातवृक्षे । কেনা । गुणा.—मधुरा शीता सन्यदा रुचिकृद्वा रा नि.व ४।

**खेसरः** । पुं। अश्वतरे । খচ্চোর । रा.नि.व १९।

**खोङ्गा(ङ्गा)हः** । पुं। श्वेतपिङ्गलवर्णाश्वे। है चं.।

**खोटः (कं)** । पुं, क्ली । यमक, फुट इति ख्याते रससारणद्रव्ये । तल्लक्षणं यथा—"खोटकं स्वर्णसंतुल्यं समावर्त्तं च कारयेत् । कुक्कुटाण्डनिभं सूतं पट्टे भेदि भवेद्यदा । आवर्त्तितं पुनस्तद्वत् खोटवद्रसाकृति । अथवं कठिनं श्वेतं शिखिना मृदुना पचेत् । श्वेतपीतगुरुत्वच मृदुसिक्थकसन्निभम् । अग्निमध्ये यदा तिष्ठेत्खोटबद्धस्य लक्षणम् । नानावर्णस्तथा स्वच्छो धनी योऽग्नौ जलौकवत् । वर्द्धते सूतको यत्र जलौकाबद्धलक्षणम् ॥"

**खोटिः (टी)** । पु, स्त्री । कन्दुरुखोटौ । च द. वा.व्या.चि. । पालङ्कीवृक्षे । श.च. ।

**खोड़ः (रः) (लः)** । त्रि । खञ्जे । अम ।

**खोरकः** । पुं । गर्दभज्वरे । गजवै. ।

**खोलकः** । पुं । वल्मीके । উইঢিপি । शिरस्त्राणे । পাগড়ী । त्रिका.। पूगकोषे । গুপারির খোলা । मे. ।

**खोलिः** । स्त्री । तूणे । श मा ।

शाकुनी, পোস্তদানার গাছ। गुणा —पाके मधुर कान्तिवीर्य्यबलप्रदश्च। रा नि.व ४।

खखसरसः (सारः) (क्षीर)। पुं,क्ली। अहिफेने। वै.निघ.। [मणौ। वै निघ.।

खस्फटिकः। पु। चन्द्रकान्तमणौ। सूर्यकान्त

खाखस. (तिल)। पु। खसतिले। शा कुनी, পোস্ত গাছ। See खसतिल।

खाखसतिलोद्भूतम्। क्ली। खखसे। পো স্ত। वै निघ.।

खाजिक.। पु। लाजायाम्। टैथ। हारा.।

खाटि। स्त्री। किणे। मे।

खाड़(षड)वः। पु। मधुराम्ललवणनानासुगन्धिद्रव्यकृतखाद्यविशेषे। "खाडवा फलमधुराम्लवणा सुगन्धिद्रव्यजा नानाविधा" इति। शिवदास। दीपालरखर्ज्जूरे। वै निघ।

खात(च)म्। क्ली। पुष्करिण्याम्। अम.।

खादनः। पु। दन्ते। द्वे च। क्ली। आहारे। वै निघ.। [लभोजनपात्रे। नक्.१८भ।

खादनकोष्ठकम्। क्ली। अथस हिरलीव

खादिरः। पु। विटखदिरे। खदिरसारे। रा.नि व १८।

खादिरसारः। पु। खदिरे। थयेर। गुणा —कटुत्व तिक्तत्व उष्णत्व कफवातव्रणकण्ठामयनाशित्वं रुचिकरत्व दीपनत्वं। रा नि व.८।

खाद्यम्। क्ली। चतुर्विधाहारान्यतमाहारे। থাবার জিনিষ। रा नि.व २०।

खाद्यपत्री। स्त्री। खदिरवृक्षे। रा नि व ८।

खानिः। स्त्री। खनौ। द्वे च.।

खानिकम्। क्ली। कुड्यच्छेदे। দেওয়ালের গর্ত। त्रिका.। रत्ने। वै निघ।

खानिष्कम्। क्ली। अतिसूक्ष्मकार्से। वै निघ.।

खानोदकः। पुं। नारिकेले। त्रिका.।

खापगा। स्त्री। गङ्गायाम्। द्वे च।

खारः। पु। खारीपरिमाणे।

खारिः (री)। स्त्री। परिमाणविशेषे। स च द्रोणचतुष्टयपरिमाणे, शताधिकाष्टाविंशतिशरावपरिमाणे वा (१२८ श)। "चतुराढको भवेद्द्रोण खारी द्रोणचतुष्टयम्।" वै निघ.।

खारिकः। पु, क्ली। पुष्करतीर्थसमीपे प्रसिद्धे महापारेवतफले वृक्षे च। বড় খেজুর। रा.नि. व.११।

खार्ज्जूरसुरा। स्त्री। खर्ज्जूरधातकीपुष्पकृतसुराविशेषे। वै निघ। खर्ज्जूरमद्ये। খেজুররসের মদ। गुणा —"मार्द्वीकाल्पान्तर किंचित् खार्ज्जूरं वातकोपनं। तद्वेव विशदं रुच्यङ्कफघ्नङ्कर्षणं लघु। कषायं मधुरं हृद्यं सुगन्धीन्द्रियबोधनम्॥" सु स ४६अ.। पिण्डखर्ज्जूरविकृतिभव खार्ज्जूरसुरेति। मतान्तरम्। "तालसिन्दीलखर्ज्जूरसूर्हान्तुक्रिय स स्मृते। यद्रस तत्तदाख्य हि विज्ञेय तत्परायणे।" तीड ड्डयीनक।

खालित्यम्। क्ली। कपालरोगे। টাকরোগ लक्षण यथा—'तेजोऽनिलाद्यै सह केशभूमिं दग्ध्वा कुर्य्यात् खलतिन्नरस्य। किंचित्तु दग्ध्वा लितानि कुर्य्याद्धरिप्रलुप्तञ्च शिरोरुहाणां॥" च

खाश्मरी। स्त्री। गाम्भारीवृक्षे। वै निघ.।

खिखिः। पु। शृगालविशेषे। থ্যাকশিয়ালী म कोष। मे।

खिङ्खि(ङ्खि)रः। पुं। खिखौ। থ্যাকশিয়ালী। मे। खाविकावके। गन्धद्रव्यविशेषे, ह लवाला। त्रिक.द्वे च।

खिचा। स्त्री। खेचरिकायां। वै निघ.।

खिदिरः। पु। चन्द्रे। वै निघ।

खिद्रः। पुं। रोगे। उणा.। [मिदरः

खिरहिट्टी। पु। महासमङ्गानामक्षुपे। रा

खिल.। त्रि। अप्रहते (भूम्यादौ)। रा नि द २

खिलाहः। पुं। पाण्डुकेशरपुच्छे कपिलवर्णे। "खिलाह कपिलो वाजी पाण्डुकेसरवाल धि।" ल द १४.। [नेतपीतक।" ल.द १४.।

खुङ्गाहः। पु। नेतपीतवर्णाश्वे। "खुङ्गा

खुञ्ज(ञ्जा)कः। पु। देवताडवृक्षे। टका.।

खुड़ः। पु। वातरक्तरोगे। वै.निघ.।

**गजकर्णा (र्णी)** । स्त्री । करिकर्णरत्वचे कन्दशाकविशेषे । हि हस्तिकर्णा । मं वहस्त्रीकन्द । गुणा.—तिक्ता उष्णा वातकफहरा पाके स्वादु शीतज्वरघ्नी पाण्डुशोथक्रमिप्लीहगुल्मानाहोदरघ्नी वमशूलवत् ग्रहण्यर्शोघ्नी च । भा.पू १भ.शाकव.। आखुकर्णीलतायाम् । रा नि.व ३।

**गजकर्णिका** । स्त्री । कर्कटिकायाम् । काँकुड । वै निघ. । इन्द्रवारुणीलतायाम् । राखालशशा । रा.नि.व.३ ।

**गजकुसुमः** । पुं, क्ली । नागकेशरवृचे तत्पुष्पे च । नागेश्वर गाछ वा ताहार फूल । मैषसुन्दरी चि.भरिसेश.गुड़ी ।

**गजकृष्णा** । स्त्री । गजपिप्पल्याम् । भा वृहतै लि । "गजकृष्णा कटुर्वातश्लेष्मनुदग्निवर्द्धनी । उष्णा निहन्त्यतीसार श्वासकण्ठामयक्रिमीन् ॥" भा. ।

**गजकेश(स)र.** । पु । नागकेशरे । नागेश्वर । सि यो वर्द्दि चि एलादिगुडी । "लवङ्गगजकेशर कोलमज्जा ।"

**गजकेश(स)रीरसः** । पु । आमज्वरादौ रस । "शुद्धसूत विषञ्चैव व्योष त्रिफलमेव च । जयपालसमङ्कृत्वा भृङ्गतोयेन मर्दयेत् ॥" भा. १ ६. । रस क्री ।

**गजचिर्भ(र्भि)ट (टा)** । स्त्री । इन्द्रवारुण्याम् । राखालशशा, गोवक्कलाड् । च सु । रा नि व ३। च द गुल्म चि । (ट.) गोडुम्बायाम् । गोमक । चिका. ।

**गजजातिः** । स्त्री । हस्तिजातौ । सा त्रिधा भद्र मन्द्र मृगश्चेति । रा नि व.१८ ।

**गजदन्तः** । पु । करिदन्ते । हातिर दाँत । वै निघ. । एतन्मसी श्वित्रघ्नी ।

**गजदन्तफला** । स्त्री । डङ्गरीनामफलशाकलतायाम् । रा नि व.७ ।

**गजदन्तवत्** । क्ली । मूलके । वै.निघ ।

**गजदन्तिका** । स्त्री । हस्तिदन्तायाम् । वा. उ ३९च. [अश्व । हि बालियापिपल । भा ।

**गजद्रुमः (पादपः)** । पुं । नन्दीवृचे । गया

**गजपिप्पली** । स्त्री । (Scindapsus officinalis.) Syn Pothos officinalis. स्वनामख्यातवृचे । गजपिपुल । हिं गजपिप्पल । सा चविकाया फलमिति केचित् । "चविकाया फलमाद्यैः कथिता गजपिप्पली ।" इति । गुणा — दीपनी पाचनी उष्णलाद्रसशोधनी ग्राहिणी कटू ष्णा रुचा स्तन्यविवर्द्धिनी च । रा नि व.६ । तत् फल विष्टम्भि दुर्जर रुच शीतल वातकोपन विपाके मधुर रक्तपित्तघ्न । सु सू.४६अ. ।

**गजपुटम्** । क्ली । औषधपुटनार्थं सपादहस्तपरिमितनिम्नायतहस्तखाते । उच्च १० हात, आयत १० हात । "सपादहस्तमानेन कुण्डे निम्ने तथायते । वनोपलसहस्रेण पूर्णे मध्ये विधारयेत् । पुटनद्रव्यसयुक्ताङ्कोष्ठिका मुद्रितां मुखे । अर्द्धानि करण्डानि अर्द्धानुपरि नि चिपेत् । एतद्गजपुटमोक्त ख्यात सर्वपुटोत्तमम् ॥" भा । "गजप्रमाणगम्भीरं शुषिर क्रमशस्तत । वितस्तिवितयमुख विवितस्तितल तथा । एव विधाय यत्नेन विशिरःस्कारोरवत् । तस्य पादत्रय सम्यक् पूरयित्वा वनोपलैः । भैषज्यकोष्ठिका तत्र स्थापयित्वा तत. पुन । वनोपलैः सहस्राद्यैस्तद्गजपुट ख्यतम् ॥" गभीर २ हात वा ३५० हात, ७ वितस्त उर्ना, २ वितस्त मुखेर फाँड गर्त्त । अपि । हस्तप्रमाणगर्त्ते यः पुट स तु गजाह्वय । इति प्रयोगा । [हि.च. ।

**गजप्रिया** । स्त्री । शल्लकीवृचे । शालविशेष ।

**गजबला** । स्त्री । गोरच्याम् । गोरक्षचाकुलिया । "नयति गजबलामूल ।" च द कास चि ।

**गजभचः (च्या:) (का.)** । पु । तालवृचे । अश्वत्थवृचे । रा नि व ८।११ ।

**गजभचा (च्या)** । स्त्री । The gum olibanum tree. शल्लकीवृचे । प सु ।

**गजमदः** । पु । हस्तिमदे । वै निघ ।

**गजमदहरणी** । स्त्री । शिवलिङ्गिनीलतायाम् । वै निघ । [रा । म.मा ।

**गजमाचलः (मोटन.)** । पुं । सिंहे । रा

**गजमुक्ता** । स्त्री । करिगण्डस्थमुक्तायाम् । वै. निघ । [नाद । भैष कुष्ठ चि । सु चि ९अ ।

**गजल(ले)ण्डः** । पु । हस्तिविष्ठायां । हातीर

# ग

**गगनम्** । क्ली । अभ्रधातौ । अभ्र । मेघे । रा नि व २३ कनकसुन्दररसे । [See अभ्रम् ।

**गगनमारकगण.** । पु । अभ्रमारकद्रव्येषु ।

**गगनसुन्दरः** । पु । यद्दग्धो रस । रस १ तो गन्धक २ तो अभ्र ८ तो. लशुन वटी कार्यो । मा २—४ र । र चि. । अन्य ज्वरातिसारे—टङ्कणहिङ्गुलगन्धकाभ्र प्र समम् । क्षीरि क्षीरसैन (थकई) ३ भावना । भैष ।

**गगनस्पर्शः** । पु । वायौ । वै निघ ।

* **गगनादिलौहम्** । क्ली । सोमरोगे । "गगन त्रिफला लौह कुञ्जङ्कटुकत्रयम् । पारदो गन्धक श्चैव विषटङ्कणसर्जिका । लवङ्ग तेजपत्रञ्च वङ्ग जीरकयुग्मक । एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् । तदर्द्धं चित्रक चूर्ण ॥" अभ्र, त्रिफला, लौह, कुडचि, त्रिकटु, पारा, गन्धक, विष, सोहागार खै, साजिमाटी, गुडत्वक्, एला, तेजपत्र, बङ्ग, जीरा, कृष्णजीरा प्रत्योके समभाग चूर्ण । सर्व्वचूर्णार्द्ध चित्रकमूल चूर्ण । र सा स. ।

**गगनादिवटी** । स्त्री । वातरोगे । अभ्रकपारदगन्धकतामकमुण्डलौहतीक्ष्णलौहस्वर्णमाक्षिकएषां प्र समभागं यष्टीवासकद्राक्षाभूकुष्माण्डक्वाथेन मर्द्दयेत् मा २ र. अभ्र,पारा गन्धक, तामा, मुण्ड ओ तीक्ष्णलौह स्वर्णमाक्षिक प्रत्योके समभाग , यष्टिमधुर क्वाथ, वासाक्वाथ, किस्मिसेर क्वाथ ओ भूमिकुष्माण्डक्वाथे मर्द्दन । मात्रा २वटि। अनुपान घृत ओ मधु । र सा स ।

**गगनाम्बु (नोदकम्)** । क्ली । नीहारजले । आकाशवारिणि । गुणा —त्रिदोषघ्न बल्य रसायनं मेध्य रचोघ्न शीतलम् आह्लादक ज्वरदाहविषघ्न । सु सू ४५ष ।

**गङ्गका (ङ्गा, का)** । स्त्री । स्वनामख्यातधान्यम् । तन्नमगुणा —शीतं स्वक स्वादु चतिरोधक पथ्य पाचक पावन कफामोदघ्न दीपन प्र श्माकरघ । रा नि व १४ । सस्यानुकायां । वै निघ ।

**गङ्गाचिल्ली** । स्त्री । चिल्लविशेषे । गां चीन छारा । [चिका । See चिङ्ग ।

**गङ्गाटेयः** । पुं । चिङ्गटमत्स्ये । चिंडि माछ ।

**गङ्गाधरक्वाथः** । पु । अतीसारे कषटायपर नामकषाये । "कशटदाडिमजम्बूशृङ्गाटकपत्रवर्हिष । जलधरनागरसहित गङ्गामपि वेगवाहिनीं रुन्ध्यात् ॥" केंचड़ा, दाड़िम, जाम, शिङाडा (इहादेर) पाता, बाला, मुता, शुंट प्रत्योके २२॥० र । आ ।

**गङ्गाधरचूर्णम् (वृहत्)** । क्ली । अतीसारे औषधम् । मुस्ताशोणाकशुण्ठीधातकीपुष्पलोध्र बालकबिल्वशलाटुमोचरसपाठेन्द्रयवकुटजलमायाखिवराहक्रान्तातिविषाणा प्र. चूर्ण समभागम् । मुता, शोणा, शुंट, धाइफूल, लोध, बाला, बेलशुंटा, मोचरस, आक्नादि, इन्द्रयव, कुडचिछाल, आम्रास्थि,-बराहक्रान्ता आतइच प्रत्योके चूर्ण समभाग । अन्यथा—मुस्तेन्द्रयवमोचरसबिल्वशलाटुधातकीलोध्राणि प्र सम भागानि । गुडेन सेव्यम् । मुता, इन्द्रयव, मोचरस, बेलशुंटा, धाइफूल, लोधचूर्ण प्रत्योके समभाग । अपर यथा—मोचरसमुस्तकशुण्ठीपाठाशोणाकधातकीपुष्पाणि प्र समभागानि । दधिमस्तुना सेव्यम् । मोचरस, मुता, शुंट, आक्नादि, शोणा, धाइफुलचूर्ण प्रत्योके समभाग । आ म,१म. ।

**गङ्गापत्री** । स्त्री । स्वनामख्यातपत्रशाकविशेषे । म गङ्गावती । स्त वहंगधारी । गुणा. —कटु उष्णा वातघ्नी ग्रहदीपनी ध । रा नि व.१० । र सा स अभ्रमारणे । सस्यानुकायां । वै निघ ।

**गच्छः** । पु । वृच्चे । हे.च. ।

**गज.** । पु । हस्तिनि । अथ कुञ्जरशालाद्दुष । नागकेशरवृच्चे । नागेश्वर गाछ । वै निघ. । गज पिप्पल्याम् । पचतिक्तघृतम् । गजपुटे । प्रयोगा ।

**गजकणा** । स्त्री । गजपिप्पल्याम् । र सा । सा को वाइशालगुडे । [रा नि व ७ ।

**गजकन्द** । पु । हस्तिकन्दनामकमहाकन्दभेदे ।

न । र मा । अर्कवृक्षे । वै निघ । रक्तार्के । रा. नि.व १० ।

**गणवतीसुतः** । पुं । दिवोदासे । "धन्वन्तरि र्दिवोदास काशिराज सुधीद्भवः । पालिकाख्या गणवती करेणुरुचिरासुत ।" पालकाप्ये । त्रिका.।

**गणहासः (क.)** । पु । चोरनामकगन्धद्रव्ये । चोरा इति पश्चिमदेशे । গেঁঠেলা । मं गटोला । रा नि व १२ । चण्डालकन्दे । अजमोदायाम् । त्रा कूनी । वै निघ. ।

**गणिका** । स्त्री । यूथिकापुष्पवृक्षे । যুঁইফুলের গাছ । र मा. । श्वेतयूथिकायाम् । শ্বেত যুঁই গাছ । रा नि व १० । पीतयूथिकायां । वै.निघ । गणिकारिकायाम् । গণিরি । श र । हस्तिन्यां । अटा ।

**गणिकारिका** । स्त्री । (Premna serratifolia. Syn. P. Spinosa.) चुद्राग्निमन्थे । ছোট গণিরি । नि चिरिनैल्लिचेट्टु । गुणा.—क टूष्णतिक्तवातकफशोफश्लेष्माग्निमान्द्यार्शोमलविष्टम्भ श्रमहरी । रा नि व ८ । See अग्निमन्थ । गणि कारीपुष्पवृक्षे । वै निघ. ।

**गणिकारी** । स्त्री । पुष्पवृक्षविशेषे, कोङ्कण देशे स्वनाम्ना प्रसिद्धे । বাসন্তীফুলের গাছ । म गणेरी । गुणा —अतिसुरभि त्रिदोषघ्नी दाह शोषहरा कामोद्दीपनी च । रा नि व.१० । गणि कारिकायाम् ।

**गणेरुः** । पु । कर्णिकारवृक्षे । কর্ণিকাফুলের গাছ । पारिभद्रवृक्षे । वै.निघ. । स्त्री । हस्तिन्या । मे । चि । वै निघ ।

**गणेरुकः (का)** । पुं स्त्री । गणिकारिपुष्पवृ

**गणेशः (कुसुम.)** । पु । रक्तकरवीरवृक्षे । रा नि व १० । [मूलानि ।" अर्कप्रकाश ।

**गणेशप्रियः** । पु । रक्तकरवीरे । "गणेशप्रिय

**गणेशभूषणम्** । क्ली । सिन्दूरे । रा नि व.१३।

**गणोत्साहः** । पु । गण्डके । গণ্ডার । त्रिका।

**गण्डः (का.)** । पुं । खड्गिनि । গণ্ডার । मे । कपोलदेशे । গাল । रा.नि.व १८ । रोगविशेषे । "निबद्ध श्वयथुर्यस्य मुष्कवल्लम्बते गले । महान्वा यदि वा ह्रस्वः गण्डमिति निर्दिशेत् ॥" सु नि, ११अ । करिकपोले । अम । ग्रन्थौ । चिह्ने । पिटके । मे । [१९अ. ।

**गण्डकर्णः** । पुं । बाह्यदीर्घैकपालिकर्णे । सु सू.

**गण्डकारी** । स्त्री । वराहक्रान्तायाम् । वरा-क्रान्ता । श्वेतलज्जालुकायाम् । लज्जावती । र. मा. । खदिरीवृक्षे । अम । श.च. ।

**गण्डकाली** । स्त्री । खदिरीवृक्षे । अम. । का कजङ्घाया । কেয়োঠেঙা । शल्लकीवृक्षे । वै निघ ।

**गण्डकी** । स्त्री । इक्षुदण्डे । আখ । नकुल. १२अ. ।

**गण्डकुसुमम्** । क्ली । गजमदे । हारा. ।

**गण्डगात्रम्** । क्ली । (Annona squamosa.) आतापिफले । আতা, নোনা । हि शरी फा । म शीताफल । गुणा.—'गण्डगात्र हिम ह्य वातपित्तनिसूदन । श्लेष्मल तर्पणमन वान्तुत्क्ले शनिपीडनम् ॥" अभि. । श.च ।

**गण्डगोपालिका** । स्त्री । आमवाटिकास्थ कीटविशेषे । আম্‌পোকা। हि गण्डगुयारि। भा ।

**गण्डदूर्वा** । स्त्री । जलोपरिजायमानदूर्वावि शेषे । दूर्बाविशेष গেঁটে দূর্বা । हि गाण्डर्दुविपाच । म गण्डरदूर्वा गाठीहरियाली । क मौनगसे । गुणा —मधुरा शीतला वातपित्तज्वर घ्नी दन्दोषघ्नी भ्रमतृष्णाश्रमघ्नी च । रा नि.व ८ । 'गण्डदूर्वा हिमा लोहद्राविणी ग्राहिणी लघु । तिक्ता कषाया मधुरा वातकृत्कटुपाकिनी । दाह तृषा बलासास्रकुष्ठपित्तज्वरापहा ॥" भा. ।

**गण्डफलकः** । पु । प्रशस्तगण्डस्थले । প্রশস্ত গাল । वै निघ. ।

**गण्डमाला** । स्त्री । Inflamation of the glands of the necks &c. स्वनामख्यात गलरोगविशेषे । গণ্ডমালা । तस्य सम्प्राप्तिरूपे— "कर्कन्धुकोलामलकप्रमाणै कक्षांसमन्यागलवङ्क्षणे षु । मेद कफाभ्यां चिरमन्दपाकै स्याद्गण्डमाला बहुभिश्च गण्डै ॥" मा.नि । "मेदस्था कण्ठमन्या चक्षावङ्क्षणगा मला । सवर्णान् कठिनान् स्नि ग्धान्वार्ताकामलकाकृतीन् । अवगाढान् बहून् ग ण्डान् चिरपाकांश्च कुर्वते । पच्यन्तेऽन्ये जस्रन्ये स्रवन्त्यन्येऽतिकण्डुरा. । नश्यन्त्यन्ये भवन्त्यन्ये दीर्घ

**गजवल्लभा** । स्त्री । गिरिकदलीवृत्ते । बुनो कला । शल्लकीवृक्षे । रा नि.व.११ ।

**गजवाजिप्रिया** । स्त्री । भूमिकुष्माण्डे । भुँइकुमड़ा । वै.निघ. । [चिकित्साशास्त्रे । चर. ।

**गजवैद्यकम्** । क्ली । पालकाप्य(व्य)कृतगज

**गजाख्यः** । पु । चक्रमर्दवृपे । चाकन्दा गाछ । रा नि व ४ ।

**गजाण्डम्** । क्ली । पिण्डमूलके । रा नि.व.७ ।

**गजादनः** । पुं । अश्वत्थवृत्ते । र मा ।

**गजादिनामा** । स्त्री । गजपिप्पल्याम् । "गजादिनामाकरहाटकुष्ठे ।" सु.चि १८श. ।

**गजारिः** । पु । गजमादनशल्लकीवृत्ते । 'गजारिस्तरुसिंहयो ।" हडडचन्द्र ।

**गजाशनः** । पु । कामलकन्दे । वै निघ. । अश्वत्थवृत्ते । मद.व.५ । शालवृत्ते । र.मा. ।

**गजाशना** । स्त्री । भङ्गायाम् । भाङ, सिद्धि । श च । शल्लकीवृत्ते । पद्ममूले । र मा । शणवृत्ते । वै निघ । [च.द.अर्श चि बहुशालगुड़े ।

**गजाह्वः** । पुं, क्ली । नागकेशरवृत्ते तत्पुष्पे च ।

**गजाह्वया** । स्त्री । यूथिकापुष्पे । श्वेत यूँई । रा.नि.व १० । गजपिप्पल्याम् । भा.पू.१भ. ।

**गजाह्वा** । स्त्री । गजपिप्पल्याम् । "गजाह्वा व्याधिघातका ।" भा पू.१भ ।

**गजेष्टा** । स्त्री । भूमिकुष्माण्डे । रा नि व.७ ।

**गजोपकुल्या** । स्त्री । गजपिप्पल्याम् । वै.निघ. २भ यहणी.चि. । भैष कुष्ठचि. । [निघ. ।

**गजोपमः** । पु । कुमार्यां । घृतकुमारी । वै.

**गजोषणा** । स्त्री । गजपिप्पल्यां । रा.नि व.५।

**गञ्जा (ञ्ञा) (ञ्जिका)** । स्त्री । मद्यभाण्डे । श र. । मदिरागृहे । अम. । खनौ । मे. । गाँजा इति प्रसिद्धे वणिग्द्रव्ये । गुञ्जायाम् । वै निघ ।

**गञ्जायिका** । स्त्री । गञ्जाशने । सिद्धि, भाङ ।

**गठो(ड्डो)त्थम्** । क्ली । साम्भरापरपर्य्याये लवणे । साम्भर लवण । रा नि व ६ ।

**गड. (क)** । पु । मत्स्यभेदे । गड़ुई माछ । मे. । गुणा —मधुरः स्त्रत कषाय शीत लघुश्च राज ३प. । क्ली । साम्भरलवणे । रा.नि व.६ ।

**गड़देशजम्** । क्ली । साम्भरलवणे । रा नि.व ६।

**गड़लवणम्** । क्ली । साम्भरदेशजलवणे । साम्भर लवण । गुणा —लवण ईषदम्ल मलघ्नम् उष्ण दीपन कफवातार्शोघ्न कोष्ठशोधनञ्च । रा.नि व ६।

**गड़ाख्य(ड्लवण)म्** । क्ली । साम्भरलवणे । रा.नि.व.६ । [१८।

**गडिः** । पुं । तरुणवृषे । युवा षाँड । रा नि व.

**गडिशः** । पु । तन्नामकमत्स्यविशेषे । गुणा —गडिशो मधुरो ग्राही बल्यो वह्निप्रदो गुरु । राज ३प. ।

**गडुः (डूः)** । पु । इष्टमय्यां । कुँज । रा.नि. व.२० । गलगण्डे । पृष्ठगुडे, स च घाटामस्तकयोर्मध्ये मांसवृद्धि । अम. । शल्यास्त्रे । श र । किञ्चुलुके । त्रिका.। मन्याशम्बरीगे । वै निघ । त्रि। कुब्जे । मे. ।

**गडुरः (लः)** । त्रि । कुब्जे । कुँजो । श.र. ।

**गडू(ण्डू)पदः** । पु । किञ्चुलुके । केँचो । मदाणो । अम. । [शर्करायाम् । वै निघ ।

**गड़ोलः** । पुं । गुडे । उणा. । ग्रासे । हेच ।

**गड्डु(ड्डू)क.** । पु । सौवर्णभृङ्गारे । सोनार गाडू । श र ।

**गद्या(द्या)ण(ल)कम्** । क्ली । ४८ अथवा ६४ रक्तिकमाने । लीलावती । वैद्यकम् । आष्पट्के, शताधिकद्विनवतिरक्तिकाम् वा । २ तोला । "गद्याणोमाषकै र्दशभि. । त्रिभि र्माषै र्भवेत्तोला पश्चिमैर्माषक विदु ।" सौरनान्द. ।

**गणः** । पु । अजमोदायाम् । रांधुनी । मं कि रमाणौकोला । वै.निघ । चोरनामगन्धद्रव्ये । मे ।

**गणकर्णिका** । स्त्री । इन्द्रवारुण्याम् । रा.नि व १।

**गणपीठकम्** । क्ली । वक्षसि । श.च. ।

**गणरूपः (कः)** । पु । अर्कवृत्ते । आकन्द गाछ । अम. । श्वेतार्कवृत्ते । र.मा । मन्दारार्के । दुकार । रा नि.व १० । See राजार्कः ।

**गणरूपी (न्)** । पु । श्वेतार्के । श्वेत आर्क-

**गतार्त्तवा** । स्त्री । निवृत्तरजस्कायां वृद्धायां स्त्रियाम् । रा.नि.व.१८ ।

**गतिः (कः)** । स्त्री, पुं । नाडीभेदे । नाली । नाडीव्रणे । मे. । अश्वस्य गतिविशेषे । ঘোড়ার চাল, কদম । प्र. । तद्यथा—"सङ्कीर्णा विकटभ्रष्टा वक्रा सौष्ठववर्ज्जिता । अत्युच्चा वलिता चैव वाजिनां निन्दिता गतिः ॥ मोडमप्फोटिकाभिस्तु करवेष्टितजानुभिः । धृतं द्विगुणितङ्गत्वा हस्ताना पुनरेति यः ॥ स शीघ्रगतिरित्युक्तो वाजी धन्वस्थोधनैः । दशहीना भवन्त्येते मध्यमाधमगा हयाः ॥ दूरमुत्क्षिप्य यः पादांस्तमाङ्गारान् स्पृशन्निव । पुनर्याति सुसंहृष्टो वाजी भद्रगतिस्तु सः ॥ पूजिता वृषमातङ्गसिंहशार्दूलगामिनः । अतोऽन्यगतयो नेष्टाः सर्व्वदैव तुरङ्गमाः ॥" ज.द.७म. । "गतयः षड्विधा धाराः स्कन्दितं रेचितं प्लुतम् । धौरितकं वल्गितञ्च तासां लक्ष्म पृथक् पृथक् ॥" इति युक्तः । "धौरितं वल्गितं प्लुत्यमेजितोत्तेजितानि च । गतयः पञ्च धाराख्यास्तुरङ्गाना क्रमादिमाः ॥" हे.च. । "गतिः प्लुता चतुष्का च तद्वन्मध्यजवापरा । पूर्णवेगा तथा चान्या पञ्च धाराः प्रकीर्त्तिताः ॥" "गतिरेका प्लुता चास्य चातुरीया द्वितीयका । वेगसन्धिस्तृतीया च धारा वेगवती तुरी ॥ धारा तु पञ्चमी प्रोक्ता न शृणोति न पश्यति । सर्व्वकर्म्मकृतो वाजी तस्मात्ता परिवर्ज्जयेत् ॥" नकुल. ।

**गदम्** । क्ली, पुं । विषे । कुष्ठौषधौ । কুড় । रा.नि.व ६।१२ । वै निघ.अन्तकसन्निपात.चि. । रोगे । रा.नि.व.२० ।

**गदघ्नः** । पुं । नन्दीवृक्षे । वै.निघ. ।

**गदनिश्चयः** । पुं । माधवीयरोगनिश्चायकग्रन्थे ।

**गदमुरारिः** । पुं । गौढामज्वरे रसः । "रस बलिशिलालौहव्योषताम्राणि तुल्यान्यथ सदरदनागं भागमेतत्प्रदिष्टं,भवति गदमुरारियास्यगुञ्जादय ।" রস, গন্ধক, মনছাল, লোহ, ত্রিকটু, তাম্র, হিঙ্গুল, শীষ প্রত্যেকে সমভাগ । र.सा.सं. ।

**गदविनोदनिघण्टुः** । पुं । वैद्यकनिघण्टुभेदे ।

**गदहरः (री (इन्))** । पुं । वैद्ये । वै.निघ. ।

**गदा** । स्त्री । पाटलवृक्षे । श.च. ।

**गदाख्यम्** । क्ली । कुष्ठे । কুড় । र मा. ।

**गदागदौ** । पुं द्वि. । अश्विनीकुमारौ । त्रिका. ।

**गदाग्रणीः** । पुं । क्षयरोगे । रा.नि.व.२० ।

**गदारातिः** । पुं । औषधे । रा.नि.व.२० ।

**गदार्त्तिका** । स्त्री । गोजिह्वायाम् । পাথরকুচি । वै.निघ. ।

**गदाह्व(य)म्** । क्ली । कुष्ठे । কুড । श.र ।

**गदी (इन्)** । त्रि । रोगिणि । वै.निघ. ।

**गद्गदः** । पुं । वातव्याधिविशेषे । তোৎলা । सु.सू.१४. । See मिन्मिनः ।

**गन्ता** । त्रि । संचरणशीले । सु शा.३अ. ।

**गन्धम्** । क्ली । अगुरुणि । कृष्णागुरुणि । रा. नि व.१२ ।

**गन्धः (कः)** । पुं । Sulphur स्वनामख्यातखनिजोपधातौ । গন্ধক । हिं गन्धक । फार्सि गोगिर्द । "श्वेतद्वीपे पुरा देव्या क्रीडन्त्या रजसाप्लुतं । दुकूलं तेन वस्त्रेण स्नातायां क्षीरनीरधौ । प्रसृतं यद्रजस्तस्माद्गन्धकः समजायत ॥" भा. । स च रक्तपीतश्वेतकृष्णत्वात् चतुर्विधः । पीतः औषधेषु, श्वेतः चर्म्मरोगेषु बाह्यप्रयोगेषु च व्यवहार्य्यः । र सा.सं. । "चतुर्धा गन्धकः प्रोक्तो रक्तः पीतः सितोऽसितः । रक्तो हेमक्रियासूक्तः पीतश्वेतौ रसायने । व्रणादिलेपने श्वेतः कृष्णः श्रेष्ठः सुदुर्लभः ॥ गुणाः—कटुकः वीर्य्योष्णस्तुवर. सरः । पित्तलः कटुकः पाके कण्डूवीसर्पजन्तुजित् । हन्ति कुष्ठक्षयप्लीहकफवातान् रसायनः ॥ अशोधितो गन्धक एष कुष्ठं करोति तापं विषमं शरीरे । सौख्यञ्च रूपञ्च बलं तथौजः शुक्रं निहन्त्येव करोति चास्रम् ॥" भा पू १भ. । तच्छुद्धिः—"लौहपात्रे विनिक्षिप्य घृतमग्नौ प्रतापयेत् । तप्ते तस्मिन् समानञ्च निःक्षिपेद्गन्धकं रजः । विद्रुतङ्गन्धकं ज्ञात्वा दुग्धमध्ये निधापयेत् । एवं गन्धकशुद्धिः स्यात्सर्व्वकार्य्येषु योजयेत् ॥" एवं त्रिफलाजलभृङ्गराजस्वरसादौ निःक्षिपेदिति मतान्तरम् । सा.कौ. । शुद्धगन्धकगुणाः—"शुद्धगन्धो हरेद्रोगान् कुष्ठमृत्युज्वरादिकान् । अग्निकारी महानुष्णो वीर्य्यवृद्धिं करोति

म्बालानुबन्धिनः। गण्डमालापची चेयं दूर्व्वेव च यद्विभाक्। तां लजेत्सज्वरच्छर्द्दिपार्श्वरुक्कासपीनसा॥" वा उ.२९ष.। "छर्द्दिर्विरेचनं स्वेदो नस्य धूमं शिराव्यधः। अग्निकर्म्म क्षारयोगः प्रलेपो लङ्घनानि च। पुराणघृतपानञ्च जीर्णलोहितशालयः॥" इति पथ्यापथ्यम्।

**गण्डमालिका**। स्त्री। गण्डमालायाम्। लज्जालुकायाम्। रा.नि व.५।

**गण्डरोगः**। पुं। अश्वस्य मुखरोगभेदे। "मुखाभ्यन्तरगो गण्डः गण्डरोग इति स्मृतः।" ज. द २९ष.।

**गण्डशैलः**। पुं। ललाटे। हे.च.।

**गण्डस्थलम्**। क्ली। कपोलदेशे। वै.निघ।

**गण्डाङ्गः**। पुं। खड्गिनि। गण्डार। श च.।

**गण्डारिः**। पुं। कोविदारवृक्षे। रक्तकाञ्चन गाछ। भा.। मत्स्यविशेषे। वै.निघ.।

**गण्डालजी**। स्त्री। गण्डरोगे। लक्षणं—"गण्डालजी स्थिरः शोफः गण्डे दाहज्वरान्वितः॥" वा उ.३१ष.।

**गण्डालिनी (ली)**। स्त्री। गण्डदूर्व्वायाम्। रा.नि व.८। श्वेतदूर्व्वायाम्। अम.। सर्पाक्ष्याम्। सुगन्ध वाला। भा.। [सु.शा.५ष.।

**गण्डास्थि**। क्ली। कपोलास्थिद्वये। च शा ७ष.।

**गण्डिः**। पुं। वपुषि। वृक्षमध्ये। तरुशाखायाम्। वै.निघ.। तरुकाण्डे। हे.च.।

**गण्डीरः**। पुं। शाकविशेषे। गण्डिनी, शालिञ्च, शमठ शाक, उनठिया। च टी भ.। च.सू.४ष.। मञ्जिष्ठायाम्। स्नुहीवृक्षे। रा.नि व.८। कटुपर्णे। वै निघ.।

**गण्डीराद्यतैलम्**। क्ली। मण्डलकिटिमादि कुष्ठरोगेषु हितम्। "गण्डीरिकाचित्रकमार्कवार्क कुष्ठद्रुमत्वग्लवणैः समूत्रैः। तैलं पचेत्"...... । तैल ४ श. गोमूत्र १६ श.। कल्क—मूषीकोड बा मञ्जिष्ठा, चितामूल, भृङ्गराज, आकन्द आठा, कुड, कुर्चिवक्कल वा सोनालूछाल एवं सैन्धव लवण मिलित १ श.। च.द.।

**गण्डीरिका (री)**। स्त्री। स्नुहीवृक्षे। मनसा सिज्, टेकाटा सिज्। रा.नि.व.८। च. द.गण्डीराद्यतैले। मञ्जिष्ठायाम्। प.मु.। शाकविशेषे। भा.म.प्रमेह.चि.। हस्तौ। रक्तकाञ्चनवृक्षे। वै.निघ.संग्रहणी.चि चाङ्गेरीघृते। [जटा०।

**गण्डुः**। पुं, स्त्री। ग्रन्थौ। वै.निघ.। उपधाने।

**गण्डूपदः**। पुं। किञ्चुलुके। केंचो। अम.।

**गण्डूपदभवम्**। क्ली। सीसके। हे च.।

**गण्डूपदाद्यतैलम्**। क्ली। व्रणरोगे हितम्। कटुतैलं ४ श. पाकार्थजलं १६ श. कल्कार्थगण्डूपदः (केंचो) १ श.। अथवा कटुतैलं १ श. कल्कार्थगण्डूपददशकं (केंचो १०टा)। च.द.।

**गण्डूपदी**। स्त्री। जलपिप्पल्याम्। वै.निघ.। क्षुद्रकिञ्चुलुकायाम्। अम.।

**गण्डूली**। स्त्री। गण्डदूर्व्वायाम्। वै.निघ।

**गण्डूषः (धारणं)**। पुं, क्ली। कुलुके। गण्डूष। स्नेहक्षीरकषायादिद्रवैर्मुखापूरणं गण्डूषः। आपूर्य च मुखेन धारणं गण्डूषधारणमुच्यते। तस्य द्रव्यमात्रा द्रवद्रव्य पलमात्र मुखचूर्णस्य च कोलपरिमाणम्। तद्धारणमात्रा—"आसञ्चार्या गुणा मात्रा गण्डूषे सा प्रकीर्त्तिता।" च.द.। तत्र गण्डूषधारणं तावत्कार्यं यावत्कफपूर्णास्यता दोषच्छेदः नेत्रघ्राणस्रुतिश्च भवेत्। गण्डूषश्चतुर्विधः, स्नेहनप्रसादनशोधनरोपणभेदेन। "स्निग्धोष्णैः स्नैहिको वाते स्वादुशीतैः प्रसादनः। पित्ते कट्वम्ललवणै रूक्षैः संशोधनः कफे। कषायतिक्तमधुरैः कटूष्णै रोपणो व्रणे। इति। दद्यादेवं चूर्णञ्च गण्डूषे कोलमात्रकम्। कर्षप्रमाणः कल्कश्च कवले दीयते बुधैः। धार्य्यते पञ्चमाद्वर्षादूर्द्ध्वं कवलादयः। व्याधिरपचयस्तुष्टिर्वैशद्यं वक्त्रलाघवं। इन्द्रियाणां प्रसादश्च गण्डूषे विहिते भवेत्॥" भा। आमचारी ज्ञेयः पूर्वं गण्डूष, कवलोऽन्यथा। ... गण्डूषे कर्षमात्रकम्। पलमात्रं द्रवं कार्य्यं गण्डूषे दापयद्बुधः। द्रवेण कार्य्यो गण्डूष कल्केन कवलः स्मृत.। कल्कः शुक्तमदप. स्यात् तु द्रवं प्रदापयेत्। एकद्वित्रिचतुः पञ्चवारान् कुर्य्यात्तदा समं।" कवियज्जादमायं। मद्यसिद्धनिर्निष्टे। शी।

**गण्डोलः**। पुं, क्ली। गुडे। त्रिका.। शर्करायाम्। ग्रासे। वै.निघ.। [शब्दार्थि।

**गतमोकः**। पुं। गतोदकादे। वा.द.११ष.

एवंविधं निष्पीडितं तैलं काकोल्यादिशतपुष्पान्तैस्तथा एलादिमञ्जाटकान्तैः कल्कद्रव्यैः तैलचतुर्गुणजलेन यथाविधि पाच्यं। चोरगन्धा चीरविदारी, अनन्ता दूर्व्वा, मधूलिकं मर्कटहस्तितृणम्। च द.।

**गन्धत्वक्** । स्त्री । एलवालुके । रा.नि.व.४ ।

**गन्धदला** । स्त्री । अजमोदायाम् । वनयमानी। रा.नि.व ६ ।

**गन्धद्रव्यम्** । क्ली । पक्वतैलसुवासनद्रव्ये । गन्धद्रव्य। तानि यथा—"एलाचन्दनकुङ्कुमागुरुमुराकशैलमांसीशटीश्रीवासकदयन्थिपर्णशनखचोचोनखशीगोरेकम्। कस्तूरीनलदपूतिगन्धजलमुस्तैस्तवराद्रिकं गन्धद्रव्यमिदं प्रदेशमखिलं योविद्युते खादिषु॥" च.द.। अन्यच यथा—"कुष्ठच नलिका पूतिकशेरे श्वेतचन्दनं। जटामांसी तेजपत्रं मखी मृगमद. फलं। कङ्कोलकुङ्कुमचोचं लताकस्तूरिका वचा। सूक्ष्मैलागुरुमुस्तच कर्पूरं पन्थिपर्णकं। श्रीवास. कुन्दुरुर्देवकुसुमञ्चमस्माद्का। सिह्लकी निविका मैघो भद्रमुस्तं तथा शटी। जातीकोष. शैलजच देवदारु सजीवकम्। एतानि गन्धद्रव्याणि॥" तत्कुङ्कुमादिकं पत्रपल्लवतैलेन भवति। "आमत्रस्रुकपिशाना बीजपूरकविन्नयी.। गन्धकर्म्मणि सर्व्वत्र पत्राणि पत्रपल्लवम्॥" भैष.। गुणाः—रुच्यं दीपनं पाचनं मुखदौर्गन्ध्यहरं मेदःश्रमघ्न। रा.नि व.।

**गन्धद्रावकम्** । क्ली । चर्क्कौतौषधविशेषे। द्रावकविशेष। साधनविधिः यथा—"काशीशं गन्धकं वापि सन्दृष्टैयत्नयोगतः। क्षीरकञ्चापि (সোরা) सन्दह्य दयोर्द्धमं विमिश्रयेत्। औषपात्रेस्थापेण द्रावकं तैलं जायते॥ निर्म्मलं तत्र सेवेत परं दाहकरं हि तत्। चतुर्द्दशगुणैस्तोयैर्युतं विन्दुमितं पिबेत्॥" चवि।

**गन्धधूमजः** । पुं । स्वादुनि चगुरुसारे । स्वादु अगुरु । रा नि व.१२ ।

**गन्धधूलिः (ली)** । स्त्री । कस्तूर्य्यां । वै.च. ।

**गन्धनकुलः** । पुं । कृष्णुन्दर्य्याम् । छूंচো। -दारा.।

**गन्धनाकुली** । स्त्री । रास्नायाम् । च्चम. । (Ophioxylon serpentinum) नाकुली नामकन्दशाकमिदं, गन्धरास्नायाम्। सुगन्ध नाकुली, गन्धनाला। हिं नाइ। गुणाः—"नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्। भोगिलूताहयिकाखुविषज्वरक्रिमिव्रणान्॥" भा.। कटुतिक्तोष्णा त्रिदोषघ्नी विषघ्नी नाकुल्या ईषदूनेह च। रा.नि.व ६ ।

**गन्धनामा (म्नी)** । पुं । रक्तपुष्पतुलस्याम्। मं सुवासित औषधिविशेष। र सा। स्त्री (म्नी)। तन्नामकक्षुद्ररोगभेदे। त्वग्गत ফোড়া। "तादृशी महती लेखा गन्धनामेति कीर्त्तिता।" वा.उ.३१ च.। लचणं यथा—"एकामेतादृशीं दृष्टा पिडकां स्फोटसन्निभां। त्वग्गतां पित्तकोपेन गन्धनाम्नीं प्रचक्षते॥" सा नि.। भा म.४भ.। [विका.।

**गन्धनालिका (ली)** । स्त्री। नासिकायाम्।

**गन्धनिलया** । स्त्री । नवमल्लिकायाम्। मं वटमोगरी। श.च.।

**गन्धनिशा** । स्त्री। गन्धहरिद्रायाम्। আমআদা। म आंबेहलद। रा नि.व.६ ।

**गन्धपत्र(क)म्** । क्ली। तेजपत्रे। वै.निघ.चर्व्व.. वि.कनकार्णवरसे। सुगन्धपत्रविशेषे। পচাপাত। "गन्धाढ्या सौरभेयी च गन्धपत्रं नपुंसकं।" गुणाः—गन्धपत्रं वातहरं शीतलं वह्निवर्द्धनम्। रा.नि. व.१०। प्रसारणीपत्रे। गन्धভাদুলের পাতা। सुदर्शनचूर्णञ्च चि.। पुं। श्वेततुलस्याम्। मरुवकवृचे। गन्धতুলসী, নাগদনা इति केचित्। बर्ब्बरे। काल वावुई। रा.नि व.१०। नागरङ्गवृचे। बिल्ववृचे। रा.नि.व.११।

**गन्धपत्रा (त्रिका) (त्री)** । स्त्री। मालवे प्रसिद्धगन्धपलाशायाम्। पलाशनाम इति दाक्षिणात्याः। श्वेतवितन्ध, गन्धপত্রী, আম আদা। अजमोदायाम्। वनयमानी। रा.नि.व.६। गन्धपत्री। শটীবিশেষ। रा.नि व १०। अश्वगन्धायां। अम्बष्ठायाम्। आदनाथि। रा नि.व.४।

**गन्धपर्णम्** । क्ली। काकपुष्पे।

**गन्धपलाशजा (शिनी)** । स्त्री। बंशसीवनभेदे। वै.निघ.।

**गन्धपलाशिका (शी)** । स्त्री। (Curcuma amhaldi zerumbet) गन्धशठ्याम्,

च ॥" र.सा स.५श्र । श्रामोदे । विश्व. । चन्द्रशी र्षे । वै निघ. । शोभाञ्जनवृक्षे । श.र. । गन्धरसे । वै निघ ।

**गन्धककज्जलिः** । पु । सन्निपातज्वरे देय । पाठ —"कण्टकारी सिन्धुवारस्तथा नाटकरञ्जक । अमीषां रसमादाय कृत्वा खर्परखण्डके । प्रक्षिप्य गन्धकं तत्र ज्वालां मृदग्निना दहेत् । गन्धके स्नेह वापन्ने पारदं तत्समं क्षिपेत् । मिश्रीकृत्य ततो द्वा भ्यां द्रव तमवतारयेत् । श्रामर्दयेत्तथा तत्तु यथा स्यात्कज्जलप्रभम् । ततस्तु रक्तिकामस्य मरीचस्य च माषकं । माषैकं लवणस्यापि पर्ण कृत्वा प्रदा पयेत् । ज्वरे त्रिदोषजे घोरे जलमुष्ण पिबेदनु ॥" रस र. ।

**गन्धकतैलम्** । क्ली । कर्णनाड्यां हितम् । "निशागन्धपलं द्वे तु कटुतैलं पलाष्टकं । धूर्तपत्र रसे सिद्धं कर्णनाडीजिदुत्तमम् ।' कटुतैल ८ प धुस्तूरपत्ररस ८ प । कल्क —हरिद्रा १ प ग न्धक १ प एकत्र पचेत् । रस.र. ।

**गन्धकन्दकः** । पु । कशेरौ । रा.नि.व ८ ।

**गन्धकली** । स्त्री । प्रियङ्गौ । च द विष चि । चम्पककलिकायाम् । [वै निघ ।

**गन्धकारी** । स्त्री । श्वेतकष्माण्डे । मल्लकीवृक्षे ।

**गन्धकाष्ठम्** । क्ली । अगुरुकाष्ठे । त्रिका । श्र वरचन्दने, दूपपीतचन्दने । रा नि व.१२ । कृष्णा गुरुणि वै निघ । [ध्या.एकादशशतो.प्र.मेले ।

**गन्धकी** । स्त्री । सल्लक्याम् । शालूरे । च द.चा

**गन्धकुटी** । स्त्री । सुरामांसाम् । रा नि व १२।

**गन्धकुसुमा** । स्त्री । कोङ्कणदेशे ख्याते गन्धि कारीपुष्पवृक्षे । रा.नि व १० ।

**गन्धकेलिका** । स्त्री । कस्तूर्याम् । रा नि व. १२ । गन्धमालत्याम् । वै निघ. ।

**गन्धकालिका** । स्त्री । गन्धमालतीपुष्पे गन्ध द्रव्यविशेषे । गुणा —"स्निग्धोष्णा कफवातघ्ना सु गन्धा गन्धकालिका । गन्धकालिकया तुल्या विज्ञे या गन्धमालती ॥" भा.क व. ।

**गन्धखेड(क)म्** । क्ली । गन्धतृणे । गन्ध दे श। । एतच्च सुगन्धि ईषत्तिक्तं रसायनं स्निग्धं मधुरं शीतलं कफपित्तदमहरञ्च । रा नि.व ८ ।

**गन्धगर्भः** । पु । बिल्ववृक्षे । वै.निघ ।

**गन्धग्रहा** । स्त्री । सुरामांस्याम् । वै निघ ।

**गन्धग्राही** । स्त्री । नासिकायाम् । वै निघ. ।

**गन्धचेलिका (ली)** । स्त्री । लताकस्तूर्याम् । प म । कस्तूर्याम् । मृगनाभि । त्रिका । जवा दिकस्तूर्याम् । थाटांशी । वै.निघ. ।

**गन्धजातम्** । क्ली । तेजपत्रे । श.र. ।

**गन्धघ्रा** । स्त्री । नासायाम् । हे च. ।

**गन्धतण्डुलः** । पुं । सुगन्धशालौ । रा नि व १६।

**गन्धतुलसी** । स्त्री । सुगन्धतुलसीभेदे । कृष्ण तुलसी, गोलापतुलसी । प म ।

**गन्धतृणम्** । क्ली । Andropogon schoenanthus ) स्वनामख्याततृणे सुगन्धभूतृणे वा । गन्धतृण, सुगन्धि तृण । गुणा —सुगन्धि ईषत्तिक्तं रसायनं मधुरं शीतं कफपित्तश्रमप्रदम् । रा नि व. ८ । मालके । वै निघ. ।

**गन्धतैलम्** । क्ली । पक्वतैलविशेषे । आवर्तमा नदुग्धे गन्धकरजो दत्वा तज्जातदधिज घृतं गन्ध तैलमुच्यते । इदं गलत्कुष्ठे शिवनभक्षणाहितम् । "आवर्तमाने पयसि दत्वा गन्धकजं रज । त ज्जातदधिज सर्पिर्गन्धतैलं वदन्ति हि । गन्धतैल गलत्कुष्ठं हन्ति शिवाय भक्षणात् ॥" चक्रि. । म तान्तरं यथा —' अर्कक्षीरे. स्नुहीक्षीरैर्वस्त्रं लिप्यन्तु सप्तधा । गन्धकं नवनीतेन पिष्ट्वा वस्त्रं प्रलेपयेत् । तद्वर्तिर्ज्वालिता दण्डे धृता धार्या त्वधोमुखी । तै लं पतत्यधः पात्रे ग्राह्यं योगेषु योजयेत् ।" भैष । ज्यरत् भगन्दरे हितम् । सु चि १८ अध्यायं । ग्रन्थ मत्रमभ्याधिकारे । अत्र मनुष्यादिसर्वतन्त्राणां गृहीत्वा वल्मीक पादभूमिषडानू कृत्वा यातीमृत्तिकं त्रि मज्ज रात्रौ स्थापयेत् । ततो दिवसे आतपे शोष येदितिसमस्तं यावत्। तत्तिलतुल्यपरिमाणं दद्धुग्धे रात्रौ तिलान् प्रक्षिप्य दिवा सम्मार्ज्य आतपे शोष येत् । तदनुभाव्यद्रव्यसमसर्वप्रभुत्वादिन तत् पु शीरस्य विभाव्य शोषयित्वा चूर्णयेत् । अथ काको स्यादिचूर्णं तिलचूर्णचतुर्थांशं वा समं वा गृहीत्वा तिलचूर्णेन मिश्रयेत् । तत एतदिदमष्टकर्न दर्वे तावन्मात्र ग्राह्यं यावता पैशाचर्दं करव तिलादिचूर्णम् आर्द्रं भवेत् । (इति हर्षनन्दन )

गोमयमार्ज्जारे। गन्धगোকুল। जटा । मार्ज्जारीनामौषधौ।

**गन्धमार्ज्जारवीर्य्यम्** । क्ली। गन्धमार्ज्जाराण्डोद्भवकस्तूर्य्याम्। খাটাশী। गौराशाखभेदे। हिं मांडी। गुणाः—"वीर्य्यंश्लेष्मफवातघ्नं। कण्डूकुष्ठहरं नेत्र्यं सुगन्धं स्वेदगन्धनुत्॥" भा.।

**गन्धमालती** । स्त्री। गन्धकोकिलानामगन्धद्रव्यविशेषे। भा। [नाम्नी।

**गन्धमाला** । स्त्री। क्षुद्ररोगभेदे। See गन्ध

**गन्धमालिनी (ल्या)** । स्त्री। मुरानाम्नां। जटा। सुगन्धमालती। रा नि व.१६।

**गन्धमुण्ड:** । पुं। पारीषाश्वत्थे। পলাশপিপ্লন, গন্ধভাইলিবিশেষ, গন্ধমুণ্ডবৈঁটু। हिं गन्धियाभाँट् गजहुण्ड। भा। See पारीषा।

**गन्धमूल: (क:)** । पु। कुलञ्जनवृक्षे। रा नि. व.६। बालके। बाला। वै निघ.। शट्याम्। श.र।

**गन्धमूला** । स्त्री। शट्याम्। शल्लकीवृक्षे। रा. नि.व.११। स्थलकमलिन्यां। रास्नायां। वै निघ।

**गन्धमूलिका (ली)** । स्त्री। गन्धशट्याम्। माकन्द्याम्। रा.नि व.६।७। श्रम।

**गन्धमूषिक: (षिका) (षी)** । पुं, स्त्री। छुछुन्दरी। छूँচা। चिका। हे.च।

**गन्धमृग:** । पु। खट्टाशे। গন্ধগোকুল, খাটাশ। म जवादीमाजार। श मा। [वै निघ.।

**गन्धमृत्पुष्प:** । पुं। कदम्बवृक्षे। কদম গাছ।

**गन्धमेदिनी** । स्त्री। चम्पककलिकायाम्। চাঁপার কলি। वन्दाके। मान्दस्रा। रा.नि.व.१०।

**गन्धमैथुन:** । पु। वृषभे। ষাঁড। चिका.।

**गन्धमोदन:** । पुं। गन्धके। रा.नि.व १३।

**गन्धमोहिनी** । स्त्री। चम्पककलिकायाम्। वै.निघ.। वन्दायाम्। रा.नि व.१२।

**गन्धरस:** । पुं, क्ली। सुगन्धबोले। খুনখারাপি, ফুলমর গন্ধবোল। चिका। खाद्याखिकायाम्। খাটাশী। च.द वा व्या.एलादितैले। (सा) स्त्री। सुरामांस्याम्। वै.निघ.।

**गन्धराज: (क.)** । पु, क्ली। मुद्गरपुष्पवृक्षे। গন্ধরাজ ফুলের গাছ। रा.नि.व.१०। स्वनामख्यातद्रव्ये। খাটাশী, গন্ধরাজ। See जवादि। कणगुग्गुली। श्रीखण्डचन्दने। শ্বেত চন্দন। लणागुरुणि। रा नि.व.१२। नखीनामगन्धद्रव्ये। वै.निघ.।

**गन्धराजतैलम्** । क्ली। वातव्याधौ तैले। पाठ—"तिलतैलाढके चिप्रा तक्र तत्परिमाणकं। वषावतुष्पलं दत्वा युक्त तत्र चतुर्गुणम्॥ चिफलाया पलान्यष्टौ मञ्जिष्ठायास्तथैव च। पुनरष्टपलान्यस्या अर्द्धदग्धानि दापयेत्॥ पूगचेलशठीपद्मरणाम्बुदद्दारुण। पलान्यष्टौ विनिक्षिप्य घृतस्य तु पलद्वयम्॥ आद्ये पाके पचेदित्थं तैलं यावच्चतुर्गुण। गालयित्वापरङ्कुर्य्यात्तत्र पाकत्रयम्बुध॥ षण्डादलमरुच्चनालकपत्रीकोलशैलज। विषाणचौरपग्रन्थिदेवताकुसुमानि च॥ प्रत्येकमेषाञ्चत्वारि पलान्यादाय गान्धिक'। पाक द्वितीय तैलस्य कारयेत्क्रमयोगत॥ पृक्कामांसी मुरा वाल मदन कलिकामली। न गुरु काष्ठखोटी च चम्पकुन्दप्रियङ्गव॥ एषां खट्टाखिकायाय प्रत्येकञ्च पलद्वयम्। आदाय कारयेत्पाकं तृतीयङ्गन्धकोविद॥ फणिज्झावलताकोलफलैलागुरुसिह्लकैः। लक्कोषार्कैर्हिं पलिकैरिति पाकश्चतुर्थक.॥ वेध पलयुगेनेन्दोर्मदस्य त्वष्टभि पले.। गन्धराजाह्वय तैलमिद स्वमनोहरम्॥" তিলতৈল ১৬ শ. তক্র ১৬ শ. কাঁজি ৬০ শ. কল্কার্থ—যথাবিধি বচ ৪ প. ত্রিফলা, মঞ্জিষ্ঠা, অর্দ্ধভৃষ্ট মঞ্জিষ্ঠা প্রত্যেকে ৮ প গুবাকপুষ্পত্বক্, তেজপত্র, শটী, সরলকাষ্ঠ, মুতা, দেবদারু মিলিত ৮ প. কুন্দুরুখোটী ২ প. ইহা দ্বারা প্রথম গন্ধপাক করিবে। শোধিত চোরহুলী, তেজপত্র, মরুবা মৌরী, গুড়ত্বক্, দনা, শিলারস, এলা, কুড, দেবহুলী, গেঁঠেলা, উশীর প্রত্যেকে ৪ প. পূর্ব্বকল্ক ছাঁকিয়া ইহা দ্বারা ২য় গন্ধপাক করিবে। শুদ্ধ পিড়িং, জটামাংসী, মুরামাংসী, বালা, লবঙ্গ, ছল্লীপুষ্প (ছলনা), ভুঁই আমলা, অগুরু, লবণখোটী, চম্পকপুষ্প, কুন্দপুষ্প, প্রিয়ঙ্গু, খাটাশী প্রত্যেকে ২ প. ৩য় গন্ধপাক। শ্বেত চন্দন, লবঙ্গলতা, কস্তুরী, কক্কোল, জায়ফল, এলা, অগুরু, শিলারস, গুড়ত্বক্, জয়িত্রী, কুঙ্কুম প্রত্যে-

नशामकसुगन्धद्रव्ये । गन्धपलाशीति काश्मीरे प्रसिद्धा । गन्धशटी, आम आदा । मं कापूरकाचरी, आंबेहलद । गुणाः—"भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः । तिक्ता तीक्ष्णा च कटुकानुष्णास्यमलनाशिनी । शोथकासव्रणश्वासशूलहिक्काग्रहापहा ।" भा. । कटुः स्वादुः तीक्ष्णोष्णा वातकफघ्नी कासच्छर्दिघ्नी पित्तकोपनी च । रा.नि.व.६ । (का) हरिद्रायां ; हारा. । [ेभद । वै निघ ।

**गन्धपल्लवा** । स्त्री । गन्धपलाश्याम् । शटी-

**गन्धपाषाण:** । पुं । गन्धके । र.मा । भैष.कुष्ठ.चि. ।

**गन्धपिण्डिका** । स्त्री । गन्धकमारणमारणार्थं सगन्धकपिष्टी । "ग्रहसूतपलैकन्तु कर्षैकं गन्धकस्य च । खिन्नखल्ले विनिक्षिप्य देवदालीरसप्लुतम् । मर्दयेच्च कराङ्गुल्या जायते गन्धपिण्डिका ।" र.चि. ५स्त. ।

**गन्धपिण्डीर:** । पुं । कृष्णमदनवृक्षे । कालमयना गाछ । मं कालेगेल । वै.निघ ।

**गन्धपिशाचिका** । स्त्री । धूपे । हे.च । छुछुन्दर्याम् । वै.निघ. ।

**गन्धपीता** । स्त्री । गन्धपत्रायाम् । रा.नि.व. ६ । गन्धशट्याम् । वै.निघ. ।

**गन्धपुष्प: (क:)** । पुं । (Calarpus Rotang) वेतसवृक्षे । বেত গাছ । बहुवारवृक्षे । रा.नि.व.८।११ । अङ्कोटवृक्षे । আঁকোড় গাছ । जटा. । अशोकवृक्षे । भीलीवृक्षे । वै निघ ।

**गन्धपुष्पा** । स्त्री । गणिकारिकापुष्पवृक्षे । केतक्याम् । কেয়া গাছ । रा नि.व.१० । नील्याम् । रा.नि.व.४ ।

**गन्धपूतना** । स्त्री । पूतनाभेदे ।

**गन्धप्रियङ्गु:** । पुं, स्त्री । प्रियङ्गुभेदे । প্রিয়ঙ্গু গাছ । हिं फुलप्रियङ्गु । मं गहला । गुणाः—तीक्ष्ण तिक्तः उष्ण, शीतलः क्षेमः वान्तिभ्रान्तिदाहपित्तरक्तज्वरमोहस्वेददुर्गन्धनाशकः वातं पुष्पं विषं मेदं विस्व नाशयेत् । बीजं—कषायं मधुरं शीतलं रुच ग्राहि गुरु रक्तपित्तं मलविष्टम्भि वन्धं पित्तं कफघ्नम् श्वासानलदम् । वै.निघ. ।

**गन्धफलिञ्जक:** । पुं । रक्तगुल्लोवृक्षे । र.मा. ।

**गन्धफल:** । पुं । कपित्थवृक्षे । बिल्ववृक्षे । तेजःफलवृक्षे । रा.नि.व.११ ।

**गन्धफला** । स्त्री । प्रियङ्गुवृक्षे । श.र. । मेथिकायाम् । शल्लकीवृक्षे । रा.नि.व.६।११ । मुरामांसाम् । वै.निघ. । [व.६ ।

**गन्धफलिका** । स्त्री । स्थूलैलायाम् । रा.नि.

**गन्धफली** । स्त्री । प्रियङ्गौ । वै निघ. । चम्पककलिकायाम् । চাঁপার কলি । रा नि व १० ।

**गन्धवधू:** । स्त्री । शट्याम् । मं कापूरकाचरी, कचोरा । चिरानामगन्धद्रव्ये, चोड़ानामदेवदारुभेदे । रा.नि.व.१२ ।

**गन्धबन्धु:** । पुं । आम्रवृक्षे । रा नि.व.११ ।

**गन्धबह(हु)ल:** । पुं । सुगन्धशालिधान्ये । वै. निघ. । सितार्जकवृक्षे । শ্বেতপত্র ক্ষুদ্র তুলসী । रा नि.व.१० । स्त्री । श्वेतार्जके । वाबुई । मं श्वेतपाजवला । गोरक्षचिञ्चायाम् । रा.नि.व.५ ।

**गन्धभद्रा** । स्त्री । प्रसारण्यां । गन्धभादुलिया । मं मंधलीवला । श.च ।

**गन्धभाण्ड:** । पुं । गर्दभाण्डवृक्षे । श.र. । आम्रातके । आमड़ा । च.सू.४अ. ।

**गन्धभेदक:** । पुं । कटके । कायके । चीड़े । तिलके । रा.नि.व.१३ ।

**गन्धमांसी** । स्त्री । A kind of India spikenard. सुगन्धजटामांस्याम् । मं कं च सुगन्धजटामांसी । गुणाः—तिक्ता शीता कफकण्ठरोगघ्नी रक्तपित्तहरी विषघ्नी भूतज्वरघ्नी रा नि.व १२ ।

**गन्धमातृका** । स्त्री । गन्धमार्जेति प्रसिद्धे च पिण्डद्रव्ये । भैष.स्त्रीरोग.फलघृतादिः ।

**गन्धमादन:** । पुं । गन्धके । भ्रमरे । वानरविशेषे । मे. । भूतादिकीटविषप्रातिदर्पविशेषे । "स्मरीषधपाकद्वीपादैदापत्रहुमी: ।" वा.उ १८ ।

**गन्धमाद(दि)नी** । स्त्री । चोडानामदेवदारुभेदे । आम्रवृक्षे । रा नि.व.१२।११ । लाक्षायां । रा.नि.व.६ । सन्दाके । सुरामांस्याम् । रा.नि.व. ११ । सर्पविशेषे । विका. ।

**गन्धमार्जार:** । पुं । The civet cat,

**गन्धसेवि** । स्त्री । रोहिषतृणे । ग्रामकर्पूर । वै.निघ. । [वामले । त्रिका ।

**गन्धसोमम्** । क्ली । कुमुदे । नालफूल । श्वेत-

**गन्धा** । स्त्री । मङ्गल्यागुरुणि । गन्ध्याम् । रा. नि.व.१२ । अजमोदायाम् । रा.नि.व.६ । शाल पर्ण्याम् । अ.टी.भ. । वनतुलस्याम् । वंशलोचना-याम् । कुकुन्दर्याम् । प्रियङ्गौ । वै.निघ. । सुवर्ण चम्पककलिकायाम् । ग.र. ।

**गन्धाखुः** । पुं । कुकुन्दर्याम् । छूँचा । हारा. ।

**गन्धागुरु** । क्ली । मङ्गल्यागुरुणि । वै.निघ. ।

**गन्धाजीवः** । पुं । गन्धवणिजि । जटा. ।

**गन्धाज्ञता** । स्त्री । गन्धानुभवे । वै.निघ. ।

**गन्धाढ्यम्** । क्ली । चन्दने । श्रीखण्डचन्दने । श्वेत चन्दन । गन्धराजि । थाटीणी । रा.नि.व. १२ । बकुलपुष्पे । वै.निघ. । पुं । नागरङ्गके । रा.नि.व.११ ।

**गन्धाढ्या** । स्त्री । स्वर्णयूथिकायाम् । तरणीपुष्पे । आरामशीतलायाम् । पत्रशाकविशेष । रा.नि.व.१० । वनबीजपूरके । दुनो लेबु । सुरामांस्याम् । रा.नि.व.११।१२ । सुगन्धमाल्ये । रा.नि.व.१६ । गन्धान्याम् । गांधानि । श.च. । कस्तूर्याम् । मृगनाभि । जवादिकस्तूर्याम् । चरचशैवाला । तृणविशेष । जातीपत्राम् । वै.निघ ।

**गन्धादि** । क्ली । दमनकेशरे । वै.निघ. ।

**गन्धाधिकम्** । क्ली । रक्तकुङ्कुमे । रा.नि.व.१२ ।

**गन्धाधि(रि)का** । स्त्री । महाशतावर्याम् । गुग्गुल, बड़शताप । रा.नि.व.४ ।

**गन्धानी** । स्त्री । सुगन्धमाल्ये । धूमपत्रायाम् । रा.नि.व.१८।१२ ।

**गन्धामः** । पुं । रक्तमाल्ये । प.मु. ।

**गन्धामृतरसः** । पुं । वाजीकरणाधिकारे । "अनवनूतं दिवा रात्रौ वनदन्ता विमर्दयेत् । रक्ता सपुटे दग्धवितर्केन्दुपर्णैर्वा । निष्कमात्रं जरायत् हन्ति रसायनो रसः ।" रस ८ ।

**गन्धारिः (री)** । स्त्री । दुरालभादन्त । एक दुरालभादन्त । स्वस्थनाशनम् । कामदहद्रोहा । वै.निघ. ।

**गन्धालः (लुः)** । पुं । गन्धमाली । रा.नि.व.१६ । दण्डालुकि ।

**गन्धाला** । स्त्री । अग्निमन्थभेदे । वै.निघ. ।

**गन्धालिः (लिका) (ली)** । स्त्री । गन्धप्र-स्याम् । प.मु. । (ली) प्रसारण्याम् । गन्धभादूले । सा की । जातीफलायाम् । कीटविशेषे । बूमीदो पोका । वै.निघ. ।

**गन्धालीगर्भः** । पुं । सूक्ष्मैलायां । रा.नि.व.११ ।

**गन्धाश्मा** पुं । गन्धके । गन्धक । रा.नि.व.१२ । घट्टीकपाटरसे । च.द.रसमञ्जूरे ।

**गन्धाश्वः** । पुं । अश्वगन्धायां । भैष.कुष्ठ चि. ।

**गन्धाष्टकम्** । क्ली । सुगन्धाष्टद्रव्यगणे । तच नानाविधम् । तत्र मांसादियूषसुगन्धीकरणार्थं यथा—जातीपत्रलवङ्गत्वगेलानागकेसरमरिचमगनाभयः । रावण । देवतादितुष्ट्यर्थं यथा—चन्दनकर्पूर नागकेसर बालक नागरमुस्ता देवदारु गोरोचना कुसुमानि । तथा चन्दनागुरुकर्पूररोचनाकुङ्कुममदचन्दनहोवेराणि गणपतिप्रीत्यर्थम् । चन्दनागुरुकर्पूरतमालह्रीवेरकुङ्कुमकुशोदकानि शिवस्य । "चन्दनागुरुकर्पूरचोरकुङ्कुमरोचनाः । जटामांसी कपियुता शक्तेर्गन्धाष्टकं विदुः ।" "चन्दनागुरुह्रीवेरकुष्ठकुङ्कुमसैव्यकाः । जटामांसी मुरा चेति विष्णोर्गन्धाष्टकं विदुः ।"

**गन्धाढ्या** । स्त्री । प्रियङ्गौ । सु.चि.८४ ।

**गन्धि** । क्ली । रक्तकुङ्कुमे । रा.नि.व.१२ ।

**गन्धिकः** । पुं । गन्धके । भा. ।

**गन्धिनी** । स्त्री । सुरामांस्याम् । अम. । पीतमुस्याम् । ईडविणीति केचित् । कमीमसुरीति च अमः ।

**गन्धिपर्णः** । पुं । सप्तपर्णवृक्षे । रा.नि.व.१२ ।

**गन्धिरसः** । पुं । बोलके । निर्यासन ।

**गन्धिला** । स्त्री । मुस्तायाम् । रा.नि.व.६ ।

**गन्धी (न्)** । पुं । कस्तूरीकृदे । वै.निघ. ।

**गन्धोया** । स्त्री । वचायाम् । च.द.बा.व्या चि. ।

**गन्धोतुः** । पुं । सुगन्धमार्जारे । गन्ध गोकुल । विश्व. ।

কে ২ প ৪র্থ শঙ্খপাক। ছাঁকিয়া কর্পূর ১৬ তো মৃগনাভি ৬৪ তো. মিশাইবে। रस.र.।

**गन्धराजी** । स्त्री । नख्याम् । नखी । श च. ।

**गन्धर्व्वः** । पु । श्वेतकरवीरे । श्वेतैरण्डे । च द वा रक्त चि.अश्वतायक्षने । कस्तूरीमृगे । अश्वे । श्रम । कोकिले । रा.नि व २३ ।

**गन्धर्व्वगन्धः (न्धा)** । पु,स्त्री । अश्वगन्धायां । भा म.४भ.वातुरोगे । च.ख.वाजी. ।

**गन्धर्व्वग्रहः** । पुं । उन्मादविशेषे । "हृष्टात्मा पुलिनवनान्तरोपसेवी स्वाचार प्रियगीतगन्धमाल्य । नृत्यन् वै प्रहसति चारु चाल्पशब्दं गन्धर्व्व ग्रहपरिपीडितो मनुष्य ।" मा नि. ।

**गन्धर्व्वतैलम्** । क्ली । एरण्डतैले । भा ।

**गन्धर्व्वभूषणम्** । क्ली । सिन्दूरे । वै.निघ ।

**गन्धर्व्वशाका** । स्त्री । भार्ग्यां । वामनहाटी । र मा. ।

**गन्धर्व्वहस्तः (कः)** । पुं । एरण्डवृक्षे । हारा.।

**गन्धर्व्वहस्तकतैलम्** । क्ली । ब्रध्नरोगाधिकारे तैलम् । पाठ —"शतमेरण्डमूलस्य पलं शुण्ठ्या य वाटकम् । जलद्रोणे विपक्तव्य यावत्पादावशेषितं । तेन पादावशेषेण पयसा तत्समेन च । प्रस्थमेरण्ड तैलस्य तन्मूलाद्य चतुष्पलम् । विपक्व प्रद्रवच सर्व्वं दत्वा विपाचयेत् ॥" रस र ।

**गन्धर्व्वा** । स्त्री । कोकिलायाम् । वै निघ ।

**गन्धलता** । स्त्री । प्रियङ्गौ । भा.म.१भ रक्त ष्ठी.पि ।

**गन्धलोलुपा** । स्त्री । मक्षिकायाम् । श र ।

**गन्धवती** । स्त्री । त्रिपुरमल्लिकायाम् । प मु । वनमल्लिकायाम् । সেউতী । र.मा । सुरामांसा । रा नि.व १२ । सुरायाम् । मे । ताम्बीशपर्णे । व मयमालाम् । वै निघ ।

**गन्धवर्णा** । स्त्री । महादलायाम् । वै निघ ।

**गन्धवल्कलम्** । क्ली । गुडत्वङ्नामगन्धद्रव्ये । দারচিনি । रा नि व ६ ।

**गन्धवल्लरी (वल्ली)** । स्त्री । सहदेव्याम् । प मु । पीतपुष्पदण्डोत्पलायाम् । ...नि.पो... ।

र.मा । [चन्दने । हे च । वायौ । रा नि व २१।

**गन्धवहः (वाहः, क)** । पु। कस्तूरीमृगे ।

**गन्धव(वा)हा** । स्त्री । नासिकायां । रा नि व.१८ । हे च. ।

**गन्धवासिनी** । स्त्री । सुरामांस्याम् । वै निघ ।

**गन्धवाही (हन्)** । पुं । वायौ । रा नि.व.२१।

**गन्धविह्वलः** । पुं । गोधूमे । वै.निघ ।

**गन्धबीजः** । पु । कुलिङ्गनवृक्षे । वै निघ.। (जा) स्त्री । मेथिकायाम् । रा.नि.व ६ ।

**गन्धवीरा** । स्त्री । सल्लकीवृक्षे । वै निघ ।

**गन्धवृक्ष. (क)** । पु । शालवृक्षे । सर्ज्जवृक्षे । रा नि व ८ । शाकतरौ । वरुणवृक्षे । वै निघ ।

**गन्धवेधिका** । स्त्री । कस्तूर्य्याम् । वै.निघ ।

**गन्धव्याकुलम्** । क्ली । कक्कोले । श च. ।

**गन्धशटी** । स्त्री। स्वनामख्यातौषधौ । गन्धपला श्याम् । গন্ধশটী, গন্ধপলাশী । श.र । See गन्धपलाशी । [व.०।

**गन्धशाकम्** । क्ली । गौरसुवर्णशाके । रा नि

**गन्धशालिः** । पुं । सुगन्धशालिधान्यविशेषे । সুগন্ধ ধান, কলমাশালি । प मु । गुणा — म धुर अतिशय पित्तदाहार्त्तिविषमरुत्शान्तिकरः स्वल्पकर गर्भस्थिरसादायक ईषद्वातकर पुष्टि कर ईषत्कफकर बलदश्च । रा नि व.१६ ।

**गन्धशुण्डिनी** । स्त्री । छुछुन्दर्य्याम् । रा नि व.१६ । [हारा. ।

**गन्धशेखरः** । पु । कस्तूर्य्याम् । मृगनाभि ।

**गन्धसम्भवा** । स्त्री। सुगन्धशाली। रा नि व.१६

**गन्धसारः** । पु । चन्दनसामान्ये । प मु । श्री खण्डचन्दने । শ্বেত চন্দন । रा नि व १२ । "म लयाद्रौ गन्धसार ।" सा को । मल्लिकायाम् । रा. नि व ६ । मुद्गरपुष्पवृक्षे । रा.नि व.१० । ...वृक्षे । वै.निघ. ।

**गन्धसारणः** । पु । छुछुन्दर्य्याम् । र.मा. ।

**गन्धसूची** । स्त्री । कामातवे । मं चामाचौ । वै निघ. ।

**गन्धसूयी** । स्त्री । छुछुन्दर्य्याम् । वै निघ.।

व ४ । रम्भवशी । रा नि व ७ । वंशलोचनायाम् । বংশলোচন । গুড়ত্বচি । সু সূ.৪৪অ । वर्मी । चम. ।

**त्वक्सारनिर्यासविषम्** । क्ली । स्थावरवि षभेदे यस्य त्वक्सार निर्यासश्च विषम् । तानि सप्त यथा—अन्त्रपाचककर्त्तरीयसौरीयककरघाट करम्भनन्दनवराटकानीति । "त्वक्सारनिर्यासविषै रुपयुक्तैर्भवन्ति हि । आस्यदौर्गन्ध्यपारुष्यशिरोरुक् कफसंस्रवाः ॥" सु.कल्प २अ. । [नि व ४ ।

**त्वक्सारभेदिनी** । स्त्री । क्षुद्रचञ्चुक्षुपे । रा.

**त्वक्सारा** । स्त्री । वंशरोचनायाम् । रा नि. व ६ । [লবুন গাছ । भा. ।

**त्वक्सुगन्धः** । पुं । नागरङ्गवृक्षे । নারাঙ্গী

**त्वक्सुगन्धा (न्धिका)** । स्त्री । सूक्ष्मैलायाम् । एलवालुके । वै निघ । जटा । [निघ. ।

**त्वक्स्वाद्वी** । स्त्री । त्वक्सारे । দারচিনি । वै

**त्वक्स्वाप.** । पु । स्पर्शाज्ञतायाम् । निदा ।

**त्वक्क्षीरम्** । क्ली । तवक्षीरे, वंशलोचनायां । वै निघ २भ कास चि । [याम् । रा नि व ६ ।

**त्वक्क्षीरी** । स्त्री । क्षीरशुक्लायां, वंशरोचना-

**त्वगङ्कुर.** । पुं । रोमाञ्चे । त्रिका. ।

**त्वगाक्षीरा (री)** । स्त्री । वंशलोचनायाम् । जटा । चम । [रा.नि व १८ ।

**त्वगूर्म्मि** । स्त्री । मल्याम् मांसम्लेलतायाम् ।

**त्वग्गन्धः** । पुं । नागरङ्गवृक्षे । নারঙ্গ । रा नि व ११ । [म्ब । रा नि व १८ ।

**त्वग्जम्** । क्ली । रक्तधातौ । रक्त । कैश गी

**त्वग्दोषः** । पुं । चर्म्मरोगे, शीतपित्तोदर्दकुष्ठ स्फोटादौ । চর্ম্মরোগ, ফোঠানি । निदा ।

**त्वग्दोषापहा** । स्त्री । सोमराज्याम् । रा नि. व.४ ।

**त्वग्दोषारिः** । पु । हस्तिकन्दे । रा.नि.व ७ ।

**त्वग्भी** । स्त्री । चर्म्मचटके । চামচিকি । वै निघ ।

**त्वग्भेद.** । पु । क्षये । वै निघ ।

**त्वचम्** । क्ली । गुड़त्वचि । দারচিনি । गुणा —गुरु शीत कफकासघ्न शुक्रामश्मन कण्ठशोष नघ्न । रा नि व ६ । सि यो र पि चि खण्डखाद्य लौहे ।

**त्वचा** । स्त्री । मिष्टवल्कले । দারচিনি । श र.।

**त्वचाङ्ग.** । पु । नागरङ्गवृक्षे । रा नि व.११ ।

**त्वचापत्रः** । पुं । हिङ्गुवृक्षे । क्ली । त्वचायाम् । দারচিনি । श.र ।

**त्वचिसार.** । पुं । वंशे । मद व.७ ।

**त्वचिसुगन्धा** । स्त्री । क्षुद्रैलायाम् । द्वारा.।

**त्वच्यगणः** । पु । त्वक्प्रसाधनवर्गे तैलादौ । यथा—"तैलन्तु नवधा प्रोक्त बाकुची चक्रमर्दकं । स्थौणेय पर्पटी सक्षा त्वच्योऽयं गण उच्यते ॥" चर्क ।

**त्वरारोहः** । पुं । पारावते । वै निघ. ।

**त्वरितका** । स्त्री, पुं (क) । शीघ्रपाकिशालि धान्यभेदे । सु.सू ४६अ ।

**त्वट(ष्ट्र)म्** । क्ली । ताम्रे । वै निघ ।

**त्वटा (ष्ट्री)** । स्त्री । ब्राह्मीशाके । वै निघ. ।

**त्वाचम्** । क्ली । त्वक्तैले । দারচিনির তেল । गुणा —"वह्निमथामिलहरमाधानाक्षेपनाशनम् । वान्तुररक्तिमप्रशमन सद्यादि दशनार्त्तिभित् । त्वाचं तैल रज सापि तोये चिन निमज्जति ।" चनि.।

---

# थ

**थः** । पुं । पर्व्वते । भि । रोगविशेषे । भयदे । म र. ।

**थुत्कारः** । पुं । निष्ठीवनशब्दानुकरणशब्दे ।

**थुथुक्रत** । पु । पक्षिविशेषे । धूङ्गि পাখী । वै निघ ।

**थौडनम्** । क्ली । आच्छादने । वै निघ. ।

**थौनेयक:** । पुं । ग्रन्थिपर्णे । গেঁঠিয়ালা । च चि.२७ वचतैले । च.उ.विष चि. ।

**दग्धेष्टका** । स्त्री । अग्निदग्धेष्टकायाम् । पाका इट, झामा । द्वारा ।

**दण्ड** । पु । ४ हस्तमाने । अश्वे । यष्टिकायाम् । लाठी, छडि ।

**दण्डक** । पु । वातव्याधिविशेषे । तल्लक्षण — "पाणिपादशिरःपृष्ठश्रोणिस्तम्भातिमारुत । दण्डवत् स्तब्धगात्रस्य दण्डक सोऽनुपक्रम ॥' भा । म्रदे । सु कल्प ७श । वा उ ५ श ।

**दण्डकन्दः (क)** । पु । धरणीकन्द । रा नि व ७ । [काक । हेच ।

**दण्डकाकः** । पु । स्वनामख्यातकाके । दाँड

**दण्डधारणम्** । क्ली । यष्टिधारणे । गुणा "शुन सरीसृपव्यालविषाणिभ्यो भयापह । श्रम स्खलनदोषघ्न स्थविरे च प्रशस्यते सत्त्वोत्साहबल स्थैर्यधैर्यवीर्यविवर्द्धन । अवष्टम्भकरश्चापि भय घ्नम् । सु चि २४श । खलत सम्मतिष्ठानम् अवष्टम्भ मनुवारण भयघ्नमायुष्यञ्च । राज ।

**दण्डपात (ती)** (इन्) । पु । सन्निपात ज्वरविशेषे । लक्षण — "नक्त दिवा न निद्रामुपैति यस्तान्त मूढधीनमस । उत्थाय दण्डपाती भ्रमा तुर सव्यती भ्रमति ॥' भा म १भ ।

**दण्डपाल.** । पु । श्वेतशफरमत्स्यविशेषे । डान्‌कोणा माछ । द्वारा ।

**दण्डपालक** । पु । दण्डमत्स्य । डानकोणा माछ । मकुलमत्स्ये । शउल माछ । द्वारा ।

**दण्डपाली** । स्त्री । तुलायन्त्रे । दाँड़पाल्ला । च मृ १५श ।

**दण्डबालाध.** । पु । हस्तिनि । श र ।

**दण्डमत्स्य** । पु । स्वनामख्यातमत्स्य । दाँड का माछ । द्वि दण्डार्थे । गुणा —"दण्डमत्स्यो रसे तिक्त पित्तरक्तकफ हरेत् । वातसाधारण प्रोक्त पक्वलो बलवर्द्धन ॥' सा । कफवायुपित्त घ्न तिक्त लघुश्च । राज १प । [वै निघ ।

**दण्डमाताङ्ग** । पु । नगरे, पिण्डीतगरे ।

**दण्डयाम** । पु । दिवसे । वै निघ ।

**दण्डवृत्त (क)** । पु । स्नुहीवृक्षे । सिजु गाछ । रा नि व ८॥ ।

**दण्डहस्त (स्ती)** (इन्) । पु । तगरपुष्पे । टगर फुल । रा नि व १०।२२ । पिण्डीतगरे । त गरपादुका । वै निघ ।

**दण्डा** । स्त्री । नागबलायाम् । वै निघ ।

**दण्डापतानक** । पु । वातव्याधिभेदे । लक्षणम् — "कफान्वितो यदा वायुर्धमनीष्वेव तिष्ठति । स दण्डवत्स्तम्भयति कृच्छ्रो दण्डापतानक ॥" सु नि १श ।

**दण्डालु** । पु । स्वनामख्यातालुविशेषे । थाम आलु । पसु । "ताम्बूलपात्रा दण्डालु रिति । द्रव्याभिधानम् । [कृति तके । रा नि व १५ ।

**दण्डाहतम्** । क्ली । पादजलेन विभागदधि

**दण्डिक** । पु । दण्डमत्स्य । डानकोणा माछ ।

**दण्डिका** । स्त्री । ग्रीवाकण्ठे । वै निघ ।

**दण्डी** (इन्) । पु । दमनकवृक्षे । मना । रा. नि व १० ।

**दण्डोत्पलम्** । क्ली । वृक्षविशेषे । दण्डकलस, डानकुल, डानपोला । द्वि डानिकुडे । मं सहदेवी । तत्र पीतश्वेतरक्तपुष्पभेदेन त्रिधा भवति । र मा । गुणा —श्वासकासक्षयघ्नम् अग्नि दीपिकरश्च । राज ।

**दण्डोत्पला** । स्त्री । पीतपुष्पदण्डोत्पल डान पाल, डानकुनी । र मा । भैष श पि चि बृहत् युवतीगुल्याम् । "दण्डोत्पलाया मूलानि ।" सा को दूर्वाद्यतैले । वै निघ भजी चि भल्लातकादिके ।

**दत्** । पु । दन्ते । श च ।

**दद्रु (क)** पु । क्षुद्रकुष्ठभेदे । दाद । लक्षण यथा—"सकण्डूरागपिडक दद्रुमण्डलमुद्गतम् । मा नि । (क) कच्छपे । श र ।

**दद्रु(द्रू)घ्न.** । पु । चक्रमर्दक्षुपे । चाकन्दा गाछ । रा नि व ४ । भा कुष्ठ चि ।

**दद्रुघ्नपत्रम्** । क्ली । दद्रुमर्दपत्रे । श चि ।

**दद्रु(द्रू)ण** । त्रि । दद्रुरोगिणि । श्रम । श. टी र । [नी । तैलिनीकीटे । रा नि व १९ ।

**दद्रुनागिनी** । स्त्री । वृक्षविशेषे । नागमन्द

**दद्रुमर्दी** (इन्) । पु । (Cassia alata)

छाना। र.मा.। "दध्ना सह पयः पक्वं सा भवेद् धिकूर्चिका।" प.प्र.२ख.। अत्र दधि दुग्धं समा भं भाव्यम्। गुणाः—"वातघ्नी ग्राहिणी रुचा दु र्जरा दधिकूर्चिका।" राज.।

**दधिचारः** । पु। दधिमन्थनदण्डे। हारा.।

**दधिजम्** । क्ली। दधनि। नवनीते। रा.नि व.१५। [रा.नि.व.१५।

**दधिजलम्** । क्ली। मस्तुनि। दयेर मात्। ।

**दधित्थः** । पु। कपित्थवृक्षे। र.मा। च.सू. १ष.। क्ली। कपित्थफले। च.द.१२व। सि.यो. ग्रहदाह-चि। च.द.विदार्यादिलिपे। "दधित्थं श्रीफलक्रम्।"

**दधित्थाख्यः (ह्वः)** । पु। धूपविशेषे, सर सद्रवे। लोबान् इति लोके। र.मा।

**दधिनाम (कम्)** । क्ली। कपित्थफले। क येत् वेल। सि.यो.हिक्काश्वास-चि.। "काश्मीर्यं दधिनाम च।" पुं (मा)। कपित्थवृक्षे। च.द.।

**दधिपुष्पिका (ष्पी)** । स्त्री। कटभीवृक्षे। कट्फलाम्। रा.नि.व.१२। श्वेतापराजितायाम्। रा.नि.व.३। शूकशिम्ब्याम्। आलाकुशी। वै. निघ.। तन्नामकफलशाकविशेषे। চিচিঙা, চেঁ পো। हि कुडिरी। म गोड़ीकुडिली। कं काक खोला, कुकरी। गुणाः—कटुः मधुरा शीतला रक्तवातविनाशी वातकरी गुरुः शरीरवर्धी च। रा.नि.व.७। बीजगुणाः—गुरु हृद्यं वर्ण्यं मलघ्न मकं कफाग्निमान्द्यकरणं वातपित्तहरञ्च। वै.निघ.।

**दधिपूपः (कः)** । पुं। दधिवटके। दयेर बड़ा। वै.निघ.।

**दधिफलः** । पुं। कपित्थवृक्षे। रा.नि.व.११।

**दधिभवम्** । क्ली। नवनीते। ननि। वै.निघ.।

**दधिमण्डः (स्तु)** । पुं, क्ली। दधिजले। दधि-र मात्। र.मा.। गुणाः—"मस्तु क्लमघ्नं बल्यं लघु भक्ताभिलाषकृत्। स्रोतोविशोधनं ह्लादि च कफतृष्णानिलापहम्। अवृष्यं प्रीणनं शीघ्रं भिनत्ति म लसञ्चयम्।" भा.। "अंचार्यं दधिपलिदं क्षमहरं वर्ण्यं कषायं सरं भुक्तिच्छेदकरं हरीदररुचितृष्णा .... मार्दवं। श्रोत.शुद्धिकरं प्रचालिग्नकरं रिष्ट श्लेष्मानिलघ्नं पाण्डुश्वासविकारगुल्मशमनं मस्तु प्रशस्तं लघु।" रा.नि.व.१५।

**दधिमण्डातकम्** । क्ली। दधिमस्तुनि। च, चि.१८श.पञ्चकोलघृते। [वै.निघ.।

**दधिमण्डोद्भवम्** । क्ली। नवनीते। ननि।

**दधिलेहः** । पु। दधिसरे। दयेर सर, मा थो। र.मा.।

**दधिवटी** । स्त्री। औषधि। ইহাতে শুঁঠ, হ-রিতাল শুঁঠ, ও ঝুলে পারা, জীমলাজরসে গন্ধক, শোধন করিবে। পারা ১ তো. গ-ন্ধক ১ তো. ইহার কজ্জলি, হরিতাল, বিষ, হুঁতে, এলবালুক, অভ্র, থাপর, স্বর্ণমাক্ষী, কান্তলৌহ প্রত্যেকে ॥০ তো. নিসিন্দা, ল-তাফট্কী, অপরাজিতা, জয়ন্তী ও চিতার মূল, ইহাদের রসে ভাবনা। বটী ১ রতি। भैष.। कज्जलि १तो. हरितालं, विषं तुत्थम् एलबालुकम्, अभ्रकम्, खर्परं स्वर्णमाक्षिकं लौहं एषां प्रति ॥० तो.। निर्गुण्डीजयन्तीज्योतिष्मती-चित्रकरसेन क्वाथेन वा भावयेत्।

**दधिवास्तुका** । स्त्री। गीदलहरितादि। दु-रालभाभेदे। वै.निघ.।

**दधिशोणः** । पुं। शुक्रवानरे। दर्वीकरसर्प-विशेषे। सु.कल्प.४ष.। See सर्पः। शीलाङ्गुल-वानरे। मुख पोड़ा। त्रिका।

**दधिसक्तवः** । पुं (बहु)। दध्युपसिक्तसक्तुषु। दईमाखा छातु वा ग्रसाना। भम.।

**दधिसक्तुः** । पुं। रसालायाम्। प.प्र.।

**दधिसरः** । पुं। दध्यग्रभागे। दधिर सर। वै.निघ.। See दधि।

**दधिसारम्** । क्ली। नवनीते। हे.च.।

**दधिस्नेहः** । पुं। दधः स्नेहभागे, दधिसरे। त्रिका.। [See तैलपर्णी।

**दधिसहा** । स्त्री। सरलवृक्षनिर्यासे। श.चि.।

**दधिस्वेदः** । पुं। तक्रे। घोल। जटा.।

**दधीचा(च्या)स्थि** । क्ली। हीरके। त्रिका.।

**दध्ययम्** । क्ली। दधिसरे। वै.निघ.।

**दध्यङ्कः** । पुं। घृतवृक्षे। त्रिका.।

**दन्तशङ्कुः** । पु । तीक्ष्णकण्टकप्रथमयवपत्रमुखे दन्ताहरणार्थे शस्त्रभेदे । "शङ्कुवत्त मुखं तस्य कार्य्यमर्द्धाङ्गुलायतम् । चतुरस्रं समञ्चैव तीक्ष्णधारं समाहितम् । दन्ताय तस्य कर्त्तव्यं शस्त्रं व्रीहिमुखाकृति । कपालिकां शर्कराञ्च दन्तानां तेन शोधयेत् ॥" सु सू ८ष. । सु टी ड ।

**दन्तशट.** । पु । दन्तशठे । भ टी म ।

**दन्तशठ.** । पु । कपित्थवृक्षे । जम्बीरवृक्षे । रा नि व ११।२२ । चाङ्गेर्य्याम् । आम्रातकवृक्षे । कर्म्मरङ्गवृक्षे । मे । तिन्तिडीवृक्षे । वै निघ ।

**दन्तशठा (ठी)** । स्त्री । चाङ्गेर्य्याम् । आम्‌रुल । रा नि व,५ । तिन्तिड्याम् । भा ।

**दन्तशब्दः** । पु । सहजदुष्टबालकस्य दन्तपीडनरोगे । দাঁত কড়মড় রোগ । लक्षणम्—"क्रुद्धैर्निरीक्षते दन्तान् खादेत्कूजति जृम्भते ।" मा नि. ।

**दन्तशर्करा** । स्त्री । दन्तगतमुखरोगे । দাঁতের পাথুরি । लक्षणं यथा—"मलो दन्तगतो यस्तु पित्तमारुतशोषितः । शर्करेव खरस्पर्शो सा ज्ञेया दन्तशर्करा ॥" मा नि ।

**दन्तशाणम्** । क्ली । दन्तघर्षणे, दन्तनियुक्तद्रव्ये । মাজন, মিসি । त्रिका । [श र. ।

**दन्तशिरा** । स्त्री । दन्तवेष्टे । দাঁতের মাড়ি ।

**दन्तशूलम्** । क्ली । दन्ततोदे । दन्तार्बुदे । দাঁতের শূলুনি । रा नि व.२० ।

**दन्तशैथिल्यम्** । क्ली । वातजदन्तरोगविशेषे । দাঁত আল্‌গা । च सू २०ष ।

**दन्तशोफ** । पु । दन्तार्बुदरोगे । रा नि व २० ।

**दन्तहर्ष.** । पु । दन्तगतमुखरोगे । দাঁত শিহরা, টকা । लक्षणं—"शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । पित्तमारुतकोपेन दन्तहर्षः स नामतः ॥" मा नि । "दशनाः शीतमुष्णञ्च सहन्ते स्पर्शनं न च । यस्य तं दन्तहर्षन्तु व्याधिं विद्यात् समीरणात् ॥" सु । "शीतरूक्षप्रवाताम्लस्पर्शानामसहा द्विजाः । तत्र स्युर्वातपित्ताभ्यां दन्तहर्षः स कीर्त्तितः ॥" भा. । [का । जटा. ।

**दन्तहर्षक (ण)** । पु । जम्बीरवृक्षे । वि

**दन्ताघात** । पुं । निम्बूकवृक्षे । গোঁড়া লেবুর গাছ । रा नि,व ११ ।

**दन्तायुध** । पु । वनशूकरे । त्रिका ।

**दन्तार्बुद** । पु,क्ली । दन्तरोगविशेषे । দাঁতের গোড়ার আব্ । रा नि व २० ।

**दन्तावल.** । पु । करिणि । अम. । [श.र. ।

**दन्तिका (जा)** । स्त्री । दन्तीवृक्षे । अम ।

**दन्तिनी** । स्त्री । दन्तीक्षुपे । रा नि व ६ । वै निघ २भ कृमि चि चित्रकादितैले ।

**दन्तिनीवीजम्** । क्ली । जैपालवीजे । জয়পাল । रा नि व ६ । [सु सू ३७ष. ।

**दन्तिला** । स्त्री । नागदन्त्यां । হাতিশুঁড়ে ।

**दन्ती** । स्त्री । (Baliospermum montanum Syn Croton polyandrum) स्वनामख्यातक्षुद्रक्षुपे । দন্তী গাছ । हि दन्तम् । म दान्ति । क दन्ति । ते दन्तिचेट्टु, कोण्डआमुदुम् । वम् जामालगोटा । ह्रस्वदीर्घभेदेन दन्ती द्विधा । तयोर्ह्रस्वा उदुम्बरदलाकारा, अन्या एरण्डदला । सा. गुणा —कटूष्णा शूलघ्नी आमाशयाश्मरीघ्नी दीपनी च । अन्या कटूष्णा रेचनी कृमिघ्नी शूलकुष्ठामघ्नी गुदामयघ्नी च । रा नि व ६ । 'दन्तीद्वयं सरं पाके रसे च कटु दीपनम् । गुदाङ्कुराश्मशूलास्रकण्डूकुष्ठविदाहनुत् । तीक्ष्णोष्णं हन्ति पित्तास्रकफशोथोदरक्रिमीन् । तद्वद्दन्तीफलं तु स्यात् मधुरं रसपाकयोः । शीतलं सृष्टविण्मूत्रगरशोथकफापहम् ॥" भा । वा सू १५ष श्यामादि । "श्यामा दन्ती द्रवन्ती ।" सु सू ३८ष । च सू २ष,वमने । जैपालवीजे । वै निघ,२भ शोथ चि. । "क्वाथेन दन्तीचिवृतीद्भवेन ।" वा चि महानाराचरसे । ४र्थ विषगर्भतैले । पुं (दन्त्) । हस्तिनि । प सु । [वै निघ ।

**दन्तीफलम्** । क्ली । पिप्पल्याम् । दन्तीवीजे ।

**दन्तीफलसमाकृतिः** । पु । चित्रकवृक्षे । পেস্তা গাছ । वै निघ ।

**दन्तीवीजम्** । क्ली । जैपालवीजे । रा नि व ६ । वै निघ २भ अर्श चि महोदधिवट्याम् । वा ८ष, सततसन्नीवनीरसे, वातगजकेशरीरसे ।

**दन्तीहरीतकीगुड़ः** । पुं । गुल्मचिकित्सायां पाठ —"जलद्रोणे विपक्तव्यं विंशतिः पञ्च चाभया । दन्त्याः पलानि तावन्ति चित्रकस्य तथैव

च। तेनाष्टभागशेषेण पचेद्दन्तीसमं गुडं। तच्चाभयं त्रिवृच्चूर्णं तैलाच्चापि चतुष्पलं। पलमेकं कणाशुण्ठ्योः सिद्धे लेहे च शीतले। क्षौद्रं तैलसमं दद्याच्चातुर्जातपलन्तथा। ततो लेहपलं लिढ्वा जग्ध्वा चैकां हरीतकीम्॥" थोटलीबद्धहरीतकी २५, दन्तीमूलं २५ प. चित्रकमूलं २५ प. जलं ६४ श. शे. ८ श.। पुरातनगुडस्य २५ प. क्वाथेन गुडं गोलयित्वा पचेत्। पाके सिद्धे अवतार्य्य स्निग्धे सति त्रिवृच्चूर्णं ४ प. कणाशुण्ठ्योः प्र. पलं तिलतैलं ४ प प्रक्षेप्यम्। शीते मधु ४ प. गुडत्वक् एलातेजपत्रनागकेसराणां प्र. २ तो मिश्रणीयम्। मात्रा २ तो. हरीतकी १० श। रस.र.।

**दन्तुरः ।** त्रि। उन्नतदन्ते। नतानतेः। मे।

**दन्तुरच्छदः (त्वक्) ।** पुं। मातुलुङ्गवृक्षे। टावा गाछ। रा.नि.व ११। [निघ।

**दन्तोज्ज्वला ।** स्त्री। श्वेतजातीपुष्पवृक्षे। वै.

**दन्तोद्भेदः ।** पुं। बालदन्तोद्गमे। दाँत उठा। "दन्तोद्भेदः शिशोः सर्व्वरोगाणां कारणं मतं। विशेषाज्ज्वरविड्भेदकासच्छर्द्दिशिरोरुजाम्। अभिष्यन्दस्य पोथक्या विसर्पस्य च जायते॥" भा.म. ख.४भ.। [तानि २०। च.शा.७च.।

**दन्तोलूखलम् ।** क्ली। दन्ताधिष्ठानास्थनि।

**दन्दशः ।** पुं। दन्ते। वै.निघ.।

**दन्दशूकः ।** पुं। सर्पे। वै.निघ.।

**दमः ।** पुं। दमनकवृक्षे। वै.निघ।

**दमनम् ।** क्ली। दमनपुष्पे। मना फूल। मि. धो च.द.वा.व्या.चि.महाराजप्र.तैले। पुं। कुन्दवृक्षे। कुन्दफुलेर गाछ। रा.नि.व १०। दमनकवृक्षे। त्रिका। "दमनस्तुवरस्तिक्तो हृद्यो हृत्शुगन्धिकः। ग्रहणात् विषकृष्ठघ्नक्लेदकण्डूविदोषजित्॥" भा.।

**दमनकः ।** पुं। (Artemisia Scoparia or A. Indica.) दमा इति ख्याते पुष्पवृक्षे। मना गाछ। च.सु.। त्रिं दवना। पं दौना। गुणाः—शीतलः तिक्तः कषायः कटुकः हृद्दोषविदोषघ्नः विषविस्फोटघ्नश्च। अन्यच्च कच्छदमनः त्रैदोष्यशमनकारी वनदाही चानदोषहारी च। रा.नि.व.१०।

**दमनी ।** स्त्री। अग्निदमनीनामक्षुपे। शोना। रा.नि.व.४। नागदमन्याम्। नागदना। वै.निघ.।

**दमयन्ती ।** स्त्री। भद्रमल्लिकापुष्पवृक्षे। मल्लिका फूलेर गाछ। रा.नि.व १०। कर्कटिकायाम्। वै.निघ.।

**दम्पती ।** पुं (द्वि.)। जायापत्योः। वै.निघ।

**दम्भः ।** पुं। अतीसाररोगे दाहकर्म्मविशेषे। "नाभेर्द्व्यङ्गुलकादधोर्द्धशशिवद्वंशास्थिमूले तथा। दाह प्रज्वलितायसा कथितो दम्भो ग्रहण्यातुरे॥" तन्त्रान्तरम्।

**दम्भफलः ।** पुं। सेवफले। CEO। वै.निघ.।

**दम्भोरः ।** पुं। लावपक्षिणि। (भरत) मदिरे। वै.निघ.।

**दम्यः ।** पुं। दम्ये। वृषे। वै.निघ।

**दरः ।** पुं। गर्त्ते। वै.निघ.२भ मधुरस्य त्रिफलात्रिकादिकषाये। विषे। वै.निघ.। [४।

**दरकण्टिका ।** स्त्री। शतावर्य्याम्। रा.नि.व.

**दरदः ।** पुं। दलपत्रशाके। नटे शाक। प. सु.। क्ली। हिङ्गुलधातौ। रा.नि.व १३। र मा।

**दर्दराम्लः ।** पुं। मीनाक्षीने, वाग्दमलिशेषे। म.भा.।

**दर्दरीकः ।** पुं। भेके। मेघे। उज्ज्व.।

**दर्दुरः ।** पुं। पुनर्नवायाम्। इन्द्रगोपकीटे। वर्षाभ्वाम्। रा.नि व.१३। लघाभे। भीमाभ्रभेदे। रा नि.व.१३। र.चि.३प.। "वज्रिदर्दुरपुत्तिभेदक्रमात्।" प्रिकं। मि.। ज्ञालिसाक्रमेदे। वर्ष च टिकाद्यौगगुणः। च.सू १०च।

**दर्दुरच्छदा ।** स्त्री। ब्राह्मीक्षुपे। वै.निघ.।

**दर्दुरदला ।** स्त्री। मण्डूकपर्ण्याम्, सा च ब्राह्मी, शाकी, वरणीति महाराष्ट्रे ख्याता। पुनर्नवाहि टेश। भा.म १भ.विषमज्व.चि.। "इन्दुमिमतरोऽपि दर्दुरदला।"

**दर्दुरपर्णी ।** स्त्री। ब्राह्मीक्षुपे। वै.निघ.।

**दर्द्दुः (दर्द्रूः) ।** पुं। कच्छुरादे। ठोला गाई। रा.नि.व.८। महाकुष्ठभेदे। दाद। भा.नि.। स्त्री। दर्दुरीति। उज्ज्व.।

**दर्द्रुघ्नः** । पुं । चक्रमर्द्दवृक्षे । চাকন্দা গাছ । श.र. ।

**दर्द्रुघ्नपत्रम्** । क्ली । पत्रशाकविशेषे । নাদম ফিনৌ । चक्रमर्द्दपत्रे । চাকন্দা পাতা । হি চকবড । गुणाः—दोषहरम् अम्ल वातकफघ्न कण्डूकासकृमिश्वासदद्रुकुष्ठघ्नं लघु च । भा.पू.१भ. शा.व. । See दद्रुघ्नी ।

**दर्द्रु(द्रू)णः** । त्रि । दद्रुरोगिणि । श टी भ. ।

**दर्द्रु(द्रू)रोगी** (इन्) । त्रि । दद्रुरोगयुक्ते । श टी भ । [निकाः

**दर्पः** । पु । कस्तूरिकाहृषे । मे । उष्मणि ।

**दर्पणम्** । क्ली, पु । नेत्रे । जटा । आदर्शे । आर्शि । गुणाः—आयु श्रीकारित्व पापशमनत्व । राज.२प. ।

**दर्पपत्रकः** । पु । काशतृणे । वै.निघ. ।

**दर्पा** । स्त्री । कस्तूर्य्याम् । वै निघ. ।

**दर्भः** । पु । (Poa cynosuroides Syn. Eragrostis cynosuroides.) कुशतृणे । কুশ তৃণ । হি दाभ् । मे दुभ । अम. । सु सू ३८अ. । (Imperata cylindrica, Syn. Saccharum cylindricum,) उलुके । উলু, থাগড়া । प सु. । भा.सू.१५अ. वरुणादि. । "वहलपल्लवदर्भरुजाकरा. ।" च सू ४अ । काशतृणे । श.र. ।

**दर्भकः** । पुं । अश्वस्य पादरोगविशेषे । लक्षण —"मण्डूका विवर यस्य दर्भसुभ्रकरं भवेत् । तस्य दर्भक इत्युक्तो व्याधि कष्टचिकित्सित ॥" ज द २८अ. । [इ्रमिकाति । वै निघ. ।

**दर्भकुसुमः** । पुं । कृमिजाती । उदाकार

**दर्भपत्रः** । पु । काशतृणे । रा नि.व.८ ।

**दर्भपुष्पः** । पुं । तन्नामकदर्वीकरसर्पविशेषे । राजिमच्छर्पविशेषे । वैकरञ्जजातीयसर्पे । सु.कल्प. ४अ. । See सर्प. । कफजकृमिभेदे । च वि ७अ ।

**दर्भमूलम्** । क्ली । कुशमूले । कुशमूले । च द कटी वि. ।

**दर्भरः** । पु । नावपदिघ । वै निघ. ।

**दर्भवटम्** । क्ली । अन्तर्गृहे । त्रिका. ।

**दर्भाह्वयः** । पुं । मुञ्जतृणे । मूञ्ज । रा.नि.व८

**दर्व्विः (र्व्वी) (कः)** । स्त्री । सर्पफणायाम् । दर्व्विकायाम् । হাতা । अम. । श र ।

**दर्व्विका** । स्त्री । दर्व्याम् । হাতা । श टी. रा । कज्जलभेदे । काजल । तत्र सौवीराञ्जनतुल्यमयूरश्रीकरदर्विकासेव्यनीलमेदेन षट भवति । तल्लक्षणम् अञ्जनशब्दे द्रष्टव्यम् । पुराणम् । गोजिह्वायाम् । वै.निघ. ।

**दर्व्विपत्रिका** । स्त्री । गोजिह्वाया । দাডিয়া শাক । ज द १२अ. ।

**दर्वीकरः** । पु । सर्पजातिविशेषे । फणधर सर्प । लक्षण यथा—"रथाङ्गलाङ्गलच्छत्रस्वस्तिकाङ्कुशधारिण । फणिन. शीघ्रगतय, सर्पा दर्वीकरा मता ॥" वा उ.३६अ. । दर्वीकरोदा—कृष्णसर्पमहाकृष्णकृष्णोदरश्वेतकपोतवलाहकमहासर्पशङ्खपाललोहिताक्षगवेधुकपरिसर्पखण्डफणककुदपद्ममहापद्मदर्भपुष्पदधिमुखपुण्डरीकभ्रुकुटीमुखविष्किरपुष्पाभिकीर्णगिरिसर्पकृशसर्पश्वेतोदरमहाशिरालगर्दाशीविषाश्चेति । दर्वीकरस्य प्रथमे विषवेगे श्यावत्वं दुष्टस्य रक्त स्यात् । तथा मुखादौ श्यावता स्यात् । द्वितीये ग्रन्थय, तृतीये शिरोगुरुत्वादय, चतुर्थे ष्ठीवनादय, पञ्चमे सन्धिवेदना तन्द्रा पर्व्वभेद दाहः हिक्का च, षष्ठे हृत्पीडा, सप्तमे च मृत्युं प्राप्य स्कन्धादिभङ्ग. सर्व्वचेष्टानिवृत्तिश्च स्यात् । वा.टी.भरण ।

**दर्श.** । पु । अवलोकने । मे ।

**दर्शतः** । पु । सूर्य्ये । चन्द्रे । उणा. ।

**दर्शनम्** । क्ली । नेत्रे । रा नि व१८ । दर्पणे । स्वप्ने । मे. ।

**दर्शनी** । स्त्री । तैलकीटके । वै.निघ. ।

**दर्शनीयः** । पुं । अर्कवृक्षे । श्वेतार्के । वै निघ.

**दर्शनोज्ज्वला** । स्त्री । श्वेतजातीवृक्षे । वै. निघ ।

**दर्शविपत्** । पुं । चन्द्रे । छाया ।

**दलम्** । क्ली । तमालपत्रे । रा नि.व ६ । वाग्भ. । च.द.नि.गो.गुरुमर्व्वरभूर्णे । "पूर्व्वेद्दपा-

मरिचनागदलत्वगेला ।" पत्रे । পাতা । त्रिका. ।

**दलकोमलम्** । क्ली । पद्मे । वै निघ ।

**दलकोषः** । पुं । मल्लिकापुष्पवृक्षे । वै.निघ. । कुन्दपुष्पवृक्षे । श.मा. ।

**दलनिर्म्मोकः** । पुं । भूर्जवृक्षे । श.मा ।

**दलपः** । पुं । सुवर्णे । उणा. ।

**दलपुष्पा** । स्त्री । केतकीवृक्षे । কেয়া গাছ । रा नि व १० । श्वेतकेतक्याम् । শ্বেত কেয়া । वै. निघ. ।

**दल(अर्द्ध)लाङ्गलकः** । पु । तदाकारच्छेद विशेषे । य एकस्मिन् पार्श्वे छेद स दललाङ्गल काख्य. । वा.उ.२८अ । "ज्हस्वमेकतर यच्च सो ऽर्द्धलाङ्गक स्मृतः ॥" सु चि.८अ ।

**दलशालिनी** । स्त्री । कञ्चुकशाके । কচু শাক । वै.निघ. ।

**दलसायसी** । स्त्री । श्वेततुलसीवृक्षे । वै.निघ ।

**दलसारिणी** । स्त्री । केमुकवृक्षे । কেউ গাছ । र.मा. । [कण्टके । কাঁটা । हारा ।

**दलसूचिः** । पुं । कण्टकवृक्षे । কাঁটা গাছ ।

**दलस्नसा** । स्त्री । पत्रशिरायाम् । পাতার শিরা । है.ध. । [भा. ।

**दलहीनफला** । स्त्री । सुलेमानीखर्ज्जूर्य्याम् ।

**दला** । स्त्री । नगवल्लयाम् । নালিতা । प सु । अजमोदायाम् । शाकुनी, वनयमानी । रा.नि व.६ ।

**दलाग्रलोहिता** । स्त्री । चिल्लीनामपत्रशाके । रा.नि,व ७ । पलाग्रलोहितापि पठ्यते ।

**दलाढ़कः** । पुं । नागकेशरवृक्षे । নাগেশ্বর গাছ । गैरिके । গেরিমাটী । समुद्रफेने । वार ण्यतिलकवृक्षे । বন তিল । काके । पृश्निपर्ण्यां । চাকুলে । चक्रवाके । मे. । करिकर्णे । कुन्दवृक्षे । शिरीषवृक्षे । है.च. ।

**दलाढ़की** । स्त्री । फणिज्झकवृक्षे । वै.निघ. । पृश्निपर्ण्याम् । চাকুলে । मे. ।

**दलाढ्यः (क.)** । पु । कुन्दपुष्पवृक्षे । वै.निघ. । पङ्ककर्द्दमे । मन्दनिम्नाद्भूपा । त्रिका. ।

**दलामलम्** । क्ली । मूर्व्वायाम् । মুর্গা । मरु- वकवृक्षे । मरुआ । दमनकवृक्षे । দনা । मे । म- दनवृक्षे । ময়না গাছ । श.र. ।

**दलाम्लम्** । क्ली । चुक्रनामपत्रशाके । চুকা শাক । रा नि व ७ । [श.३ ?

**दलाह्वम्** । क्ली । तमालपत्रे । তেজপত্র । मद.

**दलिकम्** । क्ली । काष्ठे । है.च. । [त्रिका. ।

**दलेगन्धः** । पु । सप्तपर्णवृक्षे । ছাতিম গাছ ।

**दवः** । पु । अग्नौ । अ.टी.नी. । उपतापे । ह वथौ, मुखताल्वोष्ठानां दाहे । वै निघ. ।

**दवदग्धकम्** । क्ली । कत्तृणे । गन्धतृण वा नागकर्पूरे । रा.नि व ८ ।

**दवथुः** । पुं । दवे, चक्षुरादिभ्यस्तीव्रोष्मप्रवर्त्ती । मा ज्व चि.१अ । "उद्रिक्तपित्ते दवथु ।"

**दशजटा** । स्त्री । दशमूले । वै.निघ.२भ वा. व्या चि.रास्नादिचूर्णे ।

**दशनः** । पु । दन्ते । अ टी.भ. ।

**दशनवासः** । क्ली । ओष्ठे । अम. ।

**दशनवीजः** । पु । दाडिम्ववृक्षे । वै निघ. ।

**दशनाढ्या** । स्त्री । चाङ्गेर्य्याम् । আমরুল । चुक्रशाके । চুকাপালং । श च. ।

**दशनोच्छिष्टः** । पुं । नि श्वासे । मे. ।

**दशपु(पू)रम्** । क्ली । जलमुस्तायाम्, कैवर्त्तमु स्तके । अम. । अ टी भ. ।

**दशमूत्रकम्** । क्ली । दशविधमूत्रे । हस्तिम हिषोष्ट्रगवाजमेषाश्वगर्दभनरनारीणां मूत्रे । रा. नि व २२ ।

**दशमूलम्** । क्ली । विल्वादिदशविधवृक्षमूले, पञ्चमूलीद्वये वा । "विल्वश्योनाकगाम्भारीपाटला गणिकारिका । शालपर्णी पृश्निपर्णी वृहतीद्वय- गोक्षुरम् ॥" रा नि.व.२२ । वर्गोऽयं वातघ्न. । वा.सू.१५अ,भद्रदार्व्वादौ । गुणा.—दशमूल त्रि दोषघ्न श्वासकासशिरोरुज. । तन्द्राशोथज्वरानाह पार्श्वपीड़ारुचीर्हरेत् ॥" भा. । सूतिकारोगहरम् । चर्क. ।

**दशमूलघृतम्** । क्ली । घृभे घृतम् । गव्यघृतं

**दक्षिणवायुः** । पुं । मलयमारुते । दक्षिणवा यु । गुणा —"मधुरश्चाविदाही च कषायानुरसो लघु । दक्षिणो मारुत श्रेष्ठ चक्षुष्यो बलवर्द्धन । रक्तपित्तप्रशमनो न च वातप्रकोपन ॥" सु सू ।

**दक्षिणायनम्** । क्ली । रवेर्दक्षिणतो गतौ । यदा रवि कर्कटराश्यवस्थितो भवति तदा तदा रभते । तच्च श्रावणादिमासषट्के भवति । "कर्क टावस्थिते भानौ दक्षिणायनमुच्यते ।" सु सू ।

**दक्षिणावर्त्तकी** । स्त्री । वृश्चिकाल्यां । वि छाति गाछ । रा नि व ९ । मेषशृङ्गी । वै निघ ।

**दक्षिणावर्त्तफला** । स्त्री । वृद्धौषधे । वै निघ. ।

**दक्षिणावर्त्ता** । स्त्री । मेषशृङ्गी । रा नि व,६।

**दक्षेयः** । पु । वृषे । वै निघ ।

**दाडकः** । पु । दन्ते । शब्दार्थकल्पतरु ।

**दाड़िमः** । पुं । एलायाम् । मे । (Punica Granatum) The Pomegranate. स्व नामख्यातफलवृक्षे । दाडिम गाछ । हि आनार । म दाडिम । क दाडिम्ब । तें डानिम्मचेट्टु । उत् दालिम्ब । ता. मादलइचेड्डि । गुर्ज. डालम । फलगुणा —मधुराम्लकषाय कासवातकफपित्तघ्न ग्राहि दीपन लघूष्ण शीतल श्रमघ्न रुचिकरम् । दाड़िमम् अम्लमधुरभेदेन द्विविध, तयो प्रथम वातकफहारि, द्वितीय तापहारि लघु पथ्यञ्च । रा नि व ११ । स्वादुस्वाद्वम्लकेवलाम्लभेदेन त्रिभेद मिच्छति भावप्रकाश —स्वादु त्रिदोषहर तृष्णा दाहज्वरघ्न हृत्कण्ठमुखदुर्गन्धघ्न तर्पण शुक्रल लघु कषायानुरस ग्राहि स्निग्धं मेधावलाहरम् । स्वाद म्लं —दीपनं रुच्य लघु किञ्चित्पित्तकरञ्च । अम्लन्तु —पित्तजनक वातकफघ्नञ्च । तन्मूलञ्च क्रिमिहरम्। भा १ प्रथम् अम्ल श्वासरुचिहराद्द कण्ठशोधनं पित्तकफविरोधकम् । राज. । "श्रेष्ठ वातादिकरु जहरे दाड़िमश्चामघ्नम् ।' अत्रि १०अ. । क्ली । दाड़िमफले । सि यौ हृद्दाहज्व चि ।

**दाड़िमत्वक्** । स्त्री । दाड़िमफलवल्कले । दा ड़िमेर थोसा । सि,यौ च सा चि उपप्लवादि ।

**दाड़िमपत्र(पुष्प)क.** । पुं । रोहितकवृक्षे । रोहा, बग्नी गाछ । रा.नि.व.८ ।

**दाडिमप्रियः** । पु । कीरे । शुक पक्षी । श्र र. ।

**दाडिमभक्षणः** । पु । शुकपक्षिणि । श्र.च. ।

**दाडिमाष्टकम्** । क्ली । ग्रहण्यां हितम् । "क र्षोन्मिता तुगाक्षीरी चातुर्जात द्विकार्षिकम् । य मानीधान्यकाजाजीग्रन्थिव्योष पलांशिकं । पला नि दाडिमादष्टौ सितायाश्चैकत कृतम्॥" च.द ।

**दाडिमी** । स्त्री । दाडिमवृक्षे , वै निघ. ।

**दाडिमीरसः** । पु । दाडिमाम्बुनि । च द. ।

**दाडिमीविषम्** । क्ली । दारुमीचनामकविष- भेदे । दार्व्बुक । प सु । [११]

**दाडिमीसार.** । पु । दाडिमवृक्षे । रा नि व.

**दाडि(डी)म्बः** । पुं । दाडिमवृक्षे । प सु. ।

**दाढ़ा** । स्त्री । दन्तभेदे । दाड़ । द्दे.च. ।

**दाढ़िका** । स्त्री । दाडी इति ख्याते मुखाव यवे । द्दे च ।

**दात्यूह** । पु । शुकपक्षिणि । प्र सु । डहुक पक्षिणि । डाक पाखी । गुणा —वातघ्न हृष्य बलद शुक्रद श्रमघ्न । अत्रि.२१अ. । चातक- पक्षिणि । त्रिका ।

**दात्यौहः** । पु । जलकाके, दातूहे । श्र र. ।

**दात्रम्** । क्ली । अस्त्रविशेषे । दा ।

**दाधिकः** । त्रि । दधिसम्बन्धिनि । क्ली । दधि- संस्कृतभक्ते । भा म १भ अग्निद्र यू चि ।

**दानम्** । क्ली । कुडुमे । च.द वा व्या चि १८म प्रती प्रसारणीतैले । गजमदे । मे । तरुकोटरजम धुनि । कुट्टेर मधु । गुणा.—कष दीपनं कफ च्छर्दिमेहघ्नञ्च । राज. । [निघ ।

**दानवप्रिया** । स्त्री । नागवल्लीलतायाम् । वै.

**दान्तः** । पु । दमनकवृक्षे । दना गाछ । रा. नि व १० ।

**दामनः** । पु । दमनकवृक्षे । वै निघ. ।

**दामबन्ध. (न.)** । क्ली । व्रणबन्धनविशेषे । लक्षण—"दामाकृतिपनुपादो बन्ध स्याद्दामस- ज्ञित ।" इति । सु सू १८म. । दाम अनेकगोष- श्वानोरज्जु । दोडा । तदाकार चतुष्पादयुक्त. दामबन्ध । च.द. ।

**दामाञ्चलम्** । क्ली। अश्वादेः पादबन्धनरज्जौ। हे.च.।

**दामोदरः** । पुं । व्याख्यबलाख्यवैद्यकग्रन्थप्रणेतरि। [नि व.१८।

**दाम्भिकः** । त्रि। वाचाले। पुं । वके। रा.

**दायकः** । पुं। बालके। मे.। पुत्रे। हे च.।

**दारकः** । पुं। ग्राम्यशूकरे। रा नि.व १८। त्रि। विदारके।-वै.निघ.। हरिद्वर्णस्थावरविषभेदे। -चरि.श्लान ५६श.।

**दारकर्म्म** । क्ली। विवाहे। त्रिका.।

**दारणम्** । क्ली। कतकफले। निर्मली। अ.प्र.। व्रणविदारणद्रव्ये। ফোড়া গলান দ্রব্য। यथा—"चिरविल्वोऽग्निको दन्ती चित्रको हयमारक.। कपोतगृध्रकङ्कानां पुरीषाणि च दारणम्। क्षारद्रव्याणि यानीह क्षारो वा दारणम्परम्॥" सु। पु। कतकवृक्षे। वै.निघ.।

**दारदः** । पुं। हिङ्गुले। त्रिका.। पारदे। मे.। दरददेशीयविषे। विषमात्रे। अम.। [१८।

**दारबलिभुक्** । पुं। वकपक्षिणि। रा.नि.व.

**दारी** । स्त्री। पाददारिनामक्षुद्ररोगे। "परिक्रमणशीलस्य वायुरत्यर्थरूक्षयोः। पादयोः कुरुते दारीं सरुजां तलसंश्रिताम्॥" सु नि १३ष.।

**दारु** । पुं,क्ली। काष्ठे। अम। क्ली। दार्व्याम्। দারুহরিদ্রা। र सा स मेहमुद्गररसे। च द.पाण्डु चि। वै.निघ.२भ.च.सा चि पाठादिकषाये। वा.व्या.स्वल्पनारायणतैले। देवदारुणि। प सु.। सि.यो.सा.ज्व चि.अष्टादशाङ्गे। "भूनिम्बदारुदशमूल..।" च.द.ज्व.चि.अपराजिताधूपे। चा ज्व.राद्यादि। "रास्नाश्वादनीदारु।" दारुमूले। मार्मुल। रसा स.। पित्तले। मे.।

**दारुकम्** । क्ली। देवदारुणि। रा नि व.१२। वा.व्या,चि.। तैलदेवदारुणि। श्रीपर्णिवृक्षे। वै निघ.। [কদা। रा.नि व.११।

**दारुकदली** । स्त्री। काष्ठकदल्याम्। वन

**दारुगन्धा** । स्त्री। चीडानामकदेवदारुभेदे। रा.नि व १२। [दारुचकरोगे।

**दारुणः** । पुं। चित्रकवृक्षे। रा.नि.व.६।१२।

**दारुणकः** । पुं। क्षुद्रीभेदे। वरुणवृक्षे। वै.निघ.२भ.मूर्च्छा चि। क्ली। तन्नामकक्षुद्ररोगे। রুসী খুসকী। लक्षणं यथा—"दारुणा कण्डुरा रूक्षा केशभूमिः प्रपाट्यते। कफमारुतकोपेन विद्याद्दारुणकन्तु तम्॥" सु.नि.१३ष। [सु.।

**दारुणकर्म्म** । क्ली। मृदुव्रणानां कठिनीकरणे।

**दारुनिशा** । स्त्री। दारुहरिद्रायाम्। দারুহরিদ্রা। रा.नि.व.६। वै.निघ.२भ.मध्यमलाक्षातैले। च द वा.र.चि,मेह.चि,। "वत्सादनीदारुनिशा।"

**दारुपत्री** । स्त्री। हिङ्गुपत्राम्। रा.नि व.६।

**दारुपीता** । स्त्री। दारुहरिद्रायां। रा नि व ६।

**दारुफलम्** । क्ली। पेस्ता इति ख्याते फले। वै.निघ.। [গোনাপ। रा.नि.व.१८।

**दारुमत्स्या (ह्वया,ह्वा)** । स्त्री। गोधायाम्।

**दारुमूषा** । स्त्री। दार्मुज इति प्रसिद्धे स्थावरविषभेदे। दार्मुज। भा.म.१भ.ज्व.चि.।

**दारुमोचः** । पुं। स्वनामख्यातविषभेदे। मार्मुज। प.सु.।

**दारुविषम्** । क्ली। दारुमोचविषे। "सवेदा खुविष दारुविष पाषाणसंभकम्। सवेदा मझ मोदन्तदाडिमीस्फटिकादयः॥" प.सु।

**दारुसिता** । स्त्री। (Cinnamomum zeylanicum) दारुचिनीतिख्यातायां मधुरत्वचि। দারুচিনি। हिं दालचिनि। तें सन्नलिङ्गवा करुवा। गुणा.—"उक्ता दारुसिता स्वादी तिक्ता चानिलपित्तहृत्। सुरभि. शुक्ला वर्ण्या मुखशोषतृषापहा॥" भा.पू.वाजी.चि.।

**दारुहरिद्रा** । स्त्री। (Coscinium fenestratum. [Berberideae] Berberis Asiatica and other species.) स्वनामख्यातपीतकाष्ठविशेषे। দারুহরিদ্রা। हिं दारुहलदि, सारकेहलदि। कं मरदरिसिन। तें मनिपसुपु। ता. मरमञ्जिल। गुणा.—तिक्ता कटूष्णा व्रणमेहकण्डूविसर्पत्वग्दोषविषघ्नी कर्णाक्षिमुखरोगघ्नी च। रा नि.व ६। "दार्व्वीनिशागुणा. किञ्चित्कर्णाक्षिरोगनुत्।" भा। कफपित्तशोषघ्नी विशेषेण कफाभिष्यन्दहरी च। राज.।

**दारुहस्तकः** । पु । दर्व्व्याम् । काठेर हाता । सु.सू.७अ. । [जले । शब्दार्थकल्पतरुः ।

**दार्दुरः** । पु । दक्षिणावर्त्तशङ्खे । लाक्षायाम् ।

**दार्व्वण्डः** । पुं । मयूरे । वै निघ. ।

**दार्व्वाघाटः (तः)** । पुं । काष्ठकुट्टपक्षिणि । काठ्ठोकरा पाखी । अम. । श.र. ।

**दार्व्विका** । स्त्री । खर्परधातौ । शापरा । प सु. । गोजिह्वाक्षुपे । रा.नि.व.४ । रसाञ्जने । वै. निघ. । [जिवा शाक । र.मा. ।

**दार्व्विपत्रिका** । स्त्री । दार्व्वीशाके । गो

**दार्व्वी** । स्त्री । दारुहरिद्रायाम् । प सु. ।

**दार्व्वीक्वाथसमुद्भवम्** । क्ली । क्वचिमरसा ञ्जने । रा नि.व.१३ ।

**दार्व्वीक्वाथोद्भवम्** । क्ली । क्वचिमाञ्जने । र सोत् इति पारस्यभाषा । प.सु. ।

**दार्व्वीत्वक्** । स्त्री । दारुहरिद्रात्वचि । चि यो. काम चि.मण्डुरवटके । "दार्व्वीत्वक्त्रिफलाव्योष ।" त्वच एव प्राशस्त्यम् । अभावे काष्ठम् । श्रीकण्ठ. ।

**दार्व्यम्** । क्ली । रसाञ्जने । वै निघ. ।

**दार्व्यादिः** । पुं । कषायविशेषे । "दार्व्वीरसाञ्जनकिरातवृषाब्दबिल्वभल्लातचन्दनदिनेशभवप्रसूनैः । क्वाथ. कृतो मधुयुतो विधिना विनीत. रक्तं सि तञ्च सरुजं प्रदर निहन्ति ।" भा. । "दार्व्वी र साञ्जनवृषाब्दकिरातबिल्वभल्लातकैरवकृतो मधुना कषाय. ।" च.द ।

**दालम्** । क्ली । अष्टविधमध्यन्यतममधुविशेषे । कुट्टरे मधु । एतदापीतवर्णे सूक्ष्ममक्षिकाभि रु- न्द्रनीलवर्णाभि वृक्षकोटरादौ सम्पाद्यते । "इन्द्र नीलदलाकारा सूक्ष्माश्चिन्वन्ति मक्षिका । वृक्ष कोटराम स्थं मधु दालमिद स्मृतम् ।" गुणा — कटु कषायमम्ल मधुरं पित्तकरञ्च । रा नि.व १४ । पु । कोद्रवे । हे च. ।

**दालकशर्करा** । स्त्री । दालकमधुकृतशर्करा याम् । दानमधुर चिनि । सा तन्मधुतुल्यगुणा । रा नि.व.१४ ।

**दालनः** । पु । वायुजन्यदन्तगतमुखरोगे । "दीर्यमाणेष्विव रुजा यस्य दन्तेषु जायते । दाल नो नाम स व्याधि सदागतिनिमित्तजः ॥" मा. नि. । तथा "दाल्यन्ते बहुधा दन्ता यस्मिन् तीव्र- रुजान्विता । दालन स इति ज्ञेयः सदागतिनि- मित्तजः ॥" सु.सू.४५अ. ।

**दालवः** । पुं । स्थावरविषभेदे । हे.च. ।

**दाला** । स्त्री । आरिखदिरे । रा.नि.व.८ । इ- न्द्रवारुण्याम् । वै.निघ. । महाकाले । माकाल । भा. ।

**दालिः** । स्त्री । द्विदले । दाल । "स्फोटस्तु चण- कादीनां दालिस्तु परिकीर्त्तिता ।" रा.नि.व.१६ ।

**दालिका** । स्त्री । दाल्याम् । डाल । महा- काले । माकाल । भा. ।

**दालिमः** । पुं । दाडिमवृक्षे । अ.टी.भ. ।

**दाली** । स्त्री । देवदालीलतायाम् । पीत घो- षालता । हि घघरबेल । रा.नि व २ । See अ मरी । द्विदले । दाल । "दलितस्तु शमीधान्यं दालिर्दाली स्त्रियामुभे ।" तत्पाकविधि —"दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः । संयुक्ता सू- पनाम्ना स्यात्कथ्यन्ते तद्गुणा अथ । सूपो विष्टम्भकी रूच शीतस्तु स विशेषत । निस्तुषो भृष्टसिद्धो लाघव सुतरां व्रजेत् ॥" भा । विट्खदिरवृक्षे । गुयेबावला । रा.नि व.८ ।

**दासः** । पुं । नीलझिण्ट्याम् । उष्ट्रे । वै निघ. ।

**दासपु(पू)रम्** । क्ली । जलमुस्तके, परिपेल- वर्षे । नागरमूता । श.र. । रा नि व.८ ।

**दासिका** । स्त्री । दासीकुरण्टके । नीलपुष्प झाँटी । श.चि ।

**दासी** । स्त्री । पीतपुष्पझिण्टीक्षुपे । पीतझाँटी । नीलझिण्ट्यां । कुलकूटे, नीलझाँटी । रा.नि व. १० । काकजङ्घायाम् । केउयाटा । रा नि व.४ । See नीलाम्लान ।

**दासीकुरण्टकः** । पुं । नीलपुष्पझिण्टीक्षुपे । नीलझाँटी । सु.सू.३८अ. । See नीलाम्लान । "नीलपुष्प. स एव दासीकुरण्टक ।" डल्हण ।

**दासेरः (कः)** । पु । उष्ट्रे । मे ।

**दास्यादिः** । पुं । विषमज्वरे कषायभेदे । "दासीदारुकलिङ्गसोमिसतताश्यामाकपाठाशटीश-

"…गौरकिरातकुसुरकणावायनिकापद्मके । व चीधान्यकनागरार्द्धसरसैः शिग्रुम्सुमिद्दोमिवाथाग्नी भर्पटदर्भमूलकटुकानलामृतापुष्करैः । धातुस्य विषमं त्रिदोषजनितं……।" भैष. ।

**दाहः** । पुं । भस्मीकरणे । "सर्वाङ्गीणस्तीव्र उग्रो दाहः ।" चरणः । वा.ज्व चि.१च.। तन्नामक पित्तजरोगे । जनुनि रोग । "स्वचं प्राप्य समानोष्मा पित्तरक्ताभिमूर्च्छित. । दाहं प्रकुरुते घोरं पित्तवत्तत्र भेषजम् ॥" दाह तृष्णारोधजरक्तपूर्णकोष्ठजधातुक्षयजपित्तजमज्जजरक्तभेदेन षड्विधः, मर्माभिघातजश्चैक इति सप्तविधः। [नि.व ६ ।

**दाहकः** । पुं । चित्रके । रक्तचित्रकवृक्षे । रा

**दाहकम्पितः** । त्रि । दाहपीडिते ।

**दाहकाष्ठम्** । क्ली । दाहागुरुणि । वै.निघ.।

**दाहग(गु)रु** । क्ली । अगुरुविशेषे गुर्जरदेशप्रसिद्धे । अगुरुविशेष । गुणाः—दाहागुरु कटुकोष्णं केशवर्द्धनं वर्णकरं केशदोषघ्नं सौगन्ध्यप्रदं च । रा.नि.व,१२ ।

**दाहज्वरः** । पुं । दाहपूर्वके ज्वरे । दाहपूर्वक ज्वर । "करोत्यादौ तथा पित्तं त्वक्स्थं दाहमतीव च । तस्मिन् प्रशान्ते त्वितरौ कुरुत, शीतमन्ततः ॥" मा नि. ।

**दाहदा** । स्त्री । नागवल्लीलतायाम् । वै.निघ ।

**दाहनिःश्वासः** । पुं । सुगन्धार्जकवृक्षे । वै. निघ. ।

**दाहसरः** । क्ली । श्मशाने । त्रिका. ।

**दाहहरणम्** । क्ली । उशीरे । श च. ।

**दाचायणम्** । क्ली । स्वर्णे । वै.निघ ।

**दाचाय(या)णी** । स्त्री । दन्तीवृक्षे । रमा ।

**दाचिणात्यः** । पुं । नारिकेलवृक्षे । रा.नि व, ११ ।

**दिक्** । स्त्री । रीतौ । नियम । सु सू.४२च. ।

**दिकः** । पु । करिशावके । श.र. ।

**दिक्पालसङ्ख्या** । स्त्री । षट्संख्यायाम् । काठ । भा.ज्व.कम्पतरौ । [विष.चि. ।

**दिग्धविद्धः** । त्रि । विषाक्तबाणविद्धे । च.द. ।

**दिङ्कः** । पुं । लिख्यायां । ४ वा ८ उसवेरुं । शब्दार्थकल्पतरुः ।

**दितः** । त्रि । छिन्ने । चम. ।

**दिनम्** । क्ली । दिवसे । रा.नि.व.२१ ।

**दिनकरः** । पुं । सूर्ये । हे.च. ।

**दिनकेशान्तकः** । पुं । वटपत्रपाषाणभेदे । बड़ पाथरकुचा । वै.निघ ।

**दिनचर्या** । स्त्री । दिवसे यौविधि स्तस्य करणाचरणे । तत्र ब्राह्ममुहूर्त्तोत्थानाभीष्टदेवस्मरणम्, दध्याज्यादर्शबिल्वगोरोचनादिदर्शनस्पर्शनादि, इति स्वमुखदर्शनम्, उषसि मलादि विसर्जनम्, दन्तधावनजिह्वानिर्लेखनमुखप्रक्षालनतैलाभ्यङ्गस्नानभोजनादि च । भा.च.द. ।

**दिनदुःखितः** । पुं । चक्रवाके । क्ली । तत्पत्राम् । श.र. ।

**दिनमणिः** । पुं । सूर्ये । त्रिका. ।

**दिनादिः** । पुं । प्रभाते । रा नि व २१ ।

**दिनान्तः** । पुं । सायंकाले । चम. ।

**दिनान्धः** । पुं । पेचके । वै.निघ ।

**दिनेशः** । पुं । सूर्ये । अर्कवृक्षे । वै.निघ.।अ. वा.ध्या चि.अतपुष्पादिपे ।

**दिनेशपुष्पम्** । क्ली । कैरवपुष्पे । नीलपद्मपुष्प । चि क.क मदरचि. ।

**दिलीरम्** । क्ली । शिलीन्ध्रे । कोंड़क छाता ।

**दिवसः** । पुं, क्ली । दिने ।

**दिवसमुखम्** । क्ली । प्रभाते । हला. ।

**दिवा** । अ, पुं (न) । दिवसे । चम ।

**दिवाकरः** । पुं । काके । सूर्यपर्ण्यां । श.च. । अर्कवृक्षे । चम ।

**दिवाकीर्त्तिः** । पुं । पेचके । नापिते । हे च ।

**दिवाटनः** । पुं । काके । शब्दार्थकल्प. ।

**दिवान्धः** । पुं । पेचके । रा नि.व २१ । त्रि । दृष्टिरोगयुक्ते । दिनकाणा । लक्षणं—"प्राप्ते तृतीय पटलन्तु दोषे दिवा न पश्येत् निशि वीक्षते

म:। रात्रौ स शीतानुग्रहीतदृष्टि. पित्ताल्पभावा दपि तानि पश्येत् ॥" भा.नि । (सा) स्त्री । व- ल्गुलापक्षिणि । रा.नि.व.१८ ।

**दिवान्धकी (न्धिका)** । स्त्री । कुकुन्दर्य्याम् । छुँ‌‌ँचो । वै.निघ. ।

**दिवाभीतः (तिः)** । पुं । पेचके । त्रिका । श.र. । क्ली । श्वेतपद्मे । वै.निघ. ।

**दिवामध्यम्** । क्ली । मध्याह्ने । हे.च. ।

**दिवास्वापः** । पुं । दिवानिद्रायाम् । दिनेर घुमान । तस्य विधि.—"सर्व्वर्तुषु दिवास्वाप. प्र- तिषिद्ध: अन्यत्र ग्रीष्मात् ।" सु.शा.४अ. । "दिवा स्वाम्यन्तरं येषु रात्रौ वा यदि वा दिवा । न ते षा स्वपतां दोषो जायते वा विधीयते ॥" "दि वास्वापं न कुर्व्वीत यतोऽसौ स्यात्कफावहः । ग्री ष्मवर्ज्येषु कालेषु दिवास्वप्नो निषिध्यति ॥" भा. ।

**दिवास्वापा** । स्त्री । पक्षिविशेषे, वल्गुला इति लोके । रा.नि.व.१८ ।

**दिविः** । पुं । चाषपक्षिणि । श.मा ।

**दिविजम्** । क्ली । कुङ्कुमागुरुचन्दने । वै.निघ ।

**दिवी** । स्त्री । उपजिह्विकाकीटे । हारा. ।

**दिवौकाः** । पुं । चातके । मे । हरिणे । वै. निघ. ।

**दिवोदासः** । पुं । काशीराजधन्वन्तरौ । यः चन्द्रवंशीयभीमरथनरपतेः पुत्र आसीत् । त्रिका. ।

**दिवोद्भवा** । स्त्री । एलायां । शब्दार्थकल्पतरुः ।

**दिव्यः** । गुग्गुलौ । रा नि.व.१२ । यवे । रा. नि.व.१६ । अर्जुनवृक्षे । वै.निघ. । क्ली । कान्त लौहे । प.सु. । लवङ्गे । रा.नि.व.१२ । चन्दने । वै.निघ । बालके । वाला । अ द.१२अ. । [४अ. ।

**दिव्यकः** । पुं । निर्विषसर्पविशेषे । सु.कल्प.

**दिव्यगन्धः** । पुं । गन्धके । रा.नि.व.१३ । क्ली । लवङ्गे । रा.नि.व.१२ ।

**दिव्यगन्धा** । स्त्री । स्थूलैलायाम् । वड़ ए- लाइच । रा.नि.व.६ । महाचुञ्चुपे । रा.नि.व. ७ । लवङ्गलतायाम् । श चि. । [वै.निघ. ।

**दिव्यचन्दनम्** । क्ली । हरिचन्दने । लवङ्गे ।

**दिव्यचक्षुः** । पुं । वानरे । श.मा. । उपचक्षु षि । चश्मा । सुगन्धभेदे । मे. ।

**दिव्यतुम्बी** । स्त्री । अलाबूभेदे । वै.निघ ।,

**दिव्यतेजाः** । स्त्री । ब्राह्मीनाममहाक्षुपे । रा. नि.व.५ ।

**दिव्यपञ्चामृतम्** । क्ली । समभागगव्यघृत- दधिदुग्धमधुशर्करासु । "गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम् । एकत्र मिलितम् ।" रा.नि.व.२२ । [व.१० ।

**दिव्यपुष्पः** । पुं । श्वेतकरवीरवृक्षे । रा नि.

**दिव्यपुष्पा (ष्पी)** । स्त्री । देवद्रोण्याम् । वड घलघसा । रा.नि.व ५ ।

**दिव्यपुष्पिका** । स्त्री । देवद्रोणक्षुपे, महाद्रो- ण्याम् । वड घलघसा । वै.निघ. । रक्तार्कवृक्षे । र.मा ।

**दिव्यरसः** । पुं । पारदे रा.नि.व.१३ ।

**दिव्यलता** । स्त्री । मूर्व्वायाम् । रा.नि.व.३ ।

**दिव्यसारः** । पुं । सर्जवृक्षे । शाल वा धूना- र गाछ । रा.नि.व ८ ।

**दिव्या** । स्त्री । महामेदायाम् । वन्ध्याम् । वि- ष्णी शाक । वन्ध्याकर्कोटक्यां । शतावर्य्यां । स्थूल- जीरके । वड़ जीरा । रा.नि व ५ । श्वेतदूर्व्वा- यां । रा.नि.व.८ आमलक्यां । मे. । हरीतक्याम् । रा.नि.व.११ ।

**दिव्याम्रम्** । क्ली । उत्तमाम्रे । वै.निघ. ।

**दिव्यैलकः** । पुं । राजिलवद्वैकराजसर्पविशेषे । सु.कल्प.४अ. ।

**दिव्यौषधिः (धी)** । स्त्री । मनःशिलायां । च.द. । मतलौहे । भा. । च.द सि.यो.र.चि.चि. खण्डखाद्यलौहे । "दिव्यौषधिहतस्यापि ।" शमी- मूले ।

**दिष्टम्** । क्ली । दारुहरिद्रायाम् । श.मा. ।

**दिष्टान्तः** । पुं । मृत्यौ । अम. ।

**दिष्टिः** । स्त्री । परिमाणे । मे. ।

**दीर्घिका** । स्त्री । विगतधनु.परिमितजलाश- ये । दिघि । "पल्वलं दीर्घिका वापी यष्टिका सौ- गन्धिका ।" त्रिका ।

ते । कटाहे, कोष्ठके वापि सूपविष्टोऽवगाहयेत् । सौवर्णं राजतं वापि ताम्रं लौहञ्च दारुजम् । कोष्ठकं तत्र कुर्व्वीतोच्छ्राये षड्विंशदङ्गुलं । आयामे वा तदेव स्यात्चतुष्कोणन्तु चिक्कणम् ॥" भा. ।

**द्रवा** । स्त्री । मेदायाम् । रा.नि.व.५ ।

**द्रविड़ी** । स्त्री । एलायाम् । वै.निघ.२भ,वा.व्या.चि.शतावरीतैले । [मि. ।

**द्रविणम्** । क्ली । सुवर्णे । रवे । बले । धन. ।

**द्रविणनाशनः** । पुं । शिग्रुवृक्षे । सजिनागाछ । श.र. ।

**द्रवीकरणम्** । क्ली । तरलतापादने ।

**द्रव्यम्** । क्ली । वस्तुनि । पित्तले । मद्ये । जले । विलेपने । जतुके । लां । मे. । औषधोपकरणे । औषधे । विका. । तत्र द्रव्यमात्रं पृथिव्यादिभूतसमुदायादुत्पद्यते । तदुत्कर्षस्याभिव्यञ्जकत्वात्, तत्पञ्चविधं—पार्थिवम् आप्य तैजसं वायव्यमाकाशीयञ्च । तत्र "स्थूलसारसान्द्रमन्दखरगुरुकठिनगन्धबहुलमीषत्कषायम्प्रायशो मधुरम्पार्थिवम्, तच्च स्थैर्य्यबलादिकरं विशेषतश्चाधोगतिस्वभावम् । यत्तु द्रव्य शीतस्निग्धगुरुसरसान्द्रं पिच्छिलं सकषायाम्ललवणमधुररसप्राय तदाप्यम्, तच्च स्नेहनाह्लादनादिकरम् । यद्रूपगुणबहुलम् ईषदम्ललवणं कटुरसप्रायं विशेषतश्चोर्द्ध्वगतिस्वभावं तत्तैजसं, तच्च दहनपचनदारणादिकरम् । सूक्ष्मरूक्षखरविशदं स्पर्शबहुलमीषत्तिक्तं विशेषतश्च कषायं वायव्यम्, तच्चैव वैशद्यलाघवादिकरम् । श्लक्ष्णसूक्ष्ममृदुव्यवायिविविक्तमव्यक्तरसं शब्दबहुलमाकाशीयम्, तच्च मार्द्दवलाघवादिकरम् । अनेन निदर्शनेन नानौषधीभूत जगति किञ्चिद्द्रव्यमस्तीति, कृत्वा त तं युक्तिविशेषमर्थं चाभिसमीक्ष्य स्ववीर्य्यगुणयुक्तानि द्रव्याणि कार्म्मकराणि भवन्ति । तानि यदा कुर्व्वन्ति स 'कालः', यत्कुर्व्वन्ति तत्कर्म्म, येन कुर्व्वन्ति तद्वीर्य्यं, यत्र कुर्व्वन्ति तदधिकरणं, यथा कुर्व्वन्ति स उपायः, यन्निष्पादयन्ति तत्फलमिति । तत्र विरेचनद्रव्याणि पृथिव्यम्बुगुणभूयिष्ठानि पृथिव्यापो गुर्व्व्यो गुरुत्वादधोगच्छन्ति तस्माद्विरेचनमधोगुणभूयिष्ठमनुमानात् । वमनद्रव्याण्यग्निवायुगुणभूयिष्ठान्यग्निवायू हि लघू लघुत्वाच्च तान्यूर्द्ध्वमुत्तिष्ठन्ति तस्मादवमनमप्यूर्द्ध्वगुणभूयिष्ठमुक्तम् । उभयगुणभूयिष्ठमुभयतोभागं । आकाशगुणभूयिष्ठं संशमनं । संग्राहकमनिलगुणभूयिष्ठमनिलस्य शोषणात्मकत्वात् । दीपनमग्निगुणभूयिष्टं । लेखनमनिलानलगुणभूयिष्ठं । बृंहणं पृथिव्यम्बुगुणभूयिष्ठं । एवमौषधकर्म्माण्यनुमानात्साधयेत् । भवन्ति चात्र—भूतेजोवारिजैर्द्रव्यैः शमं याति समीरणः । भूम्यम्बुवायुजैः पित्तं क्षिप्रमाप्नोति निर्वृतिं ॥ खतेजोऽनिलजैः श्लेष्मा शममेति शरीरिणां । वियत्पवनजाताभ्यां वृद्धिमाप्नोति मारुतः ॥ आग्नेयमेव यद्द्रव्यं तेन पित्तमुदीर्य्यते । वसुधाजलजाताभ्यां बलासः परिवर्द्धते ॥ एवमेतद्गुणाधिक्यं द्रव्ये द्रव्ये विनिश्चितं । द्विशो वा बहुशो वापि ज्ञात्वा दोषे विचारयेत् ॥" सु.सू.४१अ । दोषशमनधातुदूषणस्वस्थहितत्वात् द्रव्यं त्रिविधमाह चरकः ॥ तच्च पुनस्त्रिविधं जाङ्गमौद्भिदपार्थिवभेदात् । तत्र जाङ्गममूलमिश्रविः, भौम विंशतिः, उद्भिदन्तु । तच्च चतुर्विधं वनस्पतिवीरुद्वानस्पत्यौषधय' । इति । च.सू.१अ. । द्रव्यं पुन. द्विविधं शुष्कमार्द्रञ्चेति । तयोः शुष्कद्रव्यापेक्षयार्द्रस्य द्विगुणा मात्रा ग्राह्या । "शुष्कद्रव्ये तु या मात्रा आर्द्रस्य द्विगुणा हि सा ।" तदपवादमाह—"वासानिम्बपटोलकेतकिबलाकुष्माण्डकेन्दीवरी वर्षाभूकुटजाश्वगन्धसहिताः ता. पूतिगन्धामृता : । मांसीनागबलाकुरुण्टकपुरोहिङ्ग्वार्द्रकं चैवयं चाश्चाङ्गनस्वपणीव न द्विगुणिता ये, चेक्षुजाता गणाः ॥" इन्दीवरी शतावरी । पूतिगन्धा प्रसारणी । कुरुण्टक' पीतझिण्टी । इक्षुजाता गुडादय. । यथा. द्रमूलादय' । "वासाकुटजकुष्माण्डशतपुष्पासहाश्वता. । प्रसारण्यश्वगन्धा च नागाह्वातिबलाबला. । नित्यमार्द्रा. प्रयोक्तव्या. न तासां द्विगुणो भवेत् ।" शार्ङ्ग. । "शुष्कं नवीनं द्रव्यञ्च योज्यं सकलकर्म्मसु । आर्द्रञ्च द्विगुणं विद्यादेष सर्व्वत्र निश्चयः । द्रव्याण्यभिनवान्येव प्रशस्तानि क्रियाविधौ । ऋते घृत गुडक्षौद्रधान्यकृष्णाविडङ्गत. ॥" प भ.१ख. ।

**द्रव्यकल्कः** । पुं । दृषदि पेषितद्रव्ये ।

**द्रव्यगुणाकरः**, **द्रव्यरत्नावली** । पुं,स्त्री । द्रव्यगुणसंग्रहविशेषे ।

**द्रव्यसङ्ग्रहः** । पुं । करचरणहरीतक्यादिद्रव्यसङ्क्षेपे । च.सू.१अ. । [द्रव्ये ।

**द्रव्याभिधानम्** । क्ली । औषधादीनां नामसं-

**द्राचिष्ठम्** । क्ली । दीर्घरोहिषतृणे । बड़ गन्ध-तृण । रा.नि.व ८ ।

**द्राघिष्ठास्य:** । पुं । भल्लूके । रा.नि.व.१६ ।

**द्राण:** । त्रि । सुप्ते ।

**द्राप:** । पुं । पङ्के । शब्दार्थकल्प. ।

**द्राव:** । पुं । उष्णतायाम् वै.निघ. ।

**द्रावकम्** । क्ली । सिक्थके । रा.नि.व १३ । लौहद्रावके । वै.निघ. । मौक्तिकौषधविशेषे । महाद्रावकादौ । पुं । प्रस्तरविशेषे । चन्द्रकान्तमणि । मि. रसविशेषे । श.र. ।

**द्रावककन्द:** । पुं । तैलकन्दे । रा.नि व.७ ।

**द्रावकरम्** । क्ली । श्वेतटङ्कणे । सोहागा । रा. नि.व ६ ।

**द्रावकवर्ग:** । पुं । द्रवकरद्रव्यपञ्चके । यथा— "गुञ्जाटङ्कणमध्वाज्यगुडा द्रावकपञ्चका. ।" र. सा.सं. । [ला । २ भा. ।

**द्रावण(फल)म्** । क्ली । कतकफले । निर्म्मली

**द्रावणक:** । पुं । टङ्कणक्षारे । वै.निघ. ।

**द्राविका** । स्त्री । लालायाम् । लाल, थूतू । श.र. ।

**द्राविड़: (क:)** । पुं । वेधमुख्ये । शियरूपश्ची । कचूर । मि. । गन्धमल्याम् । प.मु. । आमहरिद्रायाम् । कैंचा हलुद । श.र. । क्ली । विड़लवणे । रा.नि.व.६ ।

**द्राविड़भूतिक: (मिज:)** । पुं । आमहरिद्रायाम् । कैंचा हरिद्रा । श.र. ।

**द्राविड़ी** । स्त्री । सूक्ष्मैलायाम् । प.मु. । भा.म. ४भ.सौभाग्यशुण्ठीमोदके । "द्राविड़ीनां पलम् ।" सु.सु.३८ष. ।

**द्राविड़ोद्भव:** । पुं । सुगन्धद्रव्ये । सुगन्धप्रियङ्गौ । (वा) स्त्री । एलायाम् । वै.निघ. ।

**द्राविण:** । पुं । टङ्कणे । सोहागा । र.सा.सं. ।

**द्राविणी** । स्त्री । काकजङ्घायां, काकमाच्यां । वै.निघ. ।

**द्रावी (वन्)** । पुं । टङ्कणक्षारे । र.सा.स टङ्कणशोधने । मुस्तवेतसे । वै.निघ. । . . . .

**द्राचा** । स्त्री । (*Vitis vinifera.*) Dried fruits called Kismis स्वनामख्यातलेतायाम् । किस्मिस, मनेका । हिं दाख, बाङ्गुर । मं द्राक्षा । तैं द्राक्षपोण्डु, द्राक्षचेट्टु । ता.कोडिमुन्दिरिप्पभाम् । गुणा:—पक्वा सा सरा शीता चक्षुष्या वृंहणी । अपक्वा स्वल्पगुणा गुर्व्वी च । पक्वा सा रक्तपित्तकृत् । "द्राक्षा पक्वा सरा शीता चक्षुष्या वृंहणी गुरु: । स्वादुपाकरसा स्वर्या तुवरा सृष्टमूत्रविट् । कोष्ठमारुतकृद्‌वृष्या कफपुष्टिरुचिप्रदा । हन्ति तृष्णाज्वरश्वासवातवातासकामला: । कृच्छ्रास्रपित्तसम्मोहदाहशोषमदात्ययान् । तथा स्याद्गोस्तनी द्राक्षा गुर्व्वी च कफपित्तनुत् । अपरा जात्या स्वल्पतरा शीतलनीलदृशी गुणै । द्राक्षा पर्व्वतजा लघ्वी साम्ला श्लेष्माम्लपित्तकृत् । द्राक्षा पर्व्वतजा यादृक्तादृशी करमर्द्दिका ।" भा. द्राक्षाव. । "द्राक्षाफलं मधुरमम्लकषाययुक्तं चारोच पित्तमरुतौ कफहारि शीघ्रम् । शेषं निहन्ति रुधिरामयदाहशोषमूर्च्छाज्वरश्वसनकासविनाशकारि । कषायाम्ला विपाके च द्राक्षा चैव कफे हिता ।" अत्रि. १७अ. । एतदभावे गाम्भारीफलं ग्राह्यम् । शि.यो. ज्व.चि.पिप्पल्यादौ । वा.सू.१५अ.परूषकादि: । "परूषकं वरा द्राक्षा" । च.द.वा.ज्व.चि. पिप्पल्यादि: । वा.ज्व.चि. द्राक्षादि: । रसालायां । रा नि.व २२ ।

**द्राक्षादि:** । पुं । वातज्वरे कषाय: । "द्राक्षागुडूचीकाश्मर्य्यत्रायमाणा: सशारिवा: । निष्क्वाथ्य सगुड क्वाथम् ...।" च.द.वा.ज्व.चि. । अन्य:— द्राक्षाभयापर्पटकाब्दतिक्ताकृत: कषाय: पैत्तिकज्वरे भ्रमप्रमूर्च्छाशमन' । च.द.पि.ज्व.चि. ।

**द्राक्षाफल:** । पुं । पियालवृक्षे । वै.निघ. ।

**द्राक्षायणी** । स्त्री । दन्तीवृक्षे । प.मु. ।

**द्राक्षारिष्ट:** । पुं । यक्ष्माधिकारे अरिष्टविशेषे । पाठ:—"द्राक्षातुलार्द्धं द्विद्रोणे जलस्य विपचेत् सुधी: । पादशेषे कषाये च पूते शीते विनिक्षिपेत् । गुडस्य द्वितुलां तत्र त्वगेलापत्रकेसरं । प्रियङ्गुमरिचकृष्णा विडङ्गेति विचूर्णयेत् । पृथक् पलोन्मितैर्भागैर्घृतभाण्डे निधापयेत् । समन्ततो घट्टयित्वा पिबेज्जातरसं तत. ।" भैष. ।

**द्राक्षासम्भूत:** । पुं । द्राक्षासवे । वै.निघ. ।

**द्राचासवः** । पुं । द्राचाकृतासवे । गुणाः—रोचनो दीपनो हृद्यः बल्यः पित्ताविरोधी विबन्धघ्नः कफघ्नः लघुः स्वल्पमारुतश्च । च.मू.२७अ. ।

**द्राचासुरा** । स्त्री । द्राचाकृतमद्ये । পোর্ট । च.मू.२७अ ।

**द्राचोत्थः** । पुं । द्राचासवे । वै.निघ. ।

**द्रुकिलिमम्** । क्ली । देवदारुणि । प.मु. । ×

**द्रु(द्रू)घनः** । पुं । भूमिचम्पकवृत्ते । ভুঁই চাঁপা । श.च ।

**द्रु(द्रू)णः** । पुं । भ्रमरे । वृश्चिके । भूम्याटपचिषि । ফিঙে । हे.च. । मधुमक्षिकायां । वै.निघ. ।

**द्रुणी** । स्त्री । कर्णजलायुकायाम् । কানকোটারি । कच्छपिकायाम् । अम.अ. ।

**द्रुतः** । पुं । हरिणे । शशके । वृत्ते । धरणि ।

**द्रुतमांसम्** । क्ली । शशादिहरिणादयः स्वयं द्रुतगमनात् द्रुतसंज्ञकाः स्मृताः, तेषां मांसे । गुणाः—पथ्यं बल्यं लघु वीर्यकारि च । रा.नि. व.१७ ।

**द्रुनखः** । पुं । कण्टके । কাঁটা । त्रिका. ।

**द्रुपदी** । स्त्री । वन्दाके । মান্দড়া । वै निघ. ।

**द्रुमः** । पुं । वृत्ते । त्रिका. । कुटजवृत्ते । आरग्वधवृत्ते । च.द.कुष्ठ-चि.गण्डीराद्यतैले । पारिजात वृत्ते । मे. ।

**द्रुमकिलः** । पुं । देवदारुवृत्ते । वै निघ. ।

**द्रुमगः** । पुं । स्वल्पगलदेशे । वै निघ. ।

**द्रुमत्वक्** । स्त्री । कुटजवल्कले । च द कुष्ठ चि. ।

**द्रुमध्वजः** । पुं । तालवृत्ते । वै.निघ. ।

**द्रुमनखः** । पुं । कण्टके । सारा. । पारिजातवृत्ते । मे. । [কাঁটা । वै.निघ. ।

**द्रुमनिर्यासः** । पुं । वृत्तनिर्यासे । গাছের

**द्रुमरः** । पुं । कण्टके । सारा. ।

**द्रुमव्याधिः** । पुं । लाचायाम् । रा.नि.व.६ ।

**द्रुमाश्रयः** । पुं । वानरे । वै.निघ. ।

**द्रुमश्रेष्ठः** । पुं । तालवृत्ते । वै.निघ. ।

**द्रुमामयः** । पुं । लाचायाम् । प.मु. ।

**द्रुमारिः** । पुं । हस्तिनि । वै.निघ. ।

**द्रुमारुहा** । स्त्री । कैवर्तमुस्तायां । रा.नि.व.६.

**द्रुमाश्रयः** । पुं । सरटे । গিরগিটে । रा.नि. व.१९ ।

**द्रुमेश्वरः** । पुं । तालवृत्ते । रा.नि.व.११ ।

**द्रुमोत्पलः** । पुं । (Abroma augusta) कर्णिकारवृत्ते । ওলট্ কম্বল । अम. । ऋतुसंस्थितः ।

**द्रुवयम्** । क्ली । परिमाणे । वै.निघ. । [र. ।

**द्रुसल्लकः** । पुं । पियालवृत्ते । পেয়াশাল । श.

**द्रूः** । स्त्री । स्वर्णे । वै.निघ. ।

**द्रेकः (का)** । पुं,स्त्री । निम्बविशेषे । ঘোড়ানিম্ । हिं बकायनिम्ब । भा.म.४अ.महामल्लातके । ओकडा इति ख्याते चुपे । च.द.दार्व्यादिकषाये । "सरलाद्रेकामृतायामकैः ।"

**द्रोणः** । पुं । ४०० धनु परिमितजलाशये । काकविशेषे । দাঁড় কাক, ডোম কাক । मे. । द्रोणपुष्पवृत्ते । घनरसे । वृश्चिके । रा.नि.व.१९ । पुं,क्ली । आढकमाने । ৮ সের । खारीषोडशांशे । नीलावत्यां । आढकचतुष्टये (३२ श.) । "चतुर्भिराढकैर्द्रोणः ।" प.म.१ख. । क्ली । हरिचन्दने । द्रोणीलवणे । वै.निघ. । [কাক । अम. ।

**द्रोणकाकः** । पुं । वन्यामककाके । ডোম

**द्रोणकुम्बिका** । स्त्री । देवकुम्बायाम् । देवद्रोण्यां । বড় ঘলঘসাবিশেষ । वै निघ. ।

**द्रोणगन्धिका** । स्त्री । रास्नायाम् । जटा. ।

**द्रोणपर्णी** । स्त्री । द्रोणपुष्प्याम् ।

**द्रोणपुष्पिका** । स्त्री । द्रोणपुष्प्याम् । घलघसा । वै.निघ. ।

**द्रोणपुष्पी** । स्त्री । घलघसा घलकसा द्रोणकलस इति ख्याते पेषजकवृत्ते । द्रोणपुष्पीति भाषा । र.मा. । मं कुंबा । कं तुंबे । हिं गुम्मा, गूमा । तें तुम्मिचेट्टु । गुणाः—कटूष्णा रुच्या वातकफघ्नी अग्निमान्द्यकरी पथ्या च । रा.नि.व.४ । च द.वि यो.काम.चि.पञ्चमे । "अत्यर्थं कामिनां द्रोणपुष्पीरसः प्रभः । द्रोणपुष्पीरसोष्णं निहन्ति विषमज्वरान् ।" शार्ङ्ग.म.ख.१४ । ज-

पार्श्व.कामलाश्मसिध्मीयघ्नी। राज.। द्रोणपुष्पी गुरु. स्वादुपाका कट्वी-मेदिनी कफामकामलाशोथ-तमकश्वासक्रमिघ्नी च। भा.।

**द्रोणपुष्पीदलम्** । क्ली। द्रोणपुष्पीपत्रे। घलवमेव पाता। गुणाः—स्वादु रुच्यं गुरु पित्त कर्त्त भेदनं कामलाशोथमेहज्वरहरं कटु च। भा. पू.१भ.शा.व.।

**द्रोणा** । स्त्री। द्रोणपुष्प्याम्। घलवला। भा. वा.उ२६च.। इन्दीवरालतायाम्। वै.निघ.।

**द्रोणिः** । स्त्री। सूर्पदग्धमाने। १२८ श.। प.प्र. १ख.।

**द्रोणिका** । स्त्री। नील्याम्। श.र.। [व.६।

**द्रोणि(णी)जम्** । क्ली। द्रोणीलवणे। रा.नि.

**द्रोणिनी** । स्त्री। उत्तरिण्याम्। वै.निघ २भ. मञ्जिष्ठायहते।

**द्रोणी** । स्त्री। इन्दीवर्य्याम्, इन्दीवरायाम्। रा.नि.व.३। द्रोणीलवणे। श.र.। नील्याम्। सूर्पदग्धमाने। १२८ श.। "सूर्पाश्चाथ भवेद्द्रोणी।" प.प्र.१ख.। [छ कारा.।

**द्रोणीदलः** । पुं। केतकीपुष्पवृक्षे। (केया गा-

**द्रोणीलः** । पुं। केतकवृक्षे। वै.निघ.।

**द्रोणीलवणम्** । क्ली। वारिजलवणे। भं दो-चीयेमौट। क दोबीय छपु। गुणाः—भेदनं स्निग्धं शूलघ्नं नातिपित्तलं पाके नात्युष्णञ्च। रा.नि.व.६।

**द्रौणेयम्**
**द्रौणम्** } क्ली। वारिजलवणे। रा.नि.व.६।

**द्वन्द्व(न्द)म्** । क्ली। मिथुने। युगले। सुखदुःखादौ। पुं। रोगभेदे। श.र.।

**द्वन्द्वगः** । पुं। चक्रवाके। वै.निघ.।

**द्वन्द्वगदः** । पुं। द्वन्द्वजरोगे।

**द्वन्द्वचरः (चारी)** । पुं। चक्रवाकपक्षिणि। वै.च। त्रिका.। [वै.निघ.।

**द्वन्द्वचरीसहायः** । पुं। चक्रवाकपक्षिणि।

**द्वन्द्वजः (दोषोत्थः)** । पुं। विषमज्वरे। रा.नि.व.२०। द्विदोषरोगे। त्रि। द्विदोषोत्थे। मा. भ.नि.।

**द्वयाग्निः** । पुं। चित्रकवृक्षे। चिता। श.च.।

**द्वादशपत्रिका** । स्त्री। भंतामाख्यचुपे। गुल्फा गाछ, मडरी।

**द्वादशाङ्गक्वाथः** । पुं। सन्निपातज्वरे कषायः। दशमूलीकषायस्तु पिप्पलीपौष्करान्वितः। सन्निपातज्वरे देय. श्वासकासमन्विते॥ भा.म.१भ.।

**द्वादशाङ्गुलः** । पुं। वितस्तौ। विगत्। धर्म.।

**द्वादशात्मा** । पुं। सूर्य्ये। अर्कवृक्षे। धर्म.।

**द्वादशायसकः** । पुं। ऊर्ध्वसत्वाधिकारे रसः। त्रिनेत्राख्यरस एव। रस.र.। See त्रिनेत्ररसः वातरक्ते।

**द्वादशायुः** । पुं। कुक्कुरे। श.मा.।

**द्वारम्** । क्ली। उपाये। निर्गमे। त्रिका.।

**द्वारका** । स्त्री। कार्पासाम्। वै.निघ.।

**द्वारदारुः** । पुं। शाकवृक्षे। वै.निघ.। भूर्जीवृक्षे। भा.।

**द्वारवलिभुक्** । पुं। काकविशेषे। त्रिका.।

**द्विकः** । पुं। काके। त्रिका.। चक्रवाके। मे.।

**द्विककारः** । पुं। काके। श.र.।

**द्विककुत्,द्विकपृष्ठः** । पुं। उष्ट्रे। शे.च.।

**द्विकाकोली** । स्त्री। काकोलीक्षीरकाकोल्योः। वा.उ.१४.।

**द्विखुरी (रन्)** । पुं। गोखुरवत् द्विधाविभक्तखुरमात्रे। "द्विखुरं गोखुराकारखुरैर्द्विधाद्विखुरः। अथवा छौवनीपुसौर्मिथमथैतु निर्द्दिशेत्॥" अ.द.१च.। [गो.चाद्विमा.चि.।

**द्विचित्रकम्** । क्ली। श्वेतरक्तचित्रकयोः। शि.

**द्विजः** । पुं। दन्ते। रा.नि.व.१८।१९। तुम्बुरुवृक्षे। रा.नि.व.११। ब्राह्मणे। क्षत्रिये। वैश्ये। मे.। सर्पे। अण्डजे। धर्म.।

**द्विजकुत्सितः** । पुं। वहुवारवृक्षे। चालिता गाछ। रा.नि.व.११।

**द्विजकेतुः** । पुं। अश्वोटविशेषे। वै.निघ.।

**द्विजन्मा (न्मन्)** । पुं। पक्षिणि। दन्ते। श.र.। आर्द्रकार्य्ये। मौक्तिके। अण्डजे। वै.निघ.।

द्विजप्रिया। स्त्री। सोमलतायां। रा.नि.व ३।
द्विजभक्त.। त्रि। वैद्ये भक्तिमति (रोगिणि)। वै निघ.।
द्विजयष्टिः (ष्टिका)। स्त्री। भार्ग्याम्। बामुनहाटी। वै निघ २भ.वा.व्या.चि.।
द्विजश्रम.। पुं। राजमाषे। वर्वटी। श च।
द्विजस्नेहः। पु। पलाशवृक्षे। वै निघ।
द्विजा। स्त्री। रेणुकायां। (रेणुक)। रा.नि व. ६। भार्ग्याम्। मे। ओषधि इति ख्याति मम्बद्र. वै निघ.। पालक्यशाके। श च.।
द्विजाङ्गिका (ङ्गी)। स्त्री। कटुकाम्। कटकी। रा.नि व.६। [मे.]
द्विजाति'। पु। दन्ते। अण्डजी। पक्षिणि।
द्विजायनी। स्त्री। यज्ञोपवीते। त्रिका.।
द्विजालय.। पु। तरुकोटरे। श च.।
द्विजिह्वः। पु। सर्पे। भग। अधिजिह्वनामक कफरोगे। आलजिह्वेर रोग। सु नि १६श।
द्विजेन्द्रक.। पु। निम्बूवृक्षे। लेबुर गाछ। वै निघ.। [टी हेमा मुलकादि।
द्वितिक्ता। स्त्री। कटुक्या, कारवेल्लिकायाञ्च। वा
द्वितीयत्रिफला। स्त्री। द्राक्षाखर्जूरगाम्भा रीफलेषु। किसमिस, खेजूर, गांभार फल। वै निघ।
द्वितीयाभा। स्त्री। (Curcuma zanthorrhiza.) हरिद्राविशेषे। दारुहरिद्रायाम्। श च।
द्विदलः। पुं। अश्मन्तकवृक्षे। आपटा इति ख्याति। आबुटा। वै निघ.। क्ली। द्विदलमात्रे। वयुवगुणा —"मूष क्ली द्विदलानामष्टादशगुणे द्रव्यादि। स एव सविकटुक सर्पि सैन्धवसंयुत। भवेद्गुरुतरश्चैव कृतमित्येव तं विदु। चिपिटमोद्यैर्वि नाशिद्यमकृतन्तु लघु वदेत्। फलाम्लधान्यसकैव कृता गुरुतरा मता। वातघ्ना रुचिदा मीला पूर्वपाकविशारदै।" द्रव्यगुण।
द्विधागतिः। पु। शिशुमारे। शुशोक। वै निघ.। कुम्भीरे। कुमीर। वै.च।
द्विधातुः। त्रि। द्विप्रकृतिके।
द्विधात्मकम्। क्ली। जातीफले। वै निघ.।
द्विधालेख्यः। पु। हिन्तालवृक्षे। हेंताल गाछ। रा नि व ९। [र.मा.]
द्विपः। पु। हस्तिनि। प मु। नागकेसरवृक्षे।
द्विपत्रक.। पु। वण्डालकन्दे। रा.नि व.७।
द्विपद.। पु। मनुष्ये। पक्षिणि। प्रश्नसार।
द्विपबला। स्त्री। नागबलायां। वै निघ.वा. व्या.चि. शतावरीवृते।
द्विपमदः। पु। करिमदजले।
द्विपर्णी। स्त्री। शालपर्णी पृश्निपर्णी चेति द्वये। शालपाणि, चाकुलिया। च.द ग्रह चि.।
द्विपाख्यः। पुं। नागकेशरवृक्षे। प मु.।
द्विपादिकः। पु। नागकेशरवृक्षे। प मु.।
द्विपायी (इन्)। पुं। करिणि। धारा.।
द्विपिनखः। पुं। व्याघ्रनखे। नखीविशेष। रा नि व.१२।
द्विपी (इन्)। पुं। चित्रकभेदे। च वि.८च।
द्विपुटः। पु। (Impotiens Balsamina.) पुष्पवृक्षविशेषे। दोपाटी। श चि.।
द्विपुटी। स्त्री। मल्लिकायां। मे.।
द्विपुनर्नवम्। क्ली। शुक्लरक्तलताभेदेन पुनर्नवाद्वये। श्वेतपुष्पा, गांदापुष्पा। सियों. काम चि श्लीपायघृते। "त्रिफला द्विपुनर्नवम्।"
द्विब्राह्मी। स्त्री। ह्रस्वदीर्घब्राह्मीद्वये। छोट्ट ओ बड ब्राह्मी। सु मा १०च।
द्विमाषम्। क्ली। मुद्गपर्णीमाषपर्ण्यौ। मुगानी ओ माषाणी। च द उन्मा चि महाकल्याणघृते।
द्विमुख' (खाहि.)। पु। द्विमुखसर्पविशेषे, राजसर्पे। ब्राह्मसाप, दुमुखो साप, शांखिनी साप। वम् दुदुल। इसा। रस र विष.चि.। त्रि। मुखद्वययुक्ते।
द्विमुखा। स्त्री। मारिकायां। गाड़। जलौकायाम्। जोंक। इसा।
द्विमुखोरगः। पु। द्विमुखसर्पे। शठा।
द्विरजनी। स्त्री। हरिद्रायां दारुहरिद्रायाञ्च।

द्विप्र, गारुड़द्विप्र। वि.यौ.काम वि.ध्योवा यात्रते।

**द्विरदः** । पुं। हस्तिनि। प सु.।

**द्विरदपिप्पली** । स्त्री। गजपिप्पल्याम्। वै. निघ.२भ.वा.व्या.चि.द्वात्रिंशकगुग्गुलौ।

**द्विरदान्तः (कः)** । पुं। सिंहे। रा.नि.व २८। [व। वै.निघ.।

**द्विरदारातिः** । पुं। शरभे। सिंह विशे

**द्विरदाशनः** । पुं। अश्वत्थवृक्षे। वै निघ.।

**द्विरर्व्वुदम्** । क्ली। अर्व्वुदभेदे। तस्य लक्षण —"यद्दृष्टजातं युगपत् क्रमाद्वा द्विरर्व्वुदं तच्च म वेदसाध्यम्।" सु.नि.११अ.।

**द्विरसनः** । पुं। सर्पे। विका.।

**द्विरापः** । पुं। हस्तिनि। अ.मा.।

**द्विरेताः** । पुं। गर्द्दभे। वै निघ। स्त्रीपुंचिह्न पुरुषे। "वीजात्समांशादुपतप्तवीजात् स्त्रीपुंसलिङ्गी भवति द्विरेता।" च.शा २अ.।

**द्विरेफगणसम्म(म्मि)ता** । स्त्री। पुष्पवृक्ष भेदे। वन शेँउती। वै निघ.।

**द्विलग्नकः** । पुं। दुग्धफेनि। वै.प.।

**द्विवर्णा (र्णिका)** । स्त्री। द्विवर्णा नदि। अम.। वै प.।

**द्विवार्त्ताकी** । स्त्री। बृहतीद्वये। बृहती, कण्टिकारी। भा.म.४अ.वात चि। "द्विवार्त्ताकी फलरसम्।"

**द्विविषम्** । क्ली। पाण्डुकृष्णातिविषायां। श्वेत ओ कृष्ण आतइच। वै निघ २भ.वा व्या चि.।

**द्विवृन्तः** । पुं। नखरञ्जकवृक्षे। मेंदी गाछ। प सु.।

**द्विवृहती** । स्त्री। कण्टकारिकाबृहत्यौ। कण्टिकारी ओ बृहती। वा सू.१५अ.। "द्विबृहत्यौ विकारघ्नमयादयम्।"

**द्विशफः** । त्रि। द्विखुरपशुमात्रे। "गौरजो म हिष लाय शुकरो गवयो रुरु। द्विशफा पस-वश्चैते अविरुष्ट्र...।" भागवतम्।

**द्विशृङ्गिका** । स्त्री। मेषशृङ्ग्याम्। भेड़ाशिङी। वै.निघ.।

**द्विशृङ्गी (इन्)** । पुं। मत्स्यविशेषे। शिङी माछ। वै.निघ।

**द्विषा** । स्त्री। एलायाम्। वै निघ.।

**द्विष्टम्** । क्ली। ताम्रे। अ.टी.सा.।

**द्विस्विन्नान्नम्** । क्ली। सिद्धतण्डुले। सिद्ध चाँउल। पुराणम्।

**द्विहृदया** । स्त्री। गर्भवत्यां स्त्रियां। वै.निघ.।

**द्विक्षारम्** । क्ली। यवसर्जिक्षारयोः। वि यौ. अग्निमा चि।

**द्विक्षीरम्** । क्ली। गव्याजदुग्धयोः। गाईदुग्ध ओ छागदुग्ध। च.द यक्ष्म चि सर्पिर्गुडे।

**द्वीपः** । पुं। काकोलवृक्षे। वै निघ। क्ली। व्याघ्रचर्म्मणि। अ.। [नि.व १२।

**द्वीपकर्पूरः (जः)** । पुं। चीनकर्पूरे। रा.

**द्वीपखर्ज्जूरम्** / **द्वीपजम्** । क्ली। महापारेवते, द्वीपान्तर-खर्ज्जूरे। रा.नि.व.११।

**द्वीप(पि)शत्रुः** । पुं। शतावर्य्याम्। रा नि व.४। जटा।

**द्वीपसम्भवः** । पुं। काकोलवृक्षे। वैंच्ना। जीरके। (वा) स्त्री। महाखर्ज्जूरवृक्षे। वै.निघ.।

**द्वीपान्तरवचा** । स्त्री। चोपचिनीति ख्याते मूले। यथा—"द्वीपान्तरवचा किञ्चित्तिक्ता वह्निदीप्तिकृत्। विबन्धाध्मानशूलघ्नी शकृन्मूत्रविशोधिनी। वातव्याधीनपस्मारमुन्मादं तनुवेदनाम्। व्यपोहति विशेषेण फिरङ्गामयनाशिनी।" भा.।

**द्वीपिका** । स्त्री। अजमूल्याम्। रा.नि.व ४।

**द्वीपिनखः** । पुं। व्याघ्रनखे। नखी। वै.निघ.।

**द्वीपिनी** । स्त्री। वटपत्रपाषाणभेदे। वै.निघ.।

**द्वीपिपलाशः** । पुं। हस्तिकर्णपलाशे। वा. सू १५अ मुष्ककादि.। "मुष्ककस्नुक्पलाशद्वीपिपलाशधवशिंशपा।" [रा नि.व ११२८।

**द्वीपी (इन्)** । पुं। व्याघ्रविशेषे। चित्रकवृक्षे।

**द्वीप्यः** । पुं। काके। क्ली। काकोली। वै.निघ.।

**द्वीप्या** । स्त्री। शतावर्य्याम्। रा नि.व.४। पिण्डखर्ज्जूरवृक्षे। रा नि.व ११।

**हैयः** । पुं । चक्रलाविशेषे । रत्न,र स्त्रीरी चि ।

**हैय्यम्** । क्ली । कद्दोले रा नि व १२ ।

**हैमातृक** । पु । नदीवृष्यनुपालिते देशे । रा नि व २ ।

**हैयणीया** । स्त्री । नागवल्लीविशेषे । द्दोसयली इति धीरसमुद्रदेशे ख्याता । हैसमीया इति पुस्तकान्तरे पाठ । रा नि व ११ ।

**हान्तर** । पुं । जातिद्वयसम्भूते सर्पे । दो आँमला साप । सु कल्प टी ।

**हाष्टम्** । क्ली । ताम्रे । अम । [दे । मा नि. ।

**हाह्निक. (हीन.)** । पु । एकदिनान्तरज्वे

---

# ध

**धटः (का)** । पु । धववृत्ते । धाउया गाछ । वै निघ । तुलामाने । उवाजू । धाड़ा । अम । १४ वल्लमाने । ४२ वति । लीलावती ।

**धटी** । स्त्री । वल्कले । वै निघ । जीर्णवस्त्रखण्डे । धडि । मे ।

**धत्तूरः** । पु । धुस्तूरवृत्ते । रा नि व १० ।

**धनम्** । पु, क्ली । मरिचे । अर्थे । वै निघ. । स्नेहपाने । अ र ।

**धनकम्** । क्ली धान्यके । धनिया । वै निघ. २भ सन्न्यज्व.चि गुडूच्यादि ।

**धनच्छ. (च्छू)** । पु, स्त्री । पक्षिविशेषे । धानस पाखी, कर्कटिया पाखी । त्रिका. ।

**धनञ्जयः** । पुं । अर्जुनवृत्ते । रा नि व.८ । वै निघ २भ अजी चि पञ्चाग्निचूर्णे । अग्नौ । अम । चित्रकवृत्ते । र मा. । [ठालरात् ।

**धनद** । पुं । हिज्जलवृत्ते । रा नि व ८ । मा

**धनद्राची** । स्त्री । पाटलवृत्ते । रा नि व १० । स्वताकरञ्जे । रा नि व ८ । [त्रिका । हारा ।

**धनपिशाची (चिका)** । स्त्री । लज्जायां ।

**धनप्रिया** । स्त्री । काकजम्बूवृत्ते । वन जाम । रा नि व ११ । [वै निघ ।

**धनसुः** । पु । धूम्राटपक्षिणि । फिङे पाखि ।

**धनस्य(स्व)क.** । पुं । गोक्षुरकवृत्ते । अ.च ।

**धनहर.** । पुं । ग्रन्थिपर्णवृत्ते । गेँठेला । मा रकौकयमात्याम् । वै निघ. ।

**धनह(हा)री** । स्त्री । पारसीकयमान्याम् । ग्रन्थिपर्णभेदे । अम. ।

**धनद्दत्** । पु । वन्ध्याककन्दे । वै निघ. ।

**धना (नी)** । स्त्री । आर्द्रधान्यके । वै निघ. । धान्यके । वै निघ.२भ.वा व्या चि षडशीतिगुग्गुलौ । अत्रि २स्थान २अ ।

**धनिक** । पु । धान्यकवृक्षे । धने गाछ । रा नि व ६ । क्ली । धान्यके । धने । च द शि र्यो. सन्निपातज्व मष्टाङ्गकषाये । "तिक्तेन्द्रबीजधनिके" ।

**धनिका** । स्त्री । धान्यके । धने । अत्रि २स्थान । प्रियङ्गुलतायाम् । श.च । [धनिया । श र ।

**धनीयकम्** । क्ली । आर्द्रधान्यके । धान्यके ।

**धनु (नू)** । पु । भल्लातकवृक्षे । चारवृक्षे । पियाशाल । मे. । [११ । अम. ।

**धनु प(ष्य)ट.** । पु । प्रियालवृक्षे । रा नि.व

**धनु शाखा** । स्त्री । मूर्वायां । मूर्वी । श च ।

**धनु श्रेणी** । स्त्री । मूर्वायाम् । प सु । महेन्द्र वारुण्यां । बड माकाल, वाघालशसा । रा नि. व ३ ।

**धनुर्गुणा** । स्त्री । मूर्वायाम् । श च. ।

**धनुर्द्रुमः** । पु । वंशे । वाँश । रा नि व ७ ।

**धनुर्माला** । स्त्री । मूर्वायाम् । श.च ।

**धनुर्न्यासः** । पु । दुरालभायाम् । प सु. ।

**धनुर्लता** । स्त्री । सोमवल्लयाम् । सोमलता । रा नि व ३ ।

**धनुर्वातः** । पुं । वातव्याधिविशेषे यत्र सर्व्व सन्धिषु वेदनारुधिर भवति । "अनिच्छन्त्यगता यस्तु उपभुङ्क्ते परस्त्रियं । बलादाक्रम्य स नर सर्व्वसन्धिषु वेदना । तीव्रामाप्नोत्यसन्धिमान् धनुर्वातयुतो भवेत् ।" इति कर्म्मविपाक ।

**धनुर्वीज.** । पु । भल्लातकवृक्षे । रा नि व ११ ।

**धनुर्द्रुमः** । पुं । धर्मनवृक्षे । धामनि गाछ । र मा. । रा नि.व ८ । वंशे । भल्लातकवृक्षे । अञ्ज त्वक्षे । रा.नि.व ११ ।

**धनुष.** । पु । कुकुरे । वै निघ ।

**धनुष्यः** । पु । वंशे । बाँश । रा.नि व.७ ।

**धनुस्तम्भः** । पुं । वातव्याधिविशेषे । धनुष्टङ्कार । स वाह्याभ्यन्तरायामभेदाद्द्विविध । लक्षणं —"धनुस्तुल्यो नमेद्यस्तु स धनुस्तम्भसञ्ज्ञित । विवर्णदशनवदन स्रस्ताङ्गो नष्टचेतन । प्रस्विद्यंश्च धनुष्मी दशरात्र न जीवति ॥" मा.नि. । [भ ।

**धनेयकम्** । क्ली । धन्याके । धनिया । अ टी

**धनैषणा** । स्त्री । एषणासु नरस्य द्वितीयैषणायाम् । धनप्रार्थना । 'प्राणेभ्यो ह्यनन्तर धनमेव पर्य्येष्टव्यं भवति । तदुपकरणानि च कृषिपाशुपाल्यवाणिज्यराजोपसेवादीनि । यानि चान्यान्यपि सतामविगर्हितानि कर्म्माणि वृत्तिपुष्टिकराणि विद्यात् ।' च सू ११च ।

**धन्यः** । पुं । अश्वकर्णशाले । लता शाल । रा नि.व ९ । क्ली । द्रव्ये । वै निघ । कैवर्त्तमुस्तायां । च द १२च. ।

**धन्ययष्टिः** । पु । अश्वत्थवृक्षे । वै निघ. ।

**धन्या** । स्त्री । धन्याके । धने । हि च । उपमातरि । वै निघ. । आमलक्याम् । क्ली । निर्जल प्रदेशे । वै निघ ।

**धन्याकम्** । क्ली । (Coriandrum sativum) Coriander plant. स्वनामख्यातद्रव्ये । प स । धने । हि धनिया । ते कोत्तिमिरवित्तु, धनियालु । ता कोत्तमल्लि । च द मल्लिपात्त्व चि नागरादिः । "धन्याकं बृहतीद्वयम् ।" पि ज्व.चि. । "वुषित धन्याकजलम् ।" पि ग्रेष्मव्य चि गुडूच्यादि । गुणा — तुवर स्निग्धम् अवृष्यं मूत्रल लघु तिक्त कटूष्णवीर्य्यं दीपनं पाचनं ज्वरघ्न रोचक ग्राहि स्वादुपाकं त्रिदोषघ्न तृष्णादाहवमिश्वासकासकार्श्यक्रिमिघ्न । आर्द्रं तत् तद्गुणसम्पन्न स्वादु विशेषत पित्तघ्न । भा पु १भ. । मद व.१ ।

**धन्य.** । पु । दुरालभायाम् । वै निघ ।

**धन्वकः** । पु । धामनवृक्षे । च.द मेह चि "पाठार्ज्जुनधन्वकानां"

**धन्वङ्ग** । पु । धामनवृक्षे । धामना गाछ । गुणा —"धन्वङ्ग कफपित्तास्रकासहृत्तुवरो लघु । बृहणो बलकृद्रूक्ष सन्धिकृद्वातकोपन. ॥" भा म.१ भ प्रमे चि. । वंशे । वै निघ ।

**धन्वचारी** । त्रि । निर्जलदेशवासिनि । वा. चि ७च. ।

**धन्वतरु.** । पु । सोमवल्लाम् । वै निघ. ।

**धन्वदुर्गम्** । क्ली । निर्जलदेशे । पुराणम् ।

**धन्वन.** । पु । धामनवृक्षे । धामना गाछ । र. मा । हिं धामिनी । म धमानु । क चदुवे । गुणा — कटु उष्ण कषाय कफघ्न दाहशोषकर संग्राही कण्ठदोषघ्न । रा नि व.९ । एतत्फलं कषाय हिम स्वादु वातकफघ्न सु सू ४६च. ।

**धन्वन्तरि** । पु । वैद्ये । त्रिदशी आयुर्वेदप्रवर्त्तरि देवतावैद्ये । तस्य प्रादुर्भाव —"एकदा देवराजस्य दृष्टिर्निपतिता भुवि । तत्र तेन नरा दृष्टा व्याधिभि परिपीडिता ॥ तान् दृष्ट्वा हृदय तस्य दयया परिपीडितम् । दयार्द्रहृदय शक्रो धन्वन्तरिमुवाच ह ॥ धन्वन्तरे सुरश्रेष्ठ भगवन् किञ्चिदुच्यते । योग्यो भवसि भूतानामुपकारपरो भव ॥ उपकाराय लोकानां केन किं न कृतम्पुरा । त्रैलोक्याधिपतिर्विष्णुरभून्मत्स्यादिरूपवान् ॥ तस्मात्त्वं पृथिवीं याहि काशीमध्ये नृपो भव । प्रतीकाराय रोगाणामायुर्वेदप्रकाशय ॥ इत्युक्त्वा सुरशार्दूल सर्वभूतहितप्सया । त्रयक्रमायुर्वेद धन्वन्तरिमुपादिशत् ॥ अधीत्य चायुर्वेदमिन्द्राद्धन्वन्तरि पुरा । आगत्य पृथिवी काश्यां जातो बाहुजवेश्मनि ॥ नाम्ना तु धीरसवत् ख्यातो दिवोदास इति क्षितौ । बाल एव विरक्तोऽभूच्चचार सुमहत्तप ॥ यत्नेन महता ब्रह्मा तं काशीनगरीनृपम् । तत्रो धन्वन्तरिर्लोके काशिराजोऽभिधीयते ॥ हिताय देहिना भीषा ब्रह्मणा विहितात्मना । चत्र विद्यार्थिनो लोकान् सहिता-न्नाम्नाध्यापयत् ॥" भा. । चिकित्सादीपकनिदाननिघण्ट्वादिप्रणेतरि । [प्र ष. ।

**धन्वन्तरिग्रस्ता** । स्त्री । कटुकायां । कट्की ।

**धन्वन्तरिपञ्चकम्** । क्ली । धन्वन्तरिकृतग्रन्थविशेषे ।

**धन्वन्तरिभाग** । पुं । औषधकरणार्थे वैद्यलभ्यौषधादिभागे । सिद्धरसानां १० भ तैलघृतलोहानां ८ भ लेहवटिकानां ७ भ । वै निघ ।

**धन्वमांसम्** । क्ली । निर्जलदेशपशुमांसे । वा चि १२ अ । See जाङ्गलमांसम् ।

**धन्वयवासः (क)** / **धन्वयासः** । पुं । दुरालभायाम् । रा नि व ४ । सि यो रक्तार्शे चि । "धन्वयवासो सनागरो क्वथितो ।" च सू ४ अ । सि यो सन्निपात ज्व चि अष्टादशाङ्गकषाये । [चि १ अ ।

**धन्वा (न्)** । पु । मरुभूमौ । रा नि व २ । च

**धन्वामिषम्** । क्ली । जाङ्गलपशुमांसे ।

**धन्वी (इन्)** । पु । दुरालभायाम् । रा नि व ४ । अर्जुनवृक्षे । रा नि व ९ । बकुलवृक्षे । रा नि व १० ।

**धमनः** । पु । नलवृक्षे । नल गाछ । रा.नि व ८ । निम्बवृक्षे । निम गाछ । रा नि व ९ ।

**धमनि (नी)** । स्त्री । पृश्निपर्ण्याम् । ठाकुरले । रा नि व.४ । उत्तरापथप्रसिद्धनलिकानामगन्धद्रव्ये । भा । हे च । नखीनामगन्धद्रव्ये । हरिद्रायाम् । शिरायाम् । रा नि व १८ । शिराविकार एव धमनी । धमन्यश्च नाभिजाः तत् संख्या च २४ । तेषु दशोर्द्ध्वगा, शेषास्तिर्य्यग्गाश्च । तेषूर्द्ध्वगा रूपरसगन्धस्पर्शशब्दप्रश्वासोच्छ्वासजृम्भक्षुतहासभाषणरोदनगानादिकर्म्म सम्पादयन्तो देहं धारयन्ति । ताश्च हृदयं गत्वा प्रत्येकं शाखात्रयं विस्तारयन्त्य ३०संख्या भवन्ति । तासु प्रत्येकं द्वे द्वे कृत्वा दश धमन्यो वातपित्तकफशोणितरसान् वहन्ति । अष्टौ च रूपादीनि गृह्णन्ति । शिष्टासु द्वादशसु द्वाभ्यां वाङ्निष्पत्ति, द्वाभ्यां घोषणं, द्वाभ्यां निद्रा, द्वाभ्यां जागरणं, द्वाभ्याञ्च रक्तवहन भवति । शिष्टेन स्तनसंश्रितेन द्वयेन च स्त्रियाः स्तन्यवहनं पुंसश्च शुक्रवहनं स्तनाभ्यां भवति । अधोगास्तु दश पित्ताशयमधिगम्य विभक्तास्त्रिंशत्संख्या । तासु द्वे द्वे वातपित्तकफरक्तरसान् वहतः । शिष्टाश्च द्वे अन्नमाश्रित्यान्नं वहतः । द्वे जलं वहतः, द्वे वस्तिमाश्रित्य मूत्रं वहतः । द्वाभ्यां पुरुषस्य शुक्रं स्त्रियश्चार्त्तवञ्च प्रादुर्भवति, द्वे च तद्द्वयं निःसारयतः । द्वे स्थूलान्त्रनिबद्धे मूत्रपुरीषं निःसारयतः । अवशिष्टाश्चाष्टौ तिर्य्यग्गामिन्यो स्वेदं निःसारयन्ति । एताश्चाधोगा धमन्यः पक्वाशयकटिमूत्रपुरीषगुह्यवस्तिमेढ्रपादप्रभृतीन्याश्रित्य तेषां पोषणं सम्पादयन्ति । तिर्य्यग्गाश्च धमनीचतुष्टयं प्रत्येकमसंख्यशाखाविभक्तं देहं रन्ध्रमयिवत् करोति । एतासाञ्च मुखानि प्रतिलोमकूपसलग्नानि । तेभ्यश्च मुखेभ्यः स्वेदा निर्गच्छन्ति, देहरसो वहिरन्तश्च सन्तर्पयति । अभ्यङ्गादिना च तैलादिवीर्य्यमन्तः शरीरं प्रविश्य त्वकपाकादिकं करोति तेनैव च शुभाशुभस्पर्शज्ञानं भवति ।" सु. शा ९ अ । भा ।

**धम्मिः** । स्त्री । अन्त्रे । धमन्याम् । हारा ।

**धयनम्** । क्ली । पाने । रा नि व २० ।

**धर** । पु । कार्पासतूलके । मे ।

**धरणः** । पु । तुलायां । स्तने । धान्ये । हे च । तण्डुले । वै निघ । क्ली । कालिङ्गचतुर्माषमिते माने । प प्र १ख । पलदशमांशे । २४ रक्तिकामाने । रौप्यषोडशमाषे । वै निघ ।

**धरणी** । धारणीकन्दे । रा नि व ७ । शिरायां । रा नि व १८ । खदिरवृक्षे । रा नि व २२ । पुनर्नवायाम् । मेदायाम् । वै निघ । शाल्मलिवृक्षे । श च ।

**धरणीकन्द** । पु । धारणीकन्दे । रा नि व.७ ।

**धरणीधरः** । पु । पर्व्वते । कच्छपे । रा.नि. व.१८ ।

**धरणीवन्धः** । पु । अरिष्टबन्धने । सर्पविषोक्त वन्धनविशेष । स शाखादष्टस्य दशदेशाच्चतुरङ्गुले न्याय्य । यदाह वाभट —"दंशस्योपरि बध्नीयादरिष्टां चतुरङ्गुले । क्षौमादिभिर्वेणिकया सिद्धैर्मन्त्रैश्च मन्त्रवित् ॥" अ.हृ विष.चि. ।

**धरा** । स्त्री । शिरायाम् । नाड्याम् । रा नि.व. १८ । वसायाम् । गर्भाशये । मे ।

**धराकदम्बः (क)** । पु । कदम्बवृक्षे । हारा ।

**धराङ्कुर** । पु । भूच्छत्राके । वै निघ. ।

धराजकुष्माण्ड: । पुं । भूमिकुष्माण्डे । भुँइ कुमड़ा । चि.क्र.क.खीरी.चि. ।

धरिमा (न्) । पुं । तुलायाम् । तराजू । मा करे । वै.निघ. ।

धरुण: । पुं । जले । मे. ।

धर्त्तूर: । पुं । श्वेतधुस्तूरे । वै.निघ. ।

धर्म्म: । पुं । स्वभावे । आचारे । गुणे । मे. ।

धर्म्मघ्न: । पुं । विभीतकवृक्षे । वै.निघ. ।

धर्म्मण: । पुं । धमनवृक्षे । धामना गाछ । र. मा. । सर्पभेदे । ढेमना साप । मे. ।

धर्म्मद्वेषी (इन्) । पुं । विभीतकवृक्षे वै.निघ. ।

धर्म्मपत्तनम् । क्ली । मरिचे । रा.नि.व.६ ।

धर्म्मपत्र: । पुं, क्ली । उदुम्बरवृक्षे । श.च. ।

धर्म्मवृक्ष: । पुं । अश्वत्थवृक्षे । रा.नि.व ११ ।

धर्म्मसू: । पुं । धूम्याटपक्षिणि । श.र. ।

धर्म्मिणी । स्त्री । रेणुकायाम् । रेणूक । रा. नि.व.६ । [आँकोड । श.च. ।

धलण्ड: (ण्ड:) । पुं । स्वनामख्यातवृक्षे । धला

धर्ष: (र्षितम्) । पुं, क्ली । मैथुने । त्रिका. । जायी ।

धव: । पुं (Anogeissus latifolia Syn. Conocarpus latifolia.) स्वनामख्यातवृक्षे । धाओया गाछ । र.मा. । मं धामोडा । कं दिंडि वृक्ष । तैं तारिवचेट्टु । गुणा.—कटु: कषाय: कफघ्न: वातघ्न: पित्तकोपन: रुच्य: दीपनश्च । राज. । "धव: शीत: प्रमेहार्श: पाण्डुपित्तकफापह: । मधुर स्तुवरस्तस्य फलञ्च मधुरं मनाक् ॥" भा. । अन्यच्च —"धव: कषाय: कटुक: कफवातविनाशन: । पित्तप्रकोपनो रुच्यो निर्दिष्टो दीपन: पर: ॥" क खमीकम्मधुरम् । रा.नि.व.८ । काके । त्रिका । मनुष्ये । श्रम । खदिरे । र.मा.सं मधुमयलीवृ ।

धवनी । स्त्री । पृश्निपर्ण्याम् । चाकुलिया । वै. निघ. ।

धवल: । पुं । धववृक्षे । धाओया गाछ । रा.नि. व.८ । यवे । श्वेतकर्पूरे । रा.नि.व.१२ । धातकी वृक्षे । वै.निघ । क्ली । मेतमरिचे । रा.नि.व.६ । त्रि । श्वेते । सुन्दरे । त्रिका. ।

धवलपत्र: (त्री (त्र)) । पुं । हंसे । रा. नि.व.१९ । [पाँकन । रा.नि.व १० ।

धवलपाटली । स्त्री । शुक्लपाटल्याम् । श्वेत

धवलमृत्तिका । स्त्री । खटिकायाम् । कुल खड़ि । रा.नि.व.१३ ।

धवलयावनाल: । पुं । श्वेतवर्णयावनालवृक्षे । शादा जनार । मं श्वेतजुवारी । कं बिलि यजोल । थयं शिर्म्मीधान्ये वर्त्तते । गुणा:—शै- त्य: बल्य. त्रिदोषघ्न उष्ण. रुचिप्रद. पर्श्नोघ्न: पथ्य. गुल्मव्रणघ्न । रा.नि.व.१६ ।

धवलशारिवा । स्त्री । शुक्लशारिवायाम् । अनन्तमूल । वै.निघ. ।

धवला । स्त्री । श्वेतशारिवायाम् । See धवला श्वेतशारिवा च । भा.पू.१भ. । गवि । शादा गरू । त्रिका. । वचायाम् । श्वेतापराजितायाम् । र.चि. पापरोगाणकरत्से ।

धवली । स्त्री । शुक्लगवि । श्रम. ।

धवलेक्षु: । पुं । श्वेतेक्षौ । रा.नि.व.१४ ।

धवलोत्पलम् । क्ली । कुमुदपुष्पे । नीलफूल, हाला फूल । रा.नि.व.१० ।

धवित्रम् । क्ली । मृगचर्म्मनिर्म्मितव्यजने । श्रम. ।

धाक: । पुं । वृषे । क्ली । अन्ने । स्तम्भे ।

धातकी । स्त्री (Woodfordia floribunda. Grislea tomentosa.) स्वनामख्यात पुष्पवृक्षे । धाइ फुलेर गाछ । हिं धावइ, धा वोड़ा । मं धायटी । तैं धारिपुष्पु, जाजि । उत्. ज्ञातिकी । गुणा:—कटु: उष्णा मदकारिणी प्रवाहिकातिसारघ्नी विसर्पव्रणघ्नी च । रा.नि. व.६। "धातकी कटुका शीता मदकृत्तुवरा लघु: । तृष्णातिसारपित्तास्रविषक्रिमिविसर्पजित् ॥" भा. । शीता रक्तपित्तघ्नी च । राज. ।

धातकीकुसुम(पुष्प)म् । क्ली । धातकीपुष्पे । धाइ फुल । सु.सू.३८श.कषायादि: । च.सू. ४श. ।

धातक्यभिषुतम् । क्ली । धातकीपुष्पकृतसुराभेदे । गुणा.—हृद्यं रुच्यं दीपनं दीपनञ्च । च. सू.२७श. ।

**धातक्यादिचूर्णम्** । क्ली । बालरोगाधिकारे औषधम् । पाठः—"धातकीबिल्वधन्याकलोध्रेन्द्रयववालकम् । लेहः क्षौद्रेण बालानां ज्वरातीसारवान्तिजित् ॥" धाइफुल, বেলশুঁটা, ধনে, লোধ, ইন্দ্রযব, বালা প্রত্যেক চূর্ণ সমভাগ মধু দ্বারা লেহন । सा कौ. ।

**धाता** । पुं । स्रष्टरि । शरीरादिसंयोगस्य धारणहेतौ । सु.शा.१म. ।

**धातुः** । पुं । खनिजेषु स्वर्णादिसप्तविधाष्टविधनवविधपदार्थेषु । धाउ । यथा—काञ्चनं रजतं ताम्रं कांस्यं पित्तलं नाग वङ्गं लौहञ्चेत्यष्टौ । रा.नि.व.१८ । स्वर्णरौप्यताम्रवङ्गयशदसीसलौहानीति सप्त । भा. । तथा—"हेमताराऽऽरनागाश्च ताम्रवङ्गे च तीक्ष्णकम् । कांस्यकङ्कान्तलौहञ्च धातवो नव कीर्त्तिता. ॥" सुखबोधः । "त्रिविधन्तु सुवर्णं स्यादष्टधा रजतं भवेत् । पञ्च प्रकारकं ताम्रं वङ्गन्तु द्विविधं स्मृतम् । यशदं त्रिविधं प्रोक्तं भवेन्नागस्तु षड्विधः । अष्टधा लौहमुद्दिष्टमेते सप्तैव धातवः ॥" भर्क.चि. । गुणाः—"बलीपलितखालित्यकार्श्याबल्यज्वरामयान् । निवार्य देहं दधति नृणां ते धातवो मताः ॥" भा.पू.१म.धातुव. । देहधारकवस्तुविशेषे । स च वातपित्तकफरूपः देहस्य धारणात्तस्य धातुशब्दवाच्यता । यथा—"धारणाद्धातवस्ते स्युर्वातपित्तकफास्त्रयः ।" वैद्यकम् । गैरिकमनःशिलाद्यश्मविकारे । प.मु. । शरीरस्यसप्तधातुषु रसरक्तमांसमेदोऽस्थिमज्जशुक्रेषु । "रसादक्तं ततो मांसं मांसान्मेदोऽस्थि तद्भवं । अस्थ्नो मज्जा ततः शुक्रमित्यमेषां विनिष्क्रम ॥" रा.नि.व.१८। धातूनाञ्च कर्म्माणि प्रीणनजीवनलेपस्नेहधारणपूरणगर्भोत्पादनानि । गिरिमृत्तिकायां । रा.नि.व.१३।

**धातुक(ज)म्** । क्ली । शिलाजतुनि । वै.निघ ।

**धातुकाशीष(सीस)म्** । क्ली । कासीसे । हिरेक्रम् । रा.नि.व.१३ ।

**धातुकी** । स्त्री । धातकीवृक्षे । वै निघ. ।

**धातुग्राही (इन्)** । पु । खर्परे । वै.निघ. ।

**धातुघ्नम्** । क्ली । काञ्जिके । है.च. ।

**धातुचेतनकरम्** । क्ली । दुग्धे । आमलके । हिदलौ । वै.निघ. ।

**धातुद्रावकम्** । क्ली । टङ्कणक्षारे । সোহাগা । वै.निघ. ।

**धातुनाशनम्** । क्ली । काञ्जिके । चिका. ।

**धातुपः** । पुं । शुक्रे । रसे । श.च. ।

**धातुपाकः** । पुं । रसादिधातुह्रासे । तल्लक्षणम्—"निद्रानाशो हृदिस्तम्भो विष्टम्भो गौरवारुची । अरतिर्बलहानिश्च धातूनाम्पाकलक्षणम् ।" वैद्यकम् । [प.मु । भा. ।

**धातुपुष्पिका (ष्पी)** । स्त्री । धातकीवृक्षे ।

**धातुमलः** । पुं । शीसके । रसादिमलेषु । द्रावकादिव मल । "मलिनीकरणान्मलाः ॥" वैद्यकम् । "कफः पित्तं मलः खेषु प्रस्वेदो नखलोम च । नेत्रविट् त्वक्षु च स्नेहो धातूनां क्रमशो मलाः ॥" भा ।

**धातुमारिणी** । स्त्री । टङ्कणक्षारे । श.च ।

**धातुमारी (इन्)** । पुं । गन्धके । वै निघ. ।

**धातुमाक्षिकम्** । क्ली । स्वर्णमाक्षिके । रा.नि.व.१३ । धातुकाशीषे । हिरेकम् । वै.निघ. ।

**धातुराजः (कम्)** । पुं, क्ली । वीर्य्ये । शुक्र । वै.निघ. । श च. । [प मु. ।

**धातुवल्लभम्** । क्ली । टङ्कणे । সোহাগা ।

**धातुवादी (इन्)** । पुं । खनिजविद्याभिज्ञः ।

**धातुविट्** । स्त्री । शीसके । वै निघ ।

**धातुविषम्** । क्ली । हरितालादौ । र.सा.सं. ।

**धातुवृद्धिः** । स्त्री । रसादिवृद्धौ, रसादिधातुसाम्ये । च.सू १२म । [आम्रपलाशवर्य्यादौ ।

**धातुवृद्धिकरः** । पुं । धातुवर्द्धकद्रव्ये, अष्टवर्ग-

**धातुवैरी (इन्)** । पुं । गन्धके । श च. ।

**धातुवैषम्यम्** । क्ली । विकारागमरूपकार्य्ययोनौ । च वि ८म. ।

**धातुशेखरम्** । क्ली । Green sulphate of Iron. धातुकाशीषे । हिरेकम् । है.च. ।

**धातुशोधनम्** । क्ली । शीसके । वै.निघ. ।

**धातुशोधनकरी** । स्त्री । हरीतक्याम् । वै.निघ. ।

**धात्र्यादि** । पु । चातुर्थिकज्वरघ्ने धात्रीमुस्ता-मृतचीद्रकृते कषाये । वा चि १५ ।

**धानक** । पु । माषपरिमाणे । च कल.१२ञ । क्ली । धन्याके । मद व २ ।

**धाना (ना)** । स्त्री । चिपीटके । चिडे । प मु । भ्रष्टयवादौ । भाजा यवादि । हि बहुडा । गुणा —विष्टम्भिनी रूक्षा तर्पणी लेखनी गुरुश्च । चर । 'यवादयश्च ये भ्रष्टा धानास्ते परिकीर्त्तिता । रा नि व ६ । "धाना सुदुर्जरा रूक्षास्तृप्रदा गुरवश्च ता । तथा मेहकफच्छर्द्दिनाशन्य सम्प्रकीर्त्तिता ॥" धन्याके । धनियाँ । भा । अ ङ्कुरभ्रष्टयवे । सु चि १०ञ ।

**धानाकाः** । स्त्री । धान्याके । धने । वा सू. १५ञ गुडच्यादि । "धानाकारक्तचन्दनम् ।" (ब हुवचनान्तो) । [दिव छातु । हृ च ।

**धानाचूर्णम्** । क्ली । भृष्टयवादिचूर्णे । यवा

**धानिका** । स्त्री । धान्यके । धने । वै निघ ञ सा चि यवान्यादौ । [लुडचे । रा नि व ११ ।

**धानी** । स्त्री । धान्यके । धने । मद व २ । पी

**धानुष्का** । स्त्री । अपामार्गवृक्षे । आपा° गा छ । श.च ।

**धानुष्यः** । पु । वंशे । रा नि व ८ ।

**धानेय(क)म्** । क्ली । धन्याके । रा.नि व ६ । आर्द्रधान्यके । काँचा धनियाँ । वै निघ ।

**धान्धा** । स्त्री । एलायाम् । श च. ।

**धान्यम्** । क्ली । ४ तिलमाने । ६ गुञ्जामाने । धान्याके । धने । रा नि व ६।२३ । भूम्यामलक्याः । रा नि व २३ । (Oryza sativa.) ( ommou rice plant. शाल्यादिवृक्षे । सतुषतण्डुले । धा । धान्य त्रिधा शालिषष्टिकव्रीहिभेदत । यथा—"शालयो हैमनास्तत्र षष्टिका ग्रैष्मका अपि । व्रीहयस्त्वाशव ख्याता प्रावृट्कालसमुद्भवा ॥" राज १प । शूकशिम्बीतृणधान्यभेदेन त्रिधा । रा नि.व १६ । शालिव्रीहिशूकशिम्बीक्षुद्रधान्यभेदेन पञ्चविधम् । "शालयो रक्तशाल्याद्या व्रीहय षष्टिकादय । यवादिकं शूकधान्यं मुद्गाद्यं शिम्बिधान्यकम् । कङ्ग्वादिकं क्षुद्रधान्यं तृणधान्यञ्च तत्स्मृतमिति ।" भा पू १भ धा.व. । अष्टादशविधम् । यथा —"रक्तशालिर्महाशालि कलमा षष्टिकापरा । खञ्जरीटीपताक्षी च नीरजान्या कपिञ्जला । सौगन्धी शूकला चान्या तिलवासी कचोरका । गरुडा वक्रवल्ली च काल मान्या तथापरा । विलज्जा मागधी मौता ता अष्टादश शालय ॥ कङ्गुश्चतुर्विधं प्रोक्तं श्यामाकं श्चीनक कट । कोद्रवो द्विविध प्रोक्तो वंशबीज शरोद्भव । कुसुम्भबीजं तीली च योनरी च गवेधुक । द्विजाङ्गला राजनी च क्षुद्रधान्यगणस्त्वयम् ॥" क्षुद्रधान्यम् । त्रिधा यवश्च गोधूमो मुद्ग षड्विध ईरित । द्विविध प्रोच्यते माषो राजमाषस्त्रिधा मत । मकुष्ठस्तुवरी त्रेधा निष्पावकमसूरकौ । त्रिधा चणक उद्दिष्ट कलायश्च त्रिपुण्ड्रक ॥"अत्रि । एषां गुणा स्वस्वपर्य्याये ज्ञेया । शरद्ग्रीष्मोद्भवधान्यगुणा — धान्यं शरद्ग्रीष्मभवं पाकेऽम्लं पित्तकृद्गुरु ।" ऋतुसन्धिजधान्यगुणा —"ऋतुसन्धिभवं स्तोकं पित्तलं कफनाशनम् ॥" राज १प. । स्थलजधान्यगुणा —"स्थलजं कफपित्तघ्नं कषायं कटुपाकि च । किञ्चित्तु तिक्तमधुरं पवनानलवर्द्धनम् ॥" वापितावापितधान्यगुणा — "वापितं गुरु तद्धान्यं किञ्चिद्धीनमवापितम् ।" रोप्यातिरोप्यधान्यगुणा —"रोप्यातिरोप्ये लघुनी शीघ्रपाके गुणोत्तरे । अदाहिनी दोषहरे बल्ये मूत्रविवर्द्धने ॥" यच्छूकसमन्वितं व्रीह्यादिकं तच्छूकधान्यम्, शिम्बीनिगूढं मुद्गमकुष्ठकादि शिम्बीधान्यम् । तृणोद्भवतया तृणधान्यम् । इति । "पक्वं हरितलूनञ्च धान्यं सम्यग्गुणावहम् । शुष्कं लूनन्तु निःसारं रूक्षं तन्मत्वनाशनम् ॥" इति हरितलूनान्नशुष्कलूनान्नगुणा । "कोमधान्यं नवम्वल्यं मधुरं वत्सरोषितं । निर्द्दोषं लघु पथ्यञ्च तद्वर्षाद् चिरस्थवेत् । नवं धान्यमभिष्यन्दि लघु संवत्सरोषितं । हाब्दोषितं लघु पथ्यं त्रिवर्षाद्बलभृद्भवेत् ॥" इति नवधान्यजीर्णधान्यगुणा । धान्यं वापितम् उत्तम, तदेव छिन्नोद्भवं मध्यमम् । दग्धभूमौ वने वा वापितं छिन्नोद्भवं धान्यं विष्टम्भकरम् । चारोदकसमुत्पन्नं श्वभ्ररोगघ्नम् । सुचिक्कणभूमिजम् चाजीबलकरम् । बालुकाभूमिजञ्च लघुरिष्टहरञ्च । रा नि व १६ ।

**धान्यकम्** । क्ली । स्वनामख्यातपण्यद्रव्ये । धने । हि कोथुम्बुरि । धनिया । मद व १ । गु

धा. —मधुरं शीतलं कषायं पित्तघ्नं ज्वरकासद्वश्वासच्छर्दिकफघ्नं दीपनञ्च । रा.नि व ६ । च.मू ४ अ. । च द.ज्वरादि चि. । "विल्वधान्यकनागरै. ।" सुं । माषमितमाने । ७ कुँठ । प.प्र.१ख. ।

**धान्यकचुकी (इन्)** । पु । धान्यत्वचि । धानेर खोसा । गुणा.—धान्यगुणयुक्त । रा नि. व.१६ ।

**धान्यकतण्डुलः** । पुं । कण्डितधन्याकतण्डुले । धनेर चाल । भा.म १भ अम्लकाञ्जि चि.धान्यकक्वाथे । "प्रातर्धान्यकतण्डुलक्वाथ ।"

**धान्यकल्कः** । पु । तुषे ।

**धान्यचतुष्कम्** । क्ली । अतीसारे धान्यसुण्ठकबालकविल्वक्रतकषायविशेषे । वैद्यकम. । क्लि. ।

**धान्यचमसः** । पुं । चिपीटके । चिंडे । चि

**धान्यजम्** । क्ली । धान्ये । रा नि व ६ ।

**धान्यतुषोदम्** । क्ली । धान्यतुषक्रतसन्धानविशेषे । एतदभावे काञ्जिकम् । सि.यो अजी.चि. ।

**धान्यतैलम्** । क्ली । गोधूमयावनालव्रीहियवादिजतैले । गुणा. — त्रिदोषशमनं कण्डूकुष्ठादिहरं चक्षुष्यञ्च । रा.नि व १५ ।

**धान्यपञ्चकम्** । क्ली । आमशूलादौ कषाये । "धान्यकं नागरं मुस्तं बालकं विल्वमेव वा । आमशूलविबन्धघ्नं पाचनं वह्निदीपनम् ॥" वैद्यकम.। पञ्चविधधान्येषु शालिव्रीहिशूकशिम्बीक्षुद्राख्येषु । "शालिधान्यं व्रीहिधान्यं शूकधान्यं तृतीयकं । शिम्बीधान्यं क्षुद्रधान्यमित्युक्तं धान्यपञ्चकम् ॥" भा. ।

**धान्यपटोलः** । पु, क्ली । पित्तश्लेष्मज्वरे योगविशेषे । अत्र धान्यस्य १० माषा. पटोलस्य च ६ माषा' । सि यो.ज्व.चि. ।

**धान्यपानकम्** । क्ली । धान्यक्रतपानकविशेषे । धनेर पाना। तस्य साधनविधि —"शिलायां साधु सम्पिष्टं धान्यकं वस्त्रगालितं । शर्करोदकसंयुक्तं कर्पूरादिसुसंस्कृतं । नूतने मृण्मये पात्रे स्थितं पित्तहरं परम् ॥" भा. ।

**धान्यपिप्पली** । स्त्री । आमज्वरे । ज्वरे दीपनी पाचनी च । धान्यादीनां प्रत्येकं ६ माषा ४ रात । यो रत्ना ।

**धान्यमण्डः** । पुं,क्ली । धान्यक्रतमण्डे । धानेर मण्ड । गुणाः—"धान्यमण्डं पित्तहरं श्रमघ्नञ्चाऽस्रदोषहृत् । वातलं रक्तशमनं ग्राहि सन्दीपनम्परम् ॥" अत्रि.१२अ. ।

**धान्यमद्यम्** । क्ली । धान्यक्रतमद्ये । धेनो मद । गुणा' – गुरु विष्टम्भि च । रा नि व.१४ ।

**धान्यमाषः** । पुं । कलाये, माषे । वै निघ । षोडशसर्षपपरिमाणे । च.कल्प.१२अ. ।

**धान्यराजः** । पु । यवे । रा.नि.व १६।२३ ।

**धान्यवीजम्** । क्ली । धन्याके । रा नि व ६ ।

**धान्यवीरः** । पु । माषे । माष कलाय वा विवि कलाय । रा.नि.व.१६ ।

**धान्यशाकम्** । क्ली । धन्याकशाके । धनेर शाक । र चि ८अ. । [ऊड वा शीष । लटा ।

**धान्यशीर्षकम्** । क्ली। धान्यकणिशे । धानेर

**धान्यश्रेष्ठम्** । क्ली । हैमन्तशालिधान्यभेदे, वृधान्ये । हैमन्तिक धान्यविशेष । रा.नि व.१५ ।

**धान्यस्वेदः** । पु । धान्याम्ले स्वेदे । माषादिकोषधान्ये स्वेदे । सु.चि ३२अ ।

**धान्या** । स्त्री । धान्यके । अत्रि २स्थान १अ ।

**धान्याकम्** । क्ली । धान्यके । मद.२व. । वै. निघ.१भ.छर्दि.चि. ।

**धान्याग्रम्** । क्ली। धान्यकणिशे ।

**धान्याभ्र(क)म्** । क्ली । अभ्रकविशेषे । कृत्रिम अभ्रविशेष । तत्करणप्रणाली भावप्रकाशे— "पादांश शालिसंयुक्तमभ्रं बद्धा च कम्बले । त्रिरात्रं स्थापयेन्नीरे तत् क्लिन्नं मर्दयेत्करै. । कम्बला द्गलितं सूक्ष्मं वालुकारहितञ्च यत् । तद्धान्याभ्रमिति प्रोक्तमभ्रमारणसिद्धये ॥" इति । तद्ग्रहणप्रकरणम्—"कृत्वाभ्रं धमितं तत. क्षीरे विनिक्षिपेत् । भिन्नपत्रन्तु तत् कृत्वा तण्डुलीयाम्बयोद्रवै । भावयेदष्टयामन्तदेव शुध्यति चाभ्रकम् । कृत्वा धान्याभ्रकं तत्तु शोषयित्वा तु मर्दयेत् । अर्कक्षीरैर्दिनं मर्द्यमर्कमूलद्रवेण वा । वेष्टयेदर्कपत्रेण सम्यग्गजपुटे पचेत् । पुनर्मर्द्यं पुन पाच्य सप्तवारं प्रयत्नत. । ततो वटजटाक्वाथैस्तद्देयं पुटत्रयम् ॥" र.चि,४अ ।

**धान्याम्ववम्** । क्ली । मधुरम्लीरक्रतसन्धान-

विशेषे । লেবুর আরক । मधुभाण्डे जम्बीररसैरापूर्य धान्यराशौ मास स्थापयेत् । वै निघ ।

**धान्याम्बु** । क्ली । धान्योदके । वा चि ६ष. ।

**धान्याम्ल(क)म्** । क्ली । रसस्वेदनकाञ्जिकविशेषे । यथालब्धनिस्तुषधान्यानि जलेन भाण्डमध्ये तावद्रक्षेत् यावदम्लत्वं नायान्ति । ततश्च तन्मध्ये भृङ्गराजमुण्ड्यपराजितामत्स्याक्षीसर्पाक्षीसहदेवीत्रिफलानीलापराजिताहंसपादीचित्रक समूलं यथालाभं कुट्टयित्वा देयम् । "नानाधान्यैर्यथाप्राप्तैस्तु षन्नैर्जलान्वितैः । मृद्भाण्डं पूरितं रक्षेत् यावदम्लत्वमाप्नुयात् । तन्मध्ये भृङ्गरा मुण्डी विष्णुकान्ता पुनर्नवा । मीनाक्षी चैव सर्पाक्षी सहदेवी शतावरी त्रिफला गिरिकर्णी च हंसपादी च चित्रकं । समूलं कुट्टयित्वा तु यथालाभं विनिःक्षिपेत् । पूर्वोक्तभाण्डमध्ये तु धान्याम्लकामिदं स्मृतम् । स्वेदनादिषु सर्व्वत्र रसराजस्य योजयेत् ॥" भा २भ । च द दध्या चि । काञ्जिके । काञ्जि । रा नि व १५ । तत्साधनप्रणाली यथा—"धान्याम्लं शालिचूर्णञ्च कोद्रवादिकृतं भवेत् । धान्याम्लं धान्ययोनित्वात्प्रीणनं लघु दीपनं । अरुचौ वातरोगेषु सर्व्वेष्वास्थापनेषु च ॥" भा पू २भ. ।

**धान्यारि** । पु. । वनमूषके । रा नि व १९ ।

**धान्यासव** । पु । धान्यकृतासवे । सुडधान्यधातकीसुरासौवीरकसैरेयमेदकधान्याम्लेषु षट्सु । च सू २५अ । [व.१६ ।

**धान्योत्तमम्** । क्ली, पु । शालिधान्ये । रा नि.

**धान्वः** । त्रि । जाङ्गले । वा चि २भ. ।

**धान्वन्तरघृतम्** । क्ली । प्रमेहाधिकारे घृतम् । गव्यघृत १६ श । क्वाथार्थ—दन्तीमूल चित्रकमूलम् एषां प्र ८ प हरीतकी २० प देवदारु कदम्ब केलिकदम्बत्वक् वरुणत्वक् आरग्वधत्वक आम्रत्वक् पुनर्नवा करञ्जत्वक प्र ६ प दशमूल मिलित्वा ६४ प वारि चतुर्गुण शे. चतुर्थांश । "कल्क"—पञ्चलवण पञ्चकोल प्र २ तो. । इति धन्वन्तरम् । सा को । घৃত ১৬ শ । কাথার্থ—দন্তীমূল, চিতামূল প্রত্যেকে ৮ প হরীতকী ২০ প. দেবদারু ৬ প. কদম্ব, কেলিকদম্ব, বরুণ, সোঁদাল, আম্র, পুনর্নবা, করঞ্জ প্রত্যেকের ছাল ৬ প দশমূল মিলিতে ৬৪ প জল চতুর্গুণ শে চতুর্থাংশ। কল্কার্থ—পঞ্চলবণ, পিপুল, পিপুলমূল, চই, চিতামূল শুঁট প্রত্যেকে ২ তো । द्वितीयम्—गव्यघृत ४ श । क्वाथार्थ—दशमूल करञ्जद्वयस्य फल (तदभावे त्वक) देवदारु हरीतकी शुक्लपुनर्नवा वरुणमूल दन्तीमूल चित्रकमूल पुनर्नवा कदम्बत्वक् केलिकदम्बत्वक स्नुहीत्वक् बिल्वत्वक् भल्लातक शटी पुष्करमूल कणामूलम् एषां प्र १० प. यवकोलकुलत्थानां प्र १६ प वारि २१० श, शे ५४ श ४ प । कल्कार्थ—हिज्जलमूल त्रिफला भार्गी रोहितकमूलं गजपिप्पली शुण्ठी वचा विडङ्ग गुञ्जारोचनी एषां प्र ५॥० तो । च द । ঘৃত ৪ শ. । ক্বাথার্থ—দশমূল করঞ্জ, রক্ত করঞ্জ দেবদারু, হরীতকী, শ্বেতপুনর্নবা, বরুণ দন্তী, চিতা, পুনর্নবা, কদম্ব, কেলি কদম্ব, সিজু, বিল্ব, ভেলা, শঠী, পুষ্করমূল, পিপুলমূল প্রত্যেকে ১০ প যব, কুল, কুলথ প্রত্যেকে ১৬ প. জল ২১০ শ শেষ ৫৪ শ ৪ প. । কল্কার্থ—হিজলমূল, ত্রিফলা, বামুনহাটী বহনামূল, গজপিপুল, শুঁট, বচ, বিড়ঙ্গ, কমলাগুঁড়ি প্রত্যেকে ৫॥০ তো. । रस र. । [मि.।

**धाम** (न्) । क्ली । शरीरे । श्रम । जन्मनि ।

**धामकम्** । क्ली । कर्षे । गन्धद्रव्य वा ग्राम कर्पूर । रा नि व ८ । पु । माषपरिमाणे । "द्वे मध धामकश्चैव ।" च म ।

**धामनी** । स्त्री । शोणितवाहिशिरायां । श च ।

**धामार्गवः** । पु । पीतघोषायाम् । পীত ঘোষা । धुन्धुल । हि नेनुआ । च सु । सु सू २८अ. । च सू १।२अ । अपामार्गे । रक्तापामार्गे । भा पू १ भ । महाकोषातक्याम् । ঝিঙ্গা । हि तारई । ते छतरीयि, चैतिपीर । रा नि.व.७ । राजकोषातक्याम् । वा टी हेमा ।

**धार** । पु । पापाणविशेषे । सन्तती । द्रवद्रव्यमात्रे । क्ली । वृष्ट्युदके । वृष्टির জল । तच्च द्विविधं गाङ्गं सामुद्रञ्चेति । "धाराभिः पतितं तोयं गृहीतं स्फीतवाससा । शिलायां वसुधायां वा धौतायां पतितञ्च यत् । सौवर्णे राजते ताम्रे स्फटिके काच

क्षीललतायाम्। বড লতাফটকী। काकोल्यां। रा नि व ३। क्षीरकाकोल्याम्। वै निघ। शिग्रु पाठचे। শিশু গাছ। प मु। कृष्णशिग्रुपायां, কালশিশু বা কাল অগুরু। रा नि व ९। शुक्लवचायाम्। काण्टकसेवत्याम्। वै निघ.। मद्य विशेषे। रा.नि व १४।

**धीरावी।** स्त्री। पीतशिग्रुपायाम्। वै निघ।

**धीवरी।** स्त्री। शतमूल्याम्। रा नि व ४।

**धीहरा।** स्त्री। कुन्दुरौ। वै निघ.।

**धुकः (का)।** पु, स्त्री। भूमिवदरवृक्षे। वै निघ.।

**धुकन्धुकम्।** क्ली। वदरीफले। मद व ६।

**धुकी।** स्त्री। भूवदरे, हस्तिकोल्याम्। আম-কোলী। मद व.६। [गृहधूमे। ঝুল। मे.।

**धुन्धुमारः।** पुं। इन्द्रगोपनामकीटविशेषे।

**धुरणीफलः।** पु। शुन्नवृक्षे। प मु।

**धुरन्धरः।** पु। धववृक्षे। प मु। र मा।

**धुर्दर, धुर्य्य.।** पु। ऋषभके। रा नि.व.५।

**धुस्तु(स्तू)रः।** पु। (Datura fastuosa) कृष्णधुस्तूरे। (Datura elba) श्वेतधुस्तूरे। (Datura metel.) उपविषपर्य्यायस्तनामख्या तकस्तच्चुपे। ধুতুরাগাছ। र मा। हि धातुरा। मं धत्तूर। क मदकुणिगे। तें उम्मेत्तचेट्टु तम उन्मेत्त। ता. কারুউমতে। गुणा —कटुत्वं कान्तिकारी व्रणघ्न. त्वग्दोषखर्जूकण्डूज्वरघ्न भ्रम जनकश्च। रा.नि व १०। मूर्च्छाजनक अग्निघ्न पित्तघ्नश्च। राज.। 'धुस्तूरादिव यद्गोजमन्यच्चापि विषञ्च यत्। चीरेण पाचयेद्दोलायन्त्रेण शुद्धिमाप्नुयात्।" इति शोधनम्। सा.कौ.। घण्टाकर्णक्षुपे। ঘেঁটু গাছ। रुद्रतैले। सा.कौ।

**धुस्तूरतैलम्।** क्ली। कर्णरोगाधिकारे पक्वतैलम्। 'निशागन्धपलैः पक्वं कटु तैलं पलाष्टकं। धुस्तूरपत्रजरसे कर्णनाडीनिषूदनम्।" कटुतैलं ८ प धुस्तूरपत्ररस १६ प। कल्कार्थे—हरिद्रा गन्धकयो प्रत्येक १ प.। सा कौ.। इदमेव रसरत्नाकरे गन्धकतैलम्। [निघ।

**धूक.।** पु। वायौ। वकुलवृक्षे। विडाले। वै.

**धूनकः (नः)।** पु। शालनिर्यासे। धूना। त्रिका। क्ली। कम्पने।

**धूनराजः।** पु। वृक्षविशेषे। क्रमिमत्तुबीति प श्चिमदेशे। गुणा मूत्रल ग्राही कफघ्न दन्तरोगघ्नो बल्य मेहाद्युग्दरघ्नश्च। श्चि.।

**धूनिः।** स्त्री। कम्पने। व्याक।

**धूप.।** पु। उष्णखेदे। ভাপরা। सुगन्धीकरणे गन्धद्रव्यादिधूमे तद्वर्त्तौ च। हि च। माहेश्वरादौ। धूपार्थे द्रव्यगणो यथा—'द्विधागुर्देवदारुश्च गन्धपाषाणकस्त्रिधा। गुग्गुलु पञ्चधा सर्जो निर्यासः सरलस्य च। पद्मकाष्ठं भोचरसो निर्यास सल्लकस्य च। राल नेपालकश्चेति गणोऽयं धूपसञ्ज्ञक॥" अर्क.चि.।

**धूपकम्।** क्ली। तूलकाष्ठे। रा नि व.९।

**धूपद्रुम.।** पु। रक्तखदिरे। रा नि व.८॥

**धूपनम्।** क्ली। धूपाधिवासने। धूपेन घर्षाक र्षणे। ভাপরা। Lumigation व्रणादीनां क्रियाविशेषे। শুকো গনম্। स च व्रणशोधना-नन्तर विधेय। तद्द्रव्य यथा—"श्रीवेष्टके सर्जरसे सरले देवदारुणि। सारेष्वपि च कुर्वीत मतिमान् व्रणधूपनम्॥" सु।

**धूपनः।** पु। धूनके। धूना। श.मा.।

**धूपवृक्ष. (क.)।** पु। रक्तखदिरवृक्षे। रा नि. व ८। देवदारुवृक्षे। सरलवृक्षे। त्रिका। श.र।

**धूपसरला।** स्त्री। धूपाङ्गसरलवृक्षविशेषे। वै निघ.। [१२।

**धूपाग(गु)रु।** क्ली। दाहागुरुणि। रा नि व

**धूपाङ्गः।** पु। श्रीवेष्टनामकसुगन्धकाष्ठे। টার্পেন্টাইন্ গাছ। रा.नि व.१२।

**धूपार्हम्।** क्ली। कृष्णागुरुणि। रा नि व १२।

**धूप्यः।** पु। नखीनामगन्धद्रव्ये। रा नि व १२।

**धूमः।** पु। शिलारसे। गृहधूमे। ঝুল। मेघके। ধোঁওয়া। गुणा —"स च श्लेष्मकरो धूमो नेत्रयोरहितो भ्रमम्। शिरोगौरवकश्चापि वातपित्तञ्च कोपयेत्॥" भा। वातपित्तवर्द्धक। राज १५। अस्य पानार्थे पञ्चविध—प्रायोगिकः स्नेहन रेचन कासघ्न वामनोयपति। पञ्चविधा एव धू

**धूमरजः** । क्ली । गृहधूमे । झूल । भैष.कर्णरोग.चि. ।

**धूमसः** । पुं । माकन्दी । वै.निघ. ।

**धूमसारः** । पुं । गृहधूमे । झूल । र.सा.सं. ।

**धूमसी** । स्त्री । मुद्गविदलादिकृतवटिकायाम् । पापड, दालवड़ि, चुकुनि । प्रणाली यथा— "माषाणां दालयस्तोये स्थापितास्त्यक्तकञ्चुकाः । आतपे शोषिता पश्चात् पिष्टास्ता धूमसी स्मृता । धूमसीरुचिरा सैव प्रोक्ता सुभुंरिका बुधैः । सुभुंरी कफपित्तघ्नी किञ्चिद्वातकरी स्मृता ।" भा ।

**धूमा(म्र:)** । स्त्री, पुं । कृष्णशिंशपायाम् । वै.निघ. । [सहजातीयपक्षिणि । च.

**धूमिका** । स्त्री । कुज्झटिकायां । त्रिका. । अ

**धूमोत्थम्** । क्ली । वज्रक्षारे । रा.नि.व ६ ।

**धूमोद्गारः** । पुं । पित्तजरोगभेदे । भा. ।

**धूम्या(म्रा)टः** । पुं । कुलिङ्गपक्षिणि । फिङे । अम. । [नि.व.१२ । उष्ट्रे । घटा. ।

**धूम्रः (कः)** । पुं । सिह्लके । शिलारस । रा.

**धूम्रपत्रा** । स्त्री । स्वनामख्यातक्षुपे । तामाक । मं गांधाली । कं कन्नगिरि । धत्. धूयापतर । गुणाः—तिक्ता शोफघ्नी क्रमिघ्नी उष्णा कासघ्नी रुक्षा दीपनी च । रा.नि.व.५ ।

**धूम्रपत्रिका** । स्त्री । धूम्रपत्रायाम् । रा.नि.व.१३ । गन्धतृणे । गन्धतृणभेदे । वै.निघ. ।

**धूम्रमूलिका** । स्त्री । यूलीतृणे । रा.नि.व.८ ।

**धूम्रलोचनः** । पुं । कपोते । रा नि.व.१८ ।

**धूम्रवर्णः (कः)** । पुं । सिह्लके । शिलारस । रा.नि.व.१२ । कीकड़नामविशेषवृक्षे । रा.नि.व.१८ ।

**धूम्रवर्णा** । स्त्री । वराटिकाभेदे । रा.नि.व.१३ ।

**धूम्रशूलः** । पुं । उष्ट्रे । वै.निघ. ।

**धूम्रा** । स्त्री । मत्स्याक्ष्यां । रा.नि.व.७ ।

**धूम्राह्वा** । स्त्री । धूम्रपत्रायाम् । रा.नि.व.५ ।

**धूम्रार्चिः** । स्त्री । धूमस्तम्भायाम् । वै.निघ. ।

**धूम्रिका** । स्त्री । कर्णमिश्रणाघे । दालमिछ वा पणुई । रा.नि.व.८ ।

**धूर्त्तः** । पुं । श्वेतकृष्णधुस्तूरवृक्षे । प.मु । धत्तुरवृक्षे । कूष्माण्डे । वै.निघ. । चोरक नामगन्धद्रव्ये । गेंटेला । रा नि.व.१२ । क्ली । लौहकिट्टे । हेच । विड्लवणे । रा नि.व.६ । [श.र. ।

**धूर्त्तकः** । पुं । कीलिकदम्बे । प.मु । शृगाले ।

**धूर्त्तकृत्** । पुं । धुस्तूरवृक्षे । श मा. ।

**धूर्त्तजन्तुः** । पुं । मनुष्ये । श.च. ।

**धूर्त्तमानुषा** । स्त्री । रास्नायाम् । श.च. ।

**धूर्त्तरः** । पुं । पारदे । रा.नि.व.१३ ।

**धूर्त्ता** । स्त्री । शुक्लकण्टकार्य्याम् । वै.निघ. ।

**धूर्व्वरः, धूर्य्यः** । पुं । ऋषभके । वै.निघ. ।

**धूलकम्** । क्ली । विषे । श च. । [अम. ।

**धूलिः** । पुं । परागे । गर्द्दभे । पार्थिवरजसि ।

**धूलिका** । स्त्री । धूली । पुष्पपरागे । वै.निघ. । कुज्झटिकायाम् । श र. । [र । त्रिका. ।

**धूलिगुच्छः (कः)** । पुं । पिष्टातके । आबी-

**धूलिजङ्घः** । पुं । काके । काक । वै.निघ. ।

**धूलिपुष्पिका** । स्त्री । केतकीवृक्षे । केया गाछ । रा.नि.व.१० । श्वेतकेतके । वै.निघ. ।

**धूलीकदम्बः (कः)** । पुं । कदम्बवृक्षविशेषे । धाराकदम्ब । मं धूलिकदंबु । कं धूलिगडव । गुणैः धाराकदम्बतुल्यः । रा.नि.व.१० । तिनिशवृक्षे । वरुणवृक्षे । मे. ।

**धूसरः** । पुं । गर्द्दभे । उष्ट्रे । वनपटके । कपोते । रा.नि व.१८ । मुद्रे । वै.निघ. । त्रि । पाण्डुवर्णे । मे. । [शुक्लपुष्पराम्नायाम् । वै.निघ. ।

**धूसरच्छदा** । स्त्री । श्वेतपुङ्खायाम् । प.मु. ।

**धूसरपत्रिका (त्री)** । स्त्री । वृश्चिकाल्याम् । बिछाति । शिवमल्लीशाके । प.मु. । हस्तिशुण्डीनामक्षुपे । हातिशुँड़ । रा.नि.व.५ ।

**धूसरमुद्गः** । पुं । धूसरवर्णमुद्गविशेषे । मं धूसरमूग का पीवरमूग । गुणाः—रसवीर्य्यविपाकेषु हरिन्मुद्गसमः कषायः मधुरः रुक्षः पित्तकृत् वातविबन्धकृच्च । रा नि व.१६ ।

**धूसरा** । स्त्री । पाण्डुरफल्लीनामक्षुपे । रा.नि.व.४ ।

धूसराह्वयः । पुं । गर्दभे । वै.निघ. ।
धूसरी । स्त्री । गर्दभ्यां ।
धूस्तूरः । पुं । धुस्तूरवृक्षे । प.मु. । [हि.च. ।
धृतराष्ट्रः । पुं । हंसभेदे । हंसजातीयपक्षिणि ।
धृतराष्ट्री । स्त्री । हंसविशेषपत्न्याम् । मे. ।
धृतिः । स्त्री । धैर्य्ये । वेगविघाते । भा.म ३भ. उदा.चि. ।
धृष्णुः । स्त्री । कञ्चिकायां । कञ्चि । श.च ।
धेनिका । स्त्री । धान्याके । धने । भा ।
धेनुः । स्त्री । दुग्धवत्या गवि । अम. ।
धेनुका । स्त्री । धान्यके । धने । मद.व.२ । हस्तिन्या । गवि । मे. ।
धेनुकारिः । पुं । नागकेसरवृक्षे । वै निघ ।
धेनुजिह्वा । स्त्री । गोजिह्वानामक्षुपे । रा.नि व ४ । [गोदुग्धे ।
धेनु(का)दुग्धम् । क्ली । चिर्भट्याम् । भा ।
धेनुदुग्धकरः । पुं । मज्जरवृक्षे । रा.नि.व.८।
धेनुमक्षिका । स्त्री । गोमक्षिकायाम् । डाँश माछि । वै निघ. ।
धोड़ः । पुं । डुण्डुभे । ঢোড়াসাপ । श.र. ।
धौतम् । क्ली । रौप्यधातौ । रा.नि व.१३ । नीलकाशीसे । नील हिराकस् । वै.निघ. ।
धौतकौशेयम् । क्ली । धौतकौषजे । पट्टोर्णे । श.र. ।
धौतखण्डी । स्त्री । खण्डशर्करायां । वै.निघ. ।
धौतशिलम् । क्ली । स्फटिके । त्रिका. ।
धौमतम् । क्ली । रक्तपीलौ । धूम्रथराशि । वै. निघ. ।
धौरः । पुं । धवहक्षे । धाওয়া गाछ । भा. ।
ध्माङ्क्षः । पुं । काके । बके । जलकाके । पान- কৌড়ী । अम । जलपक्षिभावे । तक्षके । वै निघ. ।
ध्मा(ध्वा)ङ्क्षजङ्घा । स्त्री । काकजङ्घायाम् । रा.नि.व ४ । [मदन्मू । रा.नि.व.११ ।
ध्मा(ध्वा)ङ्क्षजम्बूः । पुं । काकजम्बूवृक्षे । भ-
ध्मा(ध्वा)ङ्क्षतण्डुलफला । स्त्री । काकजङ्घायाम् । वै.निघ. ।
ध्मा(ध्वा)ङ्क्षतुण्डा (ण्डी) । स्त्री । काकादनीलतायाम् । काकनासालतायां । कूँच गाछ । रा.नि.व.३ ।
ध्मा(ध्वा)ङ्क्षदन्ती (नखी) । स्त्री । काकादनीलतायाम् । काकनासालतायाम् । रा.नि.व.३।
ध्मा(ध्वा)ङ्क्षनामा (नाम्नी) । स्त्री । काकोदुम्बरिकायाम् । रा नि.व.११ ।
ध्मा(ध्वा)ङ्क्षनाशिनी । स्त्री । हवुषाभेदे हवुष फल । रा.नि व.४ । भा. ।
ध्मा(ध्वा)ङ्क्षनासा (सिका) । स्त्री । काकनासालतायाम् । कूँच गाछ । रा.नि.व ३ ।
ध्मा(ध्वा)ङ्क्षपुष्टः । पुं । कोकिले । धारा ।
ध्मा(ध्वा)ङ्क्षमाची । स्त्री । काकमाचीक्षुपे । रा.नि.व ४ । [रा नि.व.४ ।
ध्मा(ध्वा)ङ्क्षवल्ली । स्त्री । काकजङ्घायाम् ।
ध्मा(ध्वा)ङ्क्षादनी । स्त्री । काकादनीलतायाम् । रा.नि व.३ ।
ध्मा(ध्वा)ङ्क्षारातिः । पुं । पेचके । हला. ।
ध्मा(ध्वा)ङ्क्षी । स्त्री । काकोल्याम् । काँदनी । मे. । काकजङ्घायाम् । वै.निघ. ।
ध्मा(ध्वा)ङ्क्षोली । स्त्री । काकोल्याम् । काँद्नी । प.मु. । रा.नि.व.३ ।
ध्मापनम् । क्ली । अग्निसन्धुक्षणे ।
ध्यामम् । क्ली । दमनकवृक्षे । मे. । कत्तृणे । ग्रामकर्पूरे । प.मु । सु.चि.१९अ. । च.द.ग्रन्थि पातज्व.चि.अपराजिताधूपे । च.द.वा.व्या.१८अ तौ प्रसारणीतैले । वै निघ १भ.गुग्गुल्वादिधूपे । मूलके । सु सू.२५अ. ।
ध्यामकम् । क्ली । कत्तृणे । ग्रामकर्पूरे । च सू । प.मु.५अ. । सु सू.१८अ.एलादि: । रोहिषे वा.सू १५अ.हिमा (अभावे तयोर्) । भा.म.३४ विष.चि. । "पिप्पली ध्यामकं मांसी ।" भा.म म.ज्व.चि । [वटवृक्षे । मद.व.५ । त्रिका.
ध्रुवः । पुं । धववृक्षे । धाওয়া गाछ । र.मा.

ध्रुवा । स्त्री । शालपर्ण्याम् । रा नि व.४ । मूर्व्वायाम् । मे ।

ध्वंस: । पुं । मद्यविकाररोगे । लक्षण यथा—"श्लेष्मप्रसेक कण्ठास्यशोष शब्दासहिष्णुता । तन्द्रानिद्राभियोगश्च ज्ञेय ध्वंसकलक्षणम् ॥" च.।

ध्वंसी । स्त्री । मानविशेषे, त्रसरेणुपरपर्य्याये मागधमाने । "त्रसरेणुस्तु पर्य्यायनाम्ना ध्वंसी निगद्यते ।" य म १ख । पु (इन्) । गिरिसपीलौ । श र. ।

ध्वज: । पु क्ली । शिश्ने । भा म उ. १ "ध्वजपतत्वती नृणां क्लैब्यं समुपजायते ।" "ध्वज चिह्ने पताकायां मेढ्रे ।" विश्व । तालवृक्षे । रा नि व ८।

ध्वजद्रुम: । पु । तालवृक्षे । रा.नि व ८ ।

ध्वजप्रहरण: । पु । वायौ । श र ।

ध्वजभङ्ग: । पु । छिन्नपातक्षतक्लैब्यरोगविशेषे । ध्वजभङ्ग रोग । निदानलक्षणे यथा—"अतिव्यवायशीलो यो न च वाजीक्रियारत । ध्वजभङ्गमवाप्नोति स शुक्रक्षयहेतुक । अत्यम्ललवणक्षारविरुद्धासात्म्यभोजनात् । अत्यम्बुपानाद्विषमात् पिष्टान्नगुरुभोजनात् । दधिक्षीरानूपमांससेवनाद्व्याधिकर्षणात । कन्यागमनाच्चापि वियोनिगमनादपि । दीर्घरोमां चिररोत्सृष्टां तथैव च रज स्वलां । दुर्गन्धां दुष्टयोनिञ्च तथैव च परिस्रुतां । ईदृशीं प्रमदां मोहात् यो गच्छेत् कामहर्षित । चतुष्पदादिगमनाच्छेफसश्चाभिघातत । अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् । काष्ठप्रहारनिष्पेषशूकानाञ्च निषेवणात् । रेतसश्च प्रतीघातात् ध्वजभङ्गः प्रवर्त्तते ॥" च । See क्लैब्यम् ।

ध्वजवृक्ष: । पुं । माड इति कोङ्कणदेशख्यातवृक्षे । रा.नि.व.६ । [पिं । मे ।

ध्वजी (इन्) । पुं । मयूरे । रा नि.व.१८ । स-

ध्वनिग्रह: । पुं । कर्णे । त्रिका ।

ध्वनिबोधक(न)म् । क्ली । सुगन्धरोहिषतृणे । वै निघ. । [श्रम । अलपक्षिमात्रे ।

ध्वाङ्क्ष: । पु । काके । वके । मत्स्यादपक्षिणि ।

ध्वान्तवित्त: । पुं । खद्योते । श र. ।

ध्वान्तशात्रव: । पु । शोणाकवृक्षे । श.च. ।

ध्वान्तोन्मेष. । पु । खद्योते । जनाकि पोका । त्रिका ।

---

# न

न: । पुं । रवे । ए.को. ।

न:क्षुद्र: । त्रि । ह्रस्वनासिके । शब्दा । हे.च. ।

नकुटम् । क्ली । नासिकायाम् । श मा. ।

नकुल: । पु । (The bengal mungoose, Viverra ichneumon.) स्वनामख्यातजन्तौ । नेउल । हिं नेवली । म नेउरा । क मगुस । लक्षण—य स्थूलपुच्छो रक्तनेत्रो बभ्रुदेह स नकुल । शालिहोत्र । नकुलमांसगुणा —पिच्छिलं वातघ्नं श्लेष्मपित्तघ्नं । रा नि व १७ । 'गुरूष्णस्निग्धमधुरस्वल्पोपचयवर्द्धनम् । ह्रष्य पर वातहरम् . . ॥" च मृ.२७अ. । [ष्टा । रा नि.व.७ ।

नकुलाढ्या । स्त्री । गन्धनाकुल्याम् । गन्ध ना

नकुलान्ध्यम् । क्ली । नेत्ररोगभेदे । लक्षण—"विद्योतते यस्य नरस्य दृष्टिर्दोषाभिपन्ना नकुलस्य यद्वत् । चित्राणि रूपाणि दिवा च पश्येत् स वै विकारी नकुलान्ध्यसंज्ञ ॥" भा म.४भ. । नकुलान्धो दिवा चित्र पश्यति न तु निशि । चक्र. ।

नकुलारि: । पु । बिडाले । वै निघ. ।

नकुली । स्त्री । शङ्खिनीवृक्षे । वै निघ । शङ्खिन्याम् । चरक । कुङ्कुमे । हे च । नकुलपत्न्याम् । मांस्यां । जटामांस्यां । कुकुट्याम् । मुर्गी । मे. ।

नकुलेष्टका (ष्टा) । स्त्री । रास्नायाम् । चम ।

नक्तक: । पु । नेत्रपटले । वै निघ. । कर्पटे । लेकडा । अ टी भ । [त्रिका. ।

नक्तचारी (इन्) । पु । पेचके । विडाले ।

नक्तञ्चर: । पु । गुग्गुलौ । गुग्गुल । पेचके । जगा । कौमराजां । दुष्कुमे । रा.नि.व २३ ।

नक्तमाल । पु । करञ्जवृक्षे । डहरकरञ्ज । रा.नि व ८ । सु मृ ३८अ करञ्जमरिचाक्षपीले । मि.यो उक्ता चि ।

**नक्तमूलकम्** । क्ली । करञ्जमूले । पुं । महा करञ्जे । वै.निघ. ।

**नक्ता** । स्त्री । लाङ्गलीक्षुपे । विषलाङ्गलिया । रा नि व.४ । तृणविशेषे । गुलवास इति लोके । गुणा.—"नक्तला शीता गलगण्डहरी च । अपक्वा स्या पर्यायौ । वै.निघ. ।

**नक्तान्धः** । त्रि । रात्र्यन्धे । रातकाणा । रात्र्यान्ध्यस्य लक्षण यथा—"दिवा पश्यति य स्वच्छ रात्रौ नैव च पश्यति । नक्तान्ध इति तं विद्यात् विकारं पञ्चमीऽद्भवम् ॥" च द.२०च. ।

**नक्तान्ध्यम्** । क्ली । रात्र्यन्धतारोगे । निदा. ।

**नक्ताह्वः** । पुं । करञ्जवृक्षे । भैष ने.रो.चि. । "नक्ताह्वबीजवर्त्ति ।" च.द अ.शो चि । भा वा र.चि.त्रिफलागुग्गुली ।

**नक्रम्** । क्ली । नासिकायाम् । मे. ।

**नक्रः** । पु । याहे । वै.निघ । कुम्भीरे । अम. ।

**नक्रराजः (ट्)** । पु । महाग्राहमारे, याहे । हांगर । त्रिका. । [याम् । श.र. ।

**नक्रा** । स्त्री । मक्षिकादशमूल्याम् । नासिका

**नक्राण्डम्** । क्ली । कुम्भीराण्डे । च चि.२च ।

**नखम्** । क्ली, पु । शरीरोपधातुविशेषे, करजे । नख । रा.नि व.१८ । तत् गर्भस्थस्य षष्ठे मासि भवति । सुखबोध । नखीनामगन्धद्रव्ये । नखी । तें नखमुच्चिप्य । च.द.चन्दनाद्यतैले । नखीभेदे । प सु. । च सू ५च. । चुद्रनिष्पावे । वरवटी, छोट शिम् । वै निघ ।

**नखकुट्टः** । पुं । नापिते । त्रिका. ।

**नखगु(पु)च्छ[ञ्ज]फला** । स्त्री । श्वेतनिष्पाविकायाम् । श्वेत शिम्, श्वेत वरवटी । रा नि.व.० ।

**नखच्छेदनम्** । क्ली । नखस्य कर्त्तने । नख काटा । गुणा.—"पौष्टिक बल्यमायुष्यं शौचरूप विराजनम् । केशश्मश्रुनखादीनां कल्पनं सम्प्रसाधनम् ॥" राज.१प ।

**नखच्छेदा** । स्त्री । मेदायाम् । रा नि.व ५ ।

**नखनामा** । पु । नीलवृक्षे । वै निघ. ।

**नखनिकृन्तनम्** । क्ली । नखच्छेदनार्थे । नरुन । श चि. ।

**नखनिष्पावः (विका)** । पुं,स्त्री । शिम्बीभेदे । छोट शिम्, श्वेत वरवटी । रा.नि.व.० । See निष्पावी । [रा नि व ५ ।

**नखपर्णी** । स्त्री । वृश्चिकालीक्षुपे । विछाति

**नखपुड़ी (ष्पी)** । स्त्री । स्पृक्कायां । पिड़ि । रा.नि व १२ ।

**नखपूर्व्विका** । स्त्री । शिम्बीधान्यविशेषे । श्वेत वरवटी । रा नि व.० । [च सू.२०च ।

**नखभेदः** । पुं । बालरोगभेदे । कुनख्यादौ ।

**नखरः** । पुं । नखे । अम. ।

**नखरञ्जकः** । पु । नखरञ्जिनीवृक्षे । मेहेदी गाछ । "तिमिर कोकदन्ता च दिव्यली नखरञ्जक ।" वै द्रव्याभि. ।

**नखरञ्ज(ञ्जि)नी** । स्त्री (Myrtus communis.) वृक्षविशेषे । मेहेदी गाछ । वै.द्रव्याभि. । नखकृन्तन्यां । नरुन । उङ्कटः ।

**नखरायुधः** **नखायुधः** } पु । नखशस्त्रजन्तुमात्रे । सिंहे । ताम्रचूडे । व्याघ्रे । रा नि व १८ "शशकशल्लकीगोधामार्जाराद्या ।" चचि २०च. ।

**नखराह्वः** । पु । श्वेतकरवीरवृक्षे । रा.नि.व.१० ।

**नखरी** । स्त्री । नखीनामगन्धद्रव्ये । श मा । लघुशिम्ब्याम् । वै.निघ. । [चि. ।

**नखविष्किरः** । पु । नखायुधपक्षिमात्रे । श. ।

**नखवृक्षः** । पु । नीलवृक्षे । रा नि.व.९ ।

**नखशङ्खः** । पु । चुद्रशङ्खे । श र. ।

**नखशस्त्रम्** । क्ली । नखच्छेदनार्थम् पर्व्वैकत्रिकोधारायुक्ताष्टाङ्गुलशस्त्रविशेषे । नरुन प्रभृति । "वडिशनखशस्त्रमुद्रिकोत्पलपत्रकार्द्धधाराणि छेदने भेदने च ।" सु सू.८च. । तस्य फल द्वाङ्गुलायामम् एकाङ्गुलविस्तृतम् । सु टी.ड. । तच्छेदनभेदनयो. प्रशस्त नवाङ्गुलम् । तथाहि । "वक्रर्जधार द्विमुख नखशस्त्र नवाङ्गुल । सूक्ष्मशल्योद्धृतिच्छेदभेदप्रच्छादलेखने ॥" इति ।

**नखाङ्कम्** । क्ली । नखीनामगन्धद्रव्ये । श.र. । नखपत्रे ।

**नखाङ्कुरः** । पुं । नखे ।-वै.निघ. ।

**नखाङ्गम्** । क्ली । नलीनामगन्धद्रव्ये । र.मा. ।

**नखाभ्यङ्गः** । पुं । नखे तैलमर्दने । "तद्विधो नखाभ्यङ्गः शिरोनासाक्षि(चि)तापजित् ।" प्रयोगपारिजातः ।

**नखालिः** । पुं । क्षुद्रशङ्खे । श.च ।

**नखालुः** । पुं । नीलीवृक्षे । रा.नि व.६ ।

**नखाशी** (इन्) । पुं । पेचके । त्रिका. ।

**नखी** । स्त्री । स्वल्पनखाख्यगन्धद्रव्ये । ছোট নখী। "नख स्वल्पं नखी प्रोक्ता ।" भा. । सा रघोषीति राजवल्लभः । नखीमात्रे । "नखी पञ्चविधा प्रोक्ता गन्धाढ्या गन्धवत् परैः । काचिदुत्पलपत्राभा तथोत्पलदलोपमा । काचिदश्वखुराभा च गजकर्णसमा तथा । वराहकर्णसङ्काशा पञ्चमी परिकीर्तिता ॥" च.द टी. । तत्र वराहकर्णाभा न ग्राह्या । सा द्विधा एका शङ्खनखा अन्या शुक्त्याख्या वदरीच्छदा । र.मा. । सा. गुणा. – शङ्खीपचा तासज्वरकुष्ठघ्नी लघुः उष्णा वर्ण्या शुक्रला स्वादुः व्रणविषालक्ष्मीमुखदौर्गन्ध्यहरी पाके रसे च कटुः । भा. । उष्णा कटुः विषघ्नी कुष्ठकण्डूव्रणघ्नी भूतविद्रावणी च । रा.नि.व.१२ । शुद्धिः यथा—गोविट्क्वाथकचित्तसुखिन्ना मधुपाचिता नखी शुध्यति । तदभावात् यथालाभं गोमयादिषु गोमयजले वा पक्तव्या । तद्दोपदेशेन घृतेन भर्जयित्वा चर्णो कर्त्तव्या । तत-कुडुमादिगन्धद्रव्येण भावना कार्या । सर्वेषां गन्धद्रव्याणां गन्धतोयेन प्रक्षालनमावने कृत्वा रौद्रशुष्क कर्त्तव्यम् । सा.कौ. । च.द. ।

**नखीद्वयम्** । क्ली । द्विविधनख्यां । नखी, उत्पलपत्राभा, अश्वखुराभा चेति । च.द वा व्या.चि. महाराजप्रसारणीतैले ।

**नखीदयम्** । क्ली । कामाणड, कुरकराख्यो, इति द्वये । च.द.वा.व्य.चि । "विमद्यनखीद्वयम् ।"

**नगः** । पुं । वृक्षे । पर्व्वते । अम. ।

**नगकर्णी** । स्त्री । श्वेतापराजितायां । वै.निघ. ।

**नगगन्धा** । स्त्री । रास्नायाम् । वै.निघ. ।

**नगजः** । पुं । हस्तिनि । च.टी,भा. ।

**नगजा** । स्त्री । क्षुद्रपाषाणभेदे । रा नि व.५ ।

**नगजित्** । पुं । पाषाणभेदके । रा.नि.व.५ ।-

**नगणा** । स्त्री । पारावतपद्याम् । वनउच्छे-वा-मताफटकी । र.मा. ।

**नगपतिः** । पुं । तालवृक्षे । वै.निघ. ।

**नगपर्य्यायकर्णी** । स्त्री । अपराजितायाम् । वै निघ. ।

**नगभित्** । पुं । पाषाणभेदे । पाथरकुचि । रा.नि.व.५ । करञ्जोडिपाषाणभेदे । वै.निघ. ।

**नगभूः** । पुं । पाषाणभेदे । रा.नि.व ५ ।

**नगभेदनः** । पुं । करञ्जोडिपाषाणभेदे । वै. निघ. । [लिङ्गत् । अर्क वि: ।

**नगमालः** । पुं । शालिधान्यभेदे । गुणा. शा-

**नगरघातः** । पुं । हस्तिनि । व्याकरणम् ।

**नगराह्वम्** । क्ली । शुण्ठ्याम् । শুঁট । रा नि. व.६ ।

**नगरीवकः** । पुं । काके । त्रिका. ।

**नगरोत्था** । स्त्री । नागरमुस्तायां । रा.नि.व ६ ।

**नगरौषधिः** । स्त्री । कदलीवृक्षे । श.च. ।

**नगवृत्तिकः** । पुं । गुड़मल्लिकाया वृद्धिः काल्या वा । सु चि.२०अ ।

**नगवृत्तिका** । स्त्री । सन्नकीवृक्षे । सु चि.१५ अ. । कल्प.५अ ।

**नगाटनः** । पुं । वानरे । त्रिका. ।

**नगाश्रयः** । पुं.। हस्तिकन्दनामके महाकन्दशाके । रा.नि.व ७ । [पचिचि । अम. ।

**नगौकाः** । पुं । सिंहे । मे. । काके । श.च. ।

**नग्नहूः** । पुं । स्कोतौ । नानाद्रव्यकृतसुरावीजे । वाखुर इति लोके । भ. । [नि.व १८ ।

**नग्निका** । स्त्री । अनागतार्त्तवकन्यायाम् । रा:

**नटः** । पुं । श्योनाकवृक्षे । रा.नि.व.१०।१२। स्त्री । शाकवृक्षे । अम. । लोध्रवृक्षे । देवनाले । जटा. । क्ली । परिपेलवृक्षे । रा.नि.व.८ ।

**नटपत्रिका** । स्त्री । वार्त्ताकुवृक्षे । वै.निघ. ।

**नटपर्णम्** । क्ली । लघि । চাঁদড়া । वै.निघ. ।

**नटभूषणम्** । क्ली । हरिताले । र.मा. ।

**नटमण्डनम्** । क्ली । हरितालविशेषे । गोदन्ती । प.मु. । हरिताले । रा.नि.व १३ ।

**नटसंज्ञकः** । पु । हरिताले । त्रिका. ।

**नटी** । स्त्री । नलिकानामगन्धद्रव्ये । रा नि.व. ।१२ । अशोकवृक्षे । वै.निघ ।

**नड़ः** । पु । नले । नलखागडा । रा नि.व ८ ।

**नड़ीयः(प्राय.)** । त्रि। नलमयदेशे । हे च.।

**नड़मीनः** । पुं । चिलिचिमत्स्ये । श्रम ।

**नतम्** । क्ली । तगरपादिके । तगरपाडुका । प मु.। रा नि व.१०। वा.सू.१५अ भद्रदार्व्यादि । 'भद्रदारु नतं कुष्ठ ।" च द.सि.यो.यश चि शत पुष्पादिलेपे । "शतपुष्पं नतं कुष्टम् ।" सि यो पानीयकल्याणघृते । "स्थिरा नतं हरिद्रे द्वे ।" .भा.म.४भ । "नतवार्ताकिनीकुष्ठ .....।"

**नतद्रुमः** । पु । लताशाले । र.मा. ।

**नतनाड़िका** । स्त्री । प्रहरद्वयात् मध्यरात्रि पर्यन्त काले । वै.निघ. । [श्रम. ।

**नतनासिकः** । त्रि । चन्द्रमासायुक्ते । थौदा ।

**नताङ्गी** । स्त्री । कर्कटशृङ्गयाम् । मद.व.१ ।

**नद्नुः** । पुं । सिंहे । श.मा. ।

**नदीकदम्बः (म्बा)** । पु, स्त्री । गोरखमुण्डी, महाश्रावणिकायाम् । रा.नि.व.५ ।

**नदीकान्तः** । पुं । हिज्जलवृक्षे । हिज्जल गाछ । रा नि व.८ । जलवेतसे । वै.निघ । सिन्धुवारवृक्षे । मे. ।

**नदीकान्ता** । स्त्री । काकजङ्घाक्षुपे । रा.नि.व. ।४ । इक्षुकारवेल्लके । छोट उच्छे । जम्बूवृक्षे । जाम गाछ । मे. ।

**नदीकुठेरकः** । पु । नन्दीवृक्षे । रा.नि.व.११।

**नदीकूलप्रियः** । पु । जलवेतसे । अटा. ।

**नदीजम्** । क्ली । सौवीराञ्जने । पुं । अर्जुनवृक्षे । प मु. । यावनाले । हिज्जलवृक्षे । रा नि.व ८ । नदीनिष्पावे । रा.नि.व १६ । खर्जूरीवृक्षे । वै. निघ. ।

**नदीजलम्** । क्ली । नद्या जले । नदीर जल । सर्व्वाएव नद्यः प्राङ्मुखगा गुरुजला पश्चिममुखगा लघुसलिला., देशविशेषगुणानुसारेण गुरुलघुजलाश्च भवन्ति । तथा विन्ध्यान्निर्गत्य पूर्व्वमुखगा वातादोपं पश्चिममुखगा पित्तश्लेष्मानश्च दक्षिणमुखगा पित्तोद्रेकम् उत्तरमुखगा. पथ्यपाकाश्च कुर्व्वन्ति । हिमवद्विन्ध्यमलयसह्यादिप्रभवा नद्य शिरोरोगादीन् जनयन्ति । पारियात्रप्रभवाश्च तान् नाशयन्ति । इति देशविशेषान्नदीजलगुणा । सामान्यनदीजलगुणा —स्वच्छ लघु पावन दीपनं वर्ण्य तृष्णाघ्न पथ्य मधुरम् दोषदुष्णञ्च । कालभेदान्नदीजलगुणा —यथा प्रावृटकालीननदीजलसेवनात् पीनसकफश्वासकासा जायन्ते, शारदीयनदीजलपानं पथ्य वातकफघ्नञ्च, हैमन्तनदीजलपानं बुद्धिप्रदम्, शिशिरवसन्तकालीननदीजल सन्तापशमनं तृष्णादाहवमिश्रमप्रशमनं, तथा ग्रीष्मनदीजलं च दुष्णमेव करोति । रा नि व १४ । "तया प्राच्यप्रतीच्या. पश्चिमानुगमात्स्थया । ससैकता सपाषाणा द्विविधा चाम्बुवाहिनी । एव चतुर्विधा नद्यो वा तपित्तकफात्मिका ॥" अथ पाषाणनदीगुणा.— 'घनविमलशिलानां स्खलनाज्जातफेन बहलसलशीघ्रोक्षणसङ्क्षोभदत्तम् । ननु लघु च सुशीतं नाति चीणं घनञ्च हरति पवनपित्तं श्लेष्महारि सम्यक् ॥" सवालुकनदीगुणा.—"न घनविमल तोयं सैकताया. प्रवाहो न च भवति लघुत्वं श्लेष्महन्ति पित्तम् । भवति मधुरमेव किञ्चिदुष्णं कषाय भवति पवनकारी शोषमूर्च्छां निहन्ति ॥ गङ्गा सरस्वती शोणो यमुना सरयू सखी । वेत्रवती नीला उत्तरा पूर्व्ववाहिनी । हिमवत्प्रभवास्रोता हिमसम्भवशीतला' । समाः सर्व्वगुणैर्नद्यो वातश्लेष्महरा नृणाम् ॥ चासां नवशतैर्युक्ता गङ्गा मोक्षा मनीषिभि । तथा चर्म्मण्वती वेत्रावती पारावती तथा । चिप्रा महानदी पीता पूर्वकन्या समन्विता । शैवती शैवलिन्यश्च सिन्धुयुक्ता समुद्रगा । वातपित्तहरं नीरं त्रिदोषघ्न मतं परम् । प्रसन्नानिहरं रसमुनराशानुगामि च ।" इति मध्य उत्तरानुगा । "तापी तापा च गोमती गोमती सलिला मही । सरस्वतीयुता नद्यो मध्यदाशात्रिमानुगा । आसा जलं घनं पीतं पित्तघ्न कफकारया । वातदोषहरं हृद्य वण्यकुष्ठविनाशनम् ।-८-

हिमाद्रिसमुद्भूता गौतमी पुण्यभावना। आसां शीतं जलं वापि कफवातविकारनुत्। पित्तद शमनं वल्यं मूत्रदोषविकारनुत्। पूर्णा पयस्विनी वेला प्रणीता च वरानना। द्राणा गोवर्द्धनी याम्या शीतम्यनुगता इमा। कावेरी वीरकान्ता च भीमा चैव पयस्विनी। विभावरी विशाला च गोविन्दी मदनस्वसा। पार्श्वल्ययापरा नद्यो दक्षिणो दिग्गमा इमा॥'' अत्रि.७अ।

**नदीजा**। स्त्री। जलपिप्पल्याम्। खिरूक। वै.निघ.। अग्निमन्थवृक्षे। रा.नि व.६।

**नदीनिष्पावः**। पु। शिम्बीधान्यविशेषे, कटुशिम्ब्याम्। म नदीचेवर्ये। क तीरे आवरे। गुणाः—तिक्तः कटु गुरु रक्तकर, वातकफद, रुच कषाय, विषदोषहरश्च। रा.नि.व.१६।

**नदीवल्लः**। पुं। मेषशृङ्ग्याम्। वै.निघ.।

**नदीभल्लातकः**। पु। भल्लातकविशेषे, पानीयभल्लातके। प सु.।

**नदीभवः**। पु। चुद्रशङ्खे। वै.निघ.।

**नदीमातृकः**। पु। देशभेदे। यो नद्यम्बुभिः पाल्यते। "नद्यम्बुभिर्धृतोधान्यै नदीमातृक उच्यते।'' रा नि.व २।

**नदीमापकम्**। क्ली। शाकभेदे। गुणा —"विषद गुरु शीतञ्च समभिष्यन्दि चोच्यते।'' च.सू.२७अ.। [व ६।

**नदीया**। स्त्री। अग्निमन्थे। गणिकारि। रा.नि.

**नदीवटः**। पुं। वटीवृक्षे, क्षुद्रपत्रवटवृक्षविशेषे। नदीवट। म दुशावड,। क गालिआल। गुणा —कषाय मधुर शीतल पित्तघ्न तृष्णादाहश्रमश्वासच्छर्दिहरश्च। रा.नि व ११।

**नदीसर्ज्जः**। पु। अर्ज्जुनवृक्षे। रा.नि.व ८।

**नदेयी**। स्त्री। जलवेतसे। वै निघ.। भूमिजम्बाम्। श.च.।

**नद्यम्**। क्ली। कृष्णाञ्जने। वै.निघ.।

**नद्याम्रः**। पु। समष्ठीलवृक्षे। मं कोतुम्बा। रा.नि.व.४।१२१। गुणा —कटु.उष्ण रुच्य सुखशोधन। दाही दीपन कफवातघ्न। वै निघ.।

**नद्यावर्त्तः**। पु। मत्स्यभेदे। वै निघ.।

**नध्री**। स्त्री। चर्म्मवरत्रायां, चर्म्मरज्ज्वां। श.च.।

**नन्दकः**। पुं। नन्दीवृक्षे। कुन्दुरी। मेके। त्रिका.।

**नन्दकिः**। स्त्री। पिप्पल्याम्। श.च.।

**नन्दगोपिता**। स्त्री। रास्नायाम्। श.च.।

**नन्दनः**। पुं। मधुनिष्पावे। भूकुटशिम्। प.सु.। मेके। श र.। क्ली। सरलदेवदारौ। रक्ताञ्जने। वै.निघ.।

**नन्दनजम्**। क्ली। हरिचन्दने। रा.नि.व.१२।

**नन्दनविषम्**। क्ली। तन्नामकवृक्षस्य लक्षारनिर्यासविषे। सु कल्प,२अ.। See लक्षारनिर्यासविषम्।

**नन्दा**। स्त्री। सुरसायाम्। वावुईतुलसी। प.सु। योनिरोगविशेषे। बालस्य तन्नामकमातृकाग्रहे। तया च प्रथमे दिने मासि वर्षे वा बाल आक्रान्तो भवति। तेन च ज्वरादिर्भवति। च.द।

**नन्दा(न्द्या)वर्त्तः**। पु। तगरपुष्पवृक्षे। तगर फुलेर गाछ। र मा.। मत्स्यविशेषे। गुणा —नन्द्यावर्त्तस्तु संग्राही कफपित्तविनाशनः। राज १प.।

**नन्दिकः**। पुं। नन्दिवृक्षे। श.र.।

**नन्दितरुः (रु)**। पु। धववृक्षे। भा।

**नन्दिनकः**। पु। धववृक्षे। वै.निघ.।

**नन्दिनी**। स्त्री। जटामांस्याम्। रेणुकायाम्। रेणुक। रा नि व ६। हरीतक्याम्। मद.व १। नन्दिवृक्षे। प्रियङ्गौ। गुच्छकरञ्जे। ग्रन्थिपामार्गे। वै.निघ। चन्द्रशूरे। तोकमारी। भा.।

**नन्दिपादपः**। पु। नन्दिवृक्षे। वै.निघ.।

**नन्दिवृक्षः**। पु। कलाये। वै.निघ.।

**नन्दिवृक्षः**। पु। नन्दिके। मेषशृङ्ग्या। प.सु.।

**नन्दी (इन्)**। पुं, स्त्री (न्दी)। नन्दिवृक्षे। वटवृक्षे। तुणवृक्षे। मे.। गुच्छकरञ्जे। रा.नि व ९। ग्रन्थिपामार्गे। रा.नि व.४।

**नन्दीकामुकः**। पुं। पानीयामलकी। वै.निघ।

**नन्दीमुखः**। पुं। धान्यधान्यविशेषे। दीर्घशोभूमे। वै.निघ.। सवजातीयपक्षिविशेषे। ब्रीहिजातिभेदे। सु सू ४६अ.। गुणा.—"निन्दी दीर्घगाधूम. कविन्नन्दीमुखामध.।''

**नन्दीमुखा (खी)**। स्त्री। शूकशून्ययवे। निद्रायाम्। गोधूमे। वै निघ। जलचरपक्षिविशेषे। च.सू २७अ। नि शूकगोधूमे। "शुक्ला लंहणी पथ्या तद्वत् नन्दीमुखा स्मृता।" भा.।

**नन्दीवरलः**। पु। सागरसङ्कमत्स्ये। वै निघ।

**नन्दीवर्त्तः**। पुं। तगरे। वै निघ.।

**नन्दीवृक्षः**। पु। अधोमुखपत्रशाखे अश्वत्थविशेषे। गया अश्वथ। प.मु.। काष्ठचदेशप्रसिद्धे सुगन्धवृक्षविशेषे। तुण गाछ। हि वेलियापिपर। तें वह्निचेट्टु। वा.सू ३५अ.अम्बष्ठादिव। "नन्दीवृक्षपलाशकच्छुरा।" सु सू ३८अ न्यग्रोधादिव.। गुणा —"नन्दीवृक्षो लघु स्वादु तिक्तस्तुवर उष्णक। कटुपाकरसो ग्राही विषपित्तकफास्रजित्॥" भा। कटुतिक्त शीत पित्तास्रदाहघ्न शिर:पीडाघ्न कुष्ठघ्न सुगन्धि पुष्टिवीर्य्यकरश्च। रा नि व.१२। गान्धार्य्याम्, गर्द्दभाण्डे वा। सु सू ३८अ.अम्बष्ठादिव.। मेषशृङ्गयाम्। र मा।

**नपुंसकम्**। क्ली, पु। षण्डपुरुषे। क्लीवे। हिजड़े। तत्र शुक्रबाहुल्यात् पुमान्, आर्त्तवबाहुल्यात् स्त्री। साम्यादुभयो नपुंसकमिति कारणम्। नपुंसके जाते गर्भचिह्न यथा—यस्या पार्श्वद्वयमुन्नतं पुरस्तान्निर्गतमुदर प्रागभिहितलक्षणश्च तस्या नपुंसकमिति विद्यात्। नपुंसकं चतुर्विधम्। यथा—आसेक्यश्च सुगन्धी च कुम्भीकश्चेर्ष्यकस्तथा। सरेतसस्त्वमी ज्ञेया अशुक्र षण्डसंज्ञित। सु शा.२अ। तेषां लक्षणादिक तत्तच्छब्दे द्रष्टव्यम्।

**नमूका**। स्त्री। क्षुद्ररोगविशेषे। सु नि ५३अ.। जुभ्रूविकाशाम्। वै निघ.।

**नभम्**। क्ली। कमले। रा नि व १०।

**नभः**। पु। श्रावणमासे। श.र.। अम.। (स्) क्ली। आकाशे। पद्मे। अभ्रधातौ। वै निघ।

**नभःक्रान्ती (इन्)**। पुं। सिंहे। श मा।

**नभःसङ्गमः**। पुं। पक्षिणि। अम.।

**नभश्चमसः**। पु। चित्रापूपे। मे.।

**नभस्यः**। पु। भाद्रपदे मासि। अम।

**नभा**। पु। श्रावणमासि। घ्राणे। विसतन्तौ। मे। पक्षितीर्थे। धरणि.।

**नभोऽम्बुपः**। पुं। चातकपक्षिणि। हे.च।

**नभोरेणु**। पु। नीहारे। त्रिका.।

**नभोलयः**। पु। धूमे। श.र.।

**नमस्कारी**। स्त्री। खदिरिकाशाके, वराहक्रान्तायाम्। वराक्रान्ता। प.मु। शुक्लखञ्जालुकायाम्। रा नि व ५। वा सू ३५अ.अम्बष्ठादिव। "अम्बष्ठामधुक नमस्कारी।" नीलदूर्व्वायाम्। वै निघ.।

**नमेरुः**। पुं। सुरपुन्नागवृक्षे। सुरपुन्नाग। छुलना। रा नि.व १०। सरलदेवदारौ। वै.निघ.। रुद्राक्षे। भूरिप.। [भा.।

**नम्रः (क)**। पु। वेतसवृक्षे। मद व ५।

**नयनम्**। क्ली। नेत्रे। रा.नि व.१८।

**नयनचन्द्रलौहः**। पु। नेत्ररोगे लौह। त्रिकटु त्रिफला शृङ्गी शटी रास्ना शुण्ठी द्राक्षा नीलोत्पल काकोली यष्टिमधुक वला नागकेशर वृहती कण्टिकारी एषां प्र २ प. कान्तलौह १ प अभ्रं १ प। आदौ त्रिफलाक्वाथेन तदनु तिलतैलेन अन्त भृङ्गराजरसेन भावयेत्। वटी वदराम्थिवत्। ত্রিকটু, ত্রিফলা, কাঁকড়াশৃঙ্গী, শটী, রাস্না, শুঠী, দ্রাক্ষা, নীলোৎপল, কাঁকলা, যষ্টিমধু, বেলেডা, নাগেশ্বর, বৃহতী, কণ্টিকারী প্রত্যেকে ২ প কান্তলৌহ ১ প অভ্র ১ প। অগ্রে ত্রিফলাক্বাথ তৎপরে তিলতৈল এবং ভীমরাজরস ভাবনা দিবে। বটী কুল আঁটীর ন্যায়। মৈব.।

**नयनचिन्तकः**। त्रि। दृष्टिविज्ञानकुशले। भा नेत्र चि.।

**नयनप्रसादः**। पु। कतकवृक्षे। वै निघ.।

**नयनप्लवः**। पुं। नेत्रयोरश्रुपूर्णत्वे। मा नि।

**नयनबुद्बुदः**। पु। नेत्रबुद्बुदे। "विद्याद्द्रुत बाहुल्यं स्याद्बुद्बुदरसन्निभं। बाह्यस्थ सम्यक् शांतं भिषङ्नयनबुद्बुदम्॥" सु उ.१अ.।

**नयनशोणाञ्जनम्**। क्ली। नेत्ररोगे अञ्जनम्। पिप्पलीतण्डुल सैन्धवलवण मरिच रसाञ्जन कृष्णाञ्जन समुद्रफेन शङ्ख पुनर्नवा हरिद्रा रक्तचन्दन यष्टिमधु तुल्य हरीतकी मन शिला वि

श्वपत्रं रीप्यं फटिकारी मृगनाभिः कर्पूरं एषां चूर्णं प्र. समं लौहपात्रे ताम्रखण्डेन मधुना मर्द्दयेत्। পিপুলদানা, সৈন্ধব, মরিচ, রসাঞ্জন, শুর্মা, সমুদ্রফেনা, চিনি, শ্বেতগুঞ্জা, হরিদ্রা, রক্তচন্দন, যষ্টিমধু, ভুঁতে, হরীতকী, মনছাল, নিমপাতা, লোধ, ফট্‌কিরি, শঙ্খনাভি, কর্পূর—সমভাগ সূক্ষ্মচূর্ণ করিয়া লৌহপাত্রে তাম্র খণ্ড দ্বারা মধুর সহিত মর্দ্দন করিবে। भा.।

**नयनापाङ्गः** । पुं । नेत्रप्रान्ते । श्रम.।

**नयनी** । स्त्री । कनीनिकायां । श.च.।

**नयनोपान्तः** । पुं । अपाङ्गे । रा.नि.व.१८।

**नयनोर्द्ध्वगरोमराजिः** । स्त्री । भ्रुवि । भ्रूक्रु । रा नि.व.१८।

**नयनौषधम्** । क्ली। श्वेतधातुकासीसे । हे.च ।

**नरः** । पुं । मनुष्ये । नीलवृक्षे । रा.नि.व.८ । क्ली । गन्धद्रव्ये । रामकर्पूर । मे.।

**नरङ्गम्** । क्ली । शिश्ने । पुं । वरण्डके । नारिङ्गा । उत्था.। [याम् । श.र. । त्रिका. ।

**नरनामिका (नी)** । स्त्री । स्नगुमत्यां स्त्रि-

**नरप्रियः** । पुं । नीलीवृक्षे । रा.नि.व.८ । पारावते । वै.निघ । [याम् । हे च ।

**नरमालि(नि)नी** । स्त्री । स्नगुमत्यां स्त्रि-

**नरमूत्रम्** । क्ली। मानुषमूत्रे । मानुষের মূত।
गुणाः—आमघ्नं कृमिविषघ्नं तिक्तोष्णं लवणं रूक्षं भूतघ्नं लम्दोषहरं वातहरञ्च । रा.नि.व.१५। "मानुषं चारकटुकं तिक्तोष्णं लघु चोच्यते। चक्षूरोगहरं बल्यं दीपनं कफनाशनम् ॥" "अप्रसूताया घनं मूत्रं प्रसूताया द्रव लघु । न किं गुणविशेषस्स्यात् समता पाकवीर्य्ययोः ॥" अत्रि ८अ.।

**नरवल्लभः** । पुं । कपोते । वै.निघ.।

**नरवृक्षः** । पुं । नीलीवृक्षे । रा नि व.८ ।

**नरषण्डः** । पुं । गर्भविकारजन्यपुरुषभेदे । পুং নপুংসক । यथा—"मन्दाल्पवीजाव्यवलाबहर्षी क्लीवे च हेतुर्विकृतवयस ।" च.शा.२अ. ।

**नरसादरः** । पुं । नरसारे । নিষাদল । भैष. महामरुद्रावके ।

**नरसारः** । पुं । निशादल इति ख्याते द्रव्ये । हिं नौसादर। तत्करणविधिः—"शौद्रं वा माहिषं गव्यं पुरीषं भस्मतां गतं । चारपाकविधानेन नृसारसिद्धिरुच्यते ॥" गुणाः—"पटुमत्रशिशीलानां स्रावणः शीघ्रद्रावणः । यकृद्दोषे ज्वरे प्लीह्नि शिरःशूलेऽर्बुदादिषु । स्तनरोगे रक्तपित्ते कासे भग्नामये तथा । योनिव्यापत्सु च श्रेयो नरसारः सुखावहः ॥" र.सा सं. । तच्छुद्धिः—"नरसारो भवेच्छुद्धश्चूर्णतोये विपाचितः । दोलायन्त्रेण यत्नेन भिषग्भिर्योगसिद्धये ॥" अत्रि.। सा.कौ.।

**नरसिंहरूपज्वरः** । पुं । विषमज्वरभेदे । "विदग्धेऽन्नरसे देहे श्लेष्मपित्ते व्यवस्थिते । तेनार्द्धं शीतलं देहमर्द्धमुष्णं प्रजायते ॥" निदा.।

**नरहरिः** । पुं । राजनिघण्टुकारे ।

**नराधिपः** । पुं। महारग्वधवृक्षे । सु.चि.२०अ.।

**नरी** । स्त्री । मानुष्याम् । जटा.। त्वचायाम् । চামড়া । वै.निघ ।

**नरेन्द्रः** । पुं । आरग्वधे । काष्टागुरुवृक्षे । सु. चि १६अ. । विषवैद्ये । मे. । राजिके । त्रिका. ।

**नरेन्द्रद्रुमः** । पुं । आरग्वधवृक्षे । সোন্দাল গাছ । भैष कुष्ठ-चि. । "पूतीकार्कस्नुक्नरेन्द्रद्रुमाणाम् ।" च.द.कुष्ठ चि. ।

**नरेन्द्राह्वः** । पुं, क्ली । काष्ठागुरुणि । वै.निघ.।

**नर्कुटकम्** । क्ली । नासिकायाम् । हे.च. ।

**नर्त्तकः** । पुं । मयूरे । करिणि । हे.च. । देवनले । श र. । [रा.नि.व.१२ ।

**नर्त्तका (की)** । स्त्री । नलिकानामगन्धद्रव्ये।

**नर्त्तनप्रियः** । पुं । मयूरे । वै निघ. ।

**नर्त्तोपहारकः** । पुं। धूलीकदम्बे । वै.निघ.।

**नर्म्मटः** । पुं । खर्परे । খাপরা । हारा. ।

**नर्म्मठः** । पुं। कुचाग्रे । श.र.। मैथुने । वै.निघ.।

**नर्म्मदा** । स्त्री । भारतवर्षीयनदीविशेषे । सा विन्ध्यपादवाहिनी । तज्जलगुणाः—लघु शीतलं पथ्यं कफपित्तमरुत्कोपहरं सर्व्वरोगघ्नं रुच्यं मधुरञ्च । रा.नि व.१४ । सक्कायाम् । हे.च. ।

**नर्म्मरा** । स्त्री । सरलायाम् । निष्फलायाम् । भस्त्रायाम् । मे ।

**नलः** । पुं । (Phragmites karka. Syn. Arundo karka) स्वनामख्यातवृक्षे । दूर्व्वाकाराङ्कुरोऽस्य शुषिरः स्वनामख्यातः । सु.सू. ३८अ ड । नल । मं देवनलु । कं देवनाल । तैं किरैशगडि । अयं द्विविधः सूक्ष्मदीर्घभेदात् । तयोः प्रथमः शीतकषाय. मधुरः रुचिकरः रक्तपित्तघ्नः दीपन. बलदश्च । देवनलः मधुरः तथः ईषत्कषायः वीर्य्याधिक. रसवर्द्धकोऽपि प्रशस्तश्च । रा.नि.व.८ । वा सू.१५अ वीरतरादि । "हचा दनीनलकुशद्वयगुण्ड्रगुन्द्रा" । खगगड़े । थागड़ा । सु.सू.३८अ.तृणपञ्चमूले । नालीशपत्रे । वै.निघ. वा.व्या.दशमूलादितैले । कदम्बवृक्षे । मातुलुङ्गवृक्षे । देवधान्ये । सुगन्धे । वै.निघ. । क्ली । पद्मे । रा.नि.व.१० ।

**नलकम्** । क्ली । शाखास्थनि । हे.च. । दृष्टास्थनि । पिठेर हाड । रा.नि.व.१८ । पद्माचे । पद्मबीज । वै.निघ. । [भा.म.३भ. ।

**नलकास्थि** । क्ली । नाडीवत्सरन्ध्रास्थिपर्व्वसु ।

**नलकिनी** । स्त्री । वालुदेशे । जान्वस्थनि । अङ्घायाम् । हे.च ।

**नलकीलः** । पुं । वालुदेशे । हे.च. ।

**नलदम्** । क्ली । उशीरवल्लीतत्त्वविलामञ्चके । उशीरभेदे । भा.रैवतीय चि. । "पचेद्वार्य्यं नलदे ।" मलापकर्ष.चि. । "नलदतुरगगन्धा ।" पुष्परसे । उशीरे । मे. । वै.निघ.दाह.चि.रसादिगुग्ग्याम् । वा.व्या.चि.दशमूलादितैले । जटामांसा । सु.सू.३८अ. । च.सू.४अ.वर्ण्यादिः । वै. निघ.र पि चि चन्दनादिचूर्णे । च.द.यक्ष.चि खदङ्गादिचूर्णे । वा.व्या.एलादितैले ।

**नलदम्बुः** । पुं । निम्बवृक्षे । भूरिप्र. ।

**नलदा** । स्त्री । जटामांस्याम् । रा.नि.व.१२ । उशीरे । पयसि । वै.निघ. ।

**नलदाम्बु** । क्ली । उशीरजले । वै.निघ. ।

**नलपट्टिका** । स्त्री । नलनिर्म्मितपट्टिकायाम् । नलेर पाटी, চেটা, মাদুর । द्वारा. ।

**नलमीनः** । पुं । चिलिचिममत्स्ये । अम. । गुणः—कफकरत्वम् । अत्रि २२अ. ।

**नलमूलम्** । क्ली । वीरणमूले । বেণার মূল । सु.सू.३८अ. ।

**नलिकः** । पुं । नली । वै.निघ. ।

**नलिका** । स्त्री । इन्दीवरालतायाम् । रा.नि. व.३ । सि.यो.यक्ष.चि.चन्दनादितैले । नाडीशाके । वै.निघ. । स्वनामख्यातसुगन्धवल्कले । सा च उत्तरापथे तन्नाम्ना प्रसिद्धा सुगन्धा प्रवालाकृति प्रवाली इति क्वचित् प्रसिद्धा, पवारी इति च क्वचित् ख्याता । নালুকো । मं नलिकाजाई । क वेतलविकि । तैं पक्षिमुक, सुगन्धिद्रव्यमु । लक्षणम्—"मध्ये सारविहीना या सरसा कीटवर्ज्जिता । नलिका सा भवेद्रद्रा··· ॥" भैष. । गुणाः —तिक्ता कटुका तीक्ष्णा मधुरा हिमा क्रमिघ्नी वातोदरघ्नी चर्मशूलघ्नी मलशोधनी च । रा नि. व ११ । "नलिका शीतला लघ्वी चक्षुष्या कफपित्तहृत् । कृच्छ्राश्मवातदृष्णास्रकुष्ठकण्डूज्वरापहा ।" भा. । तन्नामके उदररोगशमनार्थयन्त्रविशेषे । लक्षणं यथा—"छिद्रा नलिका पिच्छनलिका वा दकोदरे ।" अत्रि. ।

**नलितः** । पुं । तिक्तपट्टशाके । তেতো পাট वा নালিতা পাতা । तत्पत्रं तिक्तं पित्तघ्नं प्रक लघु । राज. ।

**नलिनः** । पुं । सारसपक्षिणि । अम. । पानीयामलके । श.च. । क्ली । कमले । रा.नि.व १० । श्वेतसौगन्धिके । শ্বেত শুন্দি । च.सू.४अ. । नीलयाम् । नले । हे.च. । पद्मकिञ्जल्के । च.सू ३अ ।

**नलिनकेशरम्** । क्ली । पद्मकेशरे । सु.सू ३८अ वर्ण्यादि. ।

**नलिनी** । स्त्री । पद्मिन्याम् । পদ্মের ঝাড় । रा नि व.१० । नलिकायाम् । নালুকো । वै. निघ १भ.चर्म -चि.विडङ्गादिचूर्णलेहे । नारिकेलासवे । तिका. । [टी । रा.नि.व.१० ।

**नलिनीरुहम्** । क्ली । मृणाले । পদ্মের ডাঁটী ।

**नली** । स्त्री । नलिकानामके गन्धद्रव्ये । रा.नि. व.११ । मन.शिलायां । त्रिक. ।

**नलुका** । स्त्री । नलिकायाम् । নালুকো । जातीवृक्षे । वै.निघ ।

**नलोत्तमः** । पु । देवनले । रा.नि.व.८ ।

**नल्वकी** (इन्)। पुं। नंनी। नल। भैष.गी. ब्या.चि। [१ख.। वा.उ.२८अ.।

**नल्वणः** । पुं। द्रोणपरिमाणे। १६ श्री। प प्र.

**नल्ववर्म्मगा** । स्त्री। काकनासायां। श्र च.।

**नवः** । त्रि। नूतने। पुं। रक्तपुनर्नवायाम्। रा. नि.व.५।

**नवकार्षिकगुग्गुलुः** । पुं। भगन्दरे हितः। "त्रिफलापुरकणाभिस्त्रिपञ्चैकांशयोजिता। गुडिका प्रोथगुल्माम्भगन्दरवता हिता।" रस र.। भा.।

**नवज्वरहरी(वटी)** । स्त्री। नवज्वरे रसः। पारद-गन्धक विष त्रिकटु त्रिफला शुद्धदन्तीबीजानि प्र. समानि। द्रोणपुष्पीरसे मर्द्दनं गजपुटे पाकश्च। पारा, गन्धक, विष, शुंट, पिप्पुल, मरिच, हरितकी, वहेड़ा, आमला, शुद्ध दन्तीदाना प्रत्येके समांश, हलकषाय रसे मर्दन ओ गजपुटे पाक करिवे। मात्रा माषवत्। भा.।

**नवज्वरेभसिंहः** । पुं। नवज्वरे रसः। "रसमूतं तथा गन्धं लौहं ताम्रञ्च सीसकम्। मरिचं पिप्पली विश्वं समभागं विचूर्णयेत्। अर्द्धभागं विषं दद्यात् मर्द्दयेद्वासरद्वयम्।" पारा, गन्धक, लौह, तामा, सीष, मरिच, पिप्पुल, शुंट प्रत्येके १ तो. विष ।० तो. जल दिया २ दिन माड़िवे। र.सा.स.।

**नवदलम्** । क्ली। कोमलपत्रे। इड्डचन्द्रः। पद्मकेशरसमीपस्थदले। श्रम.।

**नवधान्यम्** । क्ली। नवयधान्ये। नूतन धान्य। गुणाः—तच्च मालिन्यात् सीतया स्नुतिकृत्प्रीणायां करोति गुरु च। वा.सू.६अ.। चरकः। "यवास्तु यवगोधूमतिलमाषा नवा हिताः।" रा नि.व.१६।

**नवनी(तम्)** । स्त्री,क्ली। दुग्धजसारे। टाट्का ननि, माखन। तत्प्रागादुग्धजलात् द्विविधं। गव्यं माहिषमाजमाविकं गार्द्दभजमीदृम् एकं हास्तिकं मानुष्यमनौजचेति। विशेषाः स्वस्वपर्य्याये, अन्याः। सा. गुणाः—सीतं वर्णदं बलदं मधुरं हृद्यं संग्राहकं वातघ्नं कफघ्नं वृष्यं सर्व्वाङ्गयक्ष्मघ्नं कासघ्नं श्रमघ्नं मुखजमघ्नं कान्तिप्रदं पुष्टिकरं च पुष्य च। गव्यं नवनीतं—सर्व्वदोषघ्नम्। गवोद्भूतं—शीतलं रुच्यं मधुरं हृद्यं वातघ्नं कासघ्नं क्रिमिहरं कफजनकं संग्राहि शूलघ्नं। दधिजं नवनीतं—बलपुष्टिकरं तथासन्तापहरं चक्षुष्यं श्रमघ्नं तर्पणं पित्तघ्नञ्च। तथा—"एकाहावुषितं मोक्षमुक्तक्षीरगन्धकम्। अहृद्यं सर्व्वरोगाढ्यं दधिजं तद्द्युतं समस्मिति॥" रा नि.व.१५। (नीतम्) कुन्दुरुखोटी। भैष.ग्रह चि.वृहज्जीरकाद्यमोदके।

**नवनीतकम्** । क्ली, पु। गन्धके। आमलासार गन्धक। र.सा सं।

**नवनीतजम्** । क्ली। घृते। रा.नि व ११।

**नवनीताह्वयगन्धः** । पुं। आमलासार, वा लाउया गन्धक इति लोके ख्याते गन्धके। र.सा. स.नैवाशनिरसे। [निघ।

**नवनीतोद्भवम्** । क्ली। दधनि। घृते। वै.

**नवपल्लवः** । पुं। कोमलपल्लवे। भूरिप्र.।

**नवफलिका** । स्त्री। अचिरजातरजस्कायां स्त्रियि। मे.।

**नवमल्लिका (स्त्री) (मालिका)** । स्त्री। (J. Zambac floribus multiplicatis.) स्वनामख्याते पुष्पवृक्षविशेषे। सा ग्रीष्मोद्भवा। वासन्ती नेपाली सेउती नेवारी इति लोके। वासुन्ती गाछ। मं रीमाली। कं विरवन्निमेद। वम्. मोगरा। गुणाः—अतिशीता सुरभिः सर्व्वरोगघ्नी च। रा.नि.व.१०।

**नवयौवना** । स्त्री। युवत्याम्। हारा.।

**नवरत्नम्** । क्ली। वज्र-मौक्तिक-माणिक्य नील-मरकत-गोमेद-पद्मराग वैदूर्य्य प्रवालेषु नवमणिषु। प.सु.। तद्देवतानि सूर्य्यादयः। तद्धारणविधिः—"वैदूर्य्यं धारयेत् सूर्य्ये नीलञ्च मृगलाञ्छने। आवनेयेऽपि माणिक्यं पद्मरागं शशाङ्कजे। गुरौ मुक्ता भृगौ वज्रं शनौ नीलं विदुर्बुधाः॥" दीपिका। सच्छुहिः—"विद्रुमं चारवर्गेण तार्क्ष्यं गोदुग्धतस्तथा। पुष्परागञ्च सन्धाने: कुलत्थक्वाथमंयुतेः। तण्डुलीयजलैर्वज्रं नीलं नीलीरसेन वा। रौचमाभिञ्च गोमेदं वैदूर्य्यं त्रिफलाजलैः॥" मारणं यथा—"लकुचक्षारसम्पिष्टे, शिलागन्धकतालकैः। वज्रं विनान्यरत्नानि म्रियन्तेऽष्टपुटैः खलु॥" र.चि.७अ.। [हदेवते। See नवरत्नम्।

**नवरत्नदेवता** । त्रि। वज्रादिरत्नानामधिष्ठा-

**नववल्लभम्।** क्ली। दारुागुरुणि। रा.नि.व. १२।

**नवविधानम्।** क्ली। सूपशाकाद्यन्नमिश्रौ दनोपदर्शितदिग्नसन्धानरोचनेषु। वै.निघ.।

**नवशस्यम्।** क्ली। नवीनधान्ये। वै.निघ.।

**नवसागरम्।** क्ली। वत्सचारे। वै.निघ. २भ ध्य चि.चयकेसरिरसे। [घ.।

**नवसूतिका।** त्रि। नवप्रसूतायां। वा.उ. १२

**नवाङ्गम्।** क्ली। वातपित्तज्वरे विश्वादिनवद्रव्य जकषाये। "विश्वामृताब्दभूनिम्बै पञ्चमूलीसमन्वि तै। कृत कषायो हन्त्याशु वातपित्तोद्भव ज्वरम्॥" शुंठ, गुलञ्च, मुता, चिरता, शालपाणि, चाकुलिया, बृहती, कण्टिकारी, गोक्षुर। सा.कौ.। अन्यत्—त्रिकटुत्रिफलाचित्रकमुस्तवि डङ्गकृतकषाये। च.द. हन्.स्व.चि.।

**नवान्नम्।** क्ली। नूतनान्ने। See अन्नम्।

**नवाम्बरम्।** क्ली। नूतनवस्त्रे। अम.।

**नवायसचूर्णम् (लौहम्)।** क्ली। पाण्डु रोगे। चूर्षणत्रिफलामुस्तविडङ्गचित्रका समा। नवायोरजसो भागास्तच्चूर्णं मधुसर्पिषा। भक्षयेत् पाण्डुहृद्रोगकुष्ठार्श कामलापहम्। शुंठ, पिपुल, मरिच, त्रिफला, मुता, विडङ्ग, चिता प्र त्येके १ तो. जारितलौह ९ तो. मात्रा १ मा.। सा.कौ.।

**नवोद्धृतम्।** क्ली। सद्योजातनवनीते। अम।

**नव्यः।** पुं। रक्तपुनर्नवायाम्। रा.नि.व.५।

**नश्याकः।** पुं। काकसदृशपक्षिविशेषे। वै.निघ.। काकभेदे। उत्पा.। [घ।

**नष्टप्रसूतिका।** स्त्री। मृतवत्सायाम्। वै.

**नष्टचेष्टता।** स्त्री। मूर्च्छायाम्। [त्रिका.।

**नस् (सा)।** स्त्री। नासिकायाम्। नासायाम्।

**नसवलकः।** पुं। मत्स्यजातिस्वरे। गजवे।

**नस्तः।** पुं। नासिकायाम्। भा.म.४भ भि.री चि। "सर्पिर्भ्यां नस्ततस्तयो।" क्ली। नस्ये। र. मा.।

**नस्तःकर्म।** क्ली। प्रतिमर्शावपीडनस्यप्रधमन शिरोविरेचनेषु पञ्चसु। 'नावनञ्चावपीडश्च ध्मानं धूम एव च। प्रतिमर्शश्च विज्ञेय नस्तकर्म च प ञ्चधा॥" च.सिद्धिस्था.। [निघु। च.सू.१५.।

**नस्तप्रच्छर्दनम्।** क्ली। पञ्चशिरोविरेच

**नस्तो(स्यो)तः।** पुं। सनासारज्जुवृषे। ना कफेंडा बलद। च टी.र.।

**नस्यम्।** क्ली। नासायाह्यौषधे। नाम, नश्य। नासायोर्नस्य आक्रम्यते यत्। "नस्य तत्कथ्यते धीरै नासाग्राह्य यदौषधम्॥" नस्यं रेचनस्नेहन भेदेन द्विविधम्। तयो रेचन कर्षण, स्नेहन वृं हण। तस्य काल —'कफपित्तानिलध्वंसी पूर्वे मध्येऽपराह्णिके। दिनस्य गृह्यते नस्य रात्रौ वा- त्युत्कटे गदे॥' तच्च नस्य प्रतिमर्शावपीडनस्यप्रध मनशिरोविरेचनभेदेन पञ्चधा। ऊर्द्धजत्र्वादिरोगे मरीचकादौ च वैरेचनिकं नस्य हितम्। भीरु स्त्रीकृशबालाना स्नेहननस्यं देयम्। वातरोगादौ अवपीडनम् अत्युत्कटदोषादौ प्रधमनम्। स्नेहिक नस्यमानम् अष्टबिन्दव। निषेधकाल —"नस्य स्त्रजिह्रीभमान्ते दुर्दिने चावसर्पित। तथा नवप्रति- श्यायी गर्भिणी गरदूषित। अजीर्णी दत्तवस्तिश्च पीतस्नेहोदकासव। क्रुद्ध शोकाभिभूतश्च तृषार्त्तो वृद्धबालकौ। वेगावधारी श्रान्तश्च स्नातुकामश्च व र्जयेत्॥" अष्टवर्षात् पूर्व्वं अशीतेरूर्द्ध च न दे यम्। भा.। [सर्वे। वै.निघ.।

**नहुषम्।** क्ली। तगरपुष्पे। रा.नि.व.१०। पुं।

**नहुषाख्यम्।** क्ली। तगरपुष्पे। रा.नि.व.१०।

**नक्षत्रम्।** क्ली। अश्विन्यादिसप्तविंशतितारका सु। सु.सू.३ष। मौक्तिके। रा.नि.व.१३।

**नक्षत्रकान्तिविस्तार.।** पुं। धवलयावना लाख्यशिम्बीधान्यभेदे। रा.नि.व.१६। [निघ.।

**नक्षत्रमालिनी।** स्त्री। जातीपुष्पवृक्षे। वै.

**नक्षत्रेशः।** पुं। कर्पूरे। अम.। यक्ष्मी। त्रिका.। खङ्गे। हे च.।

**नाकनः।** पुं। वनधान्यविशेषे। प स.।

**नाकुः।** पुं। वल्मीकमृत्तिकायाम्। उईमाटि। भेद.का.वा.चि.स्वेदे।

**नाकुली।** स्त्री। (Vanda roxburghii.) A variety of rásná. सनामख्यातमहाकन्दे

शाकविशेषे, राखादये । वाशि,गन्धनाशी । प मु । नाकुली नाथि विषमुगरीत च लोके। हि चन्द्रा। तें सर्पचिविद् पञ्चवेद्। नाकुली द्विधा – नाकुली गन्धनाकुली च। गुणा —नाकुलीयुगल तिक्त कटूष्ण त्रिदोषघ्न नानाविषघ्न । द्वितीया तु कि चिच्छ्रता । रा नि व.७ । यवतिक्तालतायाम् । श्वेतकण्टकार्याम् । रा नि व ४ । चव्ये । प मु । मरिचे । शाखलिङ्गचे । मे० ।

**नाकुलीद्वयम्** । क्ली । गन्धरास्नाया रास्नाया च । सि यो उन्मा चि महापैशाचघृते । "वयस्था नाकुलीद्वयम् ।"

**नाग** । पु क्ली (ग) । शीषधातौ । वत्सनाभे । काटविषे । नागकेशरवृक्षे । प मु । वङ्गे । कर्ई वायौ । नागवलायाम् । मेदायाम् । करिदन्ते । मुस्तके । सुरपुन्नागवृक्षे। रक्ताभके । मे । हस्तिनि । नागवल्लीलतायाम् । च टी भ । सि यो समशर्कर चूर्णे । भैष च पि चि पिप्पलीखण्डे। सर्पे । निका। वीजद्रुमे । अगन वृक्ष । रा नि व २१ ।

**नागकन्द** । पुं । हस्तिकन्दाख्यमहाकन्दशाके । रा नि व ७

**नागकर्ण** । पुं । रक्तैरण्डे । रा नि व.८ ।

**नागकर्णी** । स्त्री । आखुकर्णीलतायाम् । रा. नि व ३ । श्वेतापराजितायाम् । श चि ।

**नागकिञ्जल्कम्** । क्ली । नागकेशरपुष्पे । रा. नि व.८ ।

**नागकुमारिका (री)** । स्त्री । गुडूच्याम् । रा नि.व ३ । मञ्जिष्ठायाम् । रा नि व ६ ।

**नागकुसुमम्** । क्ली। नागकेशरपुष्पे । वै.निघ १४ ज्व चि चन्दनवलातैले ।

**नागकृष्णा** । स्त्री । गजपिप्पल्याम् । वै निघ ।

**नागकेश(स)र (क)** । पु । (Mesua ferrea) स्वनामख्यातपुष्पवृक्षे । नागेश्वर चाँपा फूलेर गाछ । हि कावावचिनी । तें नागकेश राल् । ता नागल । बम् नागचम्प । गुणा — दीपन पाचन आमपाचन अग्निमान्द्यकरच । तत्कुसुमं वस्तिवातघ्नं कफशिरोरुजापहञ्च । रा. नि व ६ । "नागपुष्पकषायोष्ण रूक्षं लघ्वामपाचनम् । ज्वरकण्डूतृषास्वेदच्छर्दिहृल्लासनाशनम् । दौर्गन्ध्यकुष्ठवीसर्पकफपित्तविषापहम् ॥" भा.। "कीटादिकैन रहितमभिनवमिह केवलं ग्राह्यम् ।" भैष । [नागदमन्या । नागदन्ती । वै निघ ।

**नागगन्धा** । स्त्री । नाकुलीकन्दे । रा नि व ७।

**नागगर्भम्** । क्ली । सिन्दूरे रा नि व १३ ।

**नागचम्पक** । पु । वनचम्पकवृक्षे । नागेश्वर चाँपा, वुनो चाँपार गाछ । रा नि व १० ।

**नागच्छत्र (त्रा)** । पु, स्त्री । नागदन्त्याम् । रा नि व ५ । (त्रा) नागवल्याम् । वै निघ ।

**नागजम्** । क्ली। सिन्दूरे । प मु । वङ्गे । हे च ।

**नागजिह्वा** । स्त्री । अनन्तायां । अनन्तमूल । भैष वा व्या चि । र.सा । मन शिलायाम् । रा नि व १३ ।

**नागजिह्विका** । स्त्री। मन शिलाया । प मु.।

**नागजीवनम्** । क्ली । वङ्गे । हे च. ।

**नागजीवनशत्रु:** । पु। हरिताले । वै निघ।

**नागतुम्बी** । स्त्री । तुम्बाम् । वै निघ ।

**नागदन्त (क)** । पुं । हस्तिदन्ते । मे. ।

**नागदन्तिका (न्ती)** । स्त्री । महाराष्ट्रक ख्यातायां स्वनामख्यातमहाक्षुपे । हातिशुँड़े । गुणा —कटु तिक्ता रूक्षा वातकफघ्नी विषघ्नी मेधाकरी पाचनी गुल्मशूलोदरघ्नी च । रा नि व. ५ । स्थूलमूलदन्त्याम् । च द । भैष ना त्र चि । सु चि १७श । च वि ८म. । (का) वृश्चिकाल्यां । विशति । र सा. ।

**नागदमनी** । स्त्री । (Artemisia vulgaris, Syn. A. Indica) Indian worm wood. स्वनामख्यातक्षुपे । नागदना । हिं नागदुनी, नागदवन । तें इश्वरिचेट्ट दवणम । ता मासिपची । बम् दवणा । नेपाली तितापात । गुणा —"बलामोटा कटुस्तिक्ता लघु पित्त कफापहा । मूत्रकृच्छ्रव्रणान् रक्षो नाशयेज्जालगर्दभम् । सर्व्वग्रहप्रशमनी विशपविषनाशिनी । जय सञ्च कुरुते धनदा सुमतिप्रदा ॥" भा । त्रिदोषघ्नी तीक्ष्णोष्णा कटु तिक्ता उदराध्मानघ्नी दाहशोधनी च । रा नि व ५। वन्ध्याकर्कोटिकायाम् । वै निघ । [भैष तमराजतैले । पर्णे । पाण ।

**नागदलम्** । क्ली । नागदमन्यां । नागदना ।

**नागदलोपमः** । पु । पञ्चपत्रवृक्षे । পঞ্চপত্র বা ফণসা গাছ । প সু. । [भैरवरसे ।

**नागदा** । स्त्री । हरीतक्याम् । र सा सं सकन्द

**नागद्रुः** । पु । वृक्षविशेषे । তেকাঁটা সিজু গাছ । বন্ গৈরচিকাডা । श.च ।

**नागनामकम्** । क्ली । सीसके । भा ।

**नागनामा** (न) । पु । श्वेततुलसीवृक्षे । कृष्ण तुलसीवृक्षे । वै निघ । [रा नि व ७ ।

**नागपल्ली** । स्त्री । लक्ष्मणाकन्दे । লক্ষ্মণামূল ।

**नागपत्रम्** । क्ली । ताम्बूलदले । পাণ । वै निघ श्वास चि त्रिकटुवटी ।

**नागपत्रा** । स्त्री । नागदमन्याम् । भा ।

**नागपत्री** । स्त्री । नागदमन्याम् । वै निघ ।

**नागपर्णी** । स्त्री । नागवल्लीलतायाम् । वै निघ ।

**नागपर्य्यायकर्णी** । स्त्री । श्वेतापराजितायाम् । रा नि व ३ । [नायाम् । वै निघ ।

**नागपुटभावना** । स्त्री । षोडशपलन भाव

**नागपुरगम्** । क्ली । सीसधातौ । रा नि व १३ ।

**नागपुरीपच्छन्नम्** । क्ली । गजपुरीषजाते छत्राके । वा उ ३७अ ।

**नागपुष्प** । पु । पुन्नागवृक्षे । मे । नागकेशर वृक्षे । प सु । नागकेसरपुष्पसमपुष्पे महावृक्षे । सु सू ३८अ एलादि । क्ली । नागकेसरपुष्पे । च द र पि चि कामदेवघृते । सु कल्प ५अ । भा प्र रक्तरोगे । च चि २अ । नागचम्पके । मे ।

**नागपुष्पक.** । पु । कपित्थवृक्षे । स्वर्णयूथिकायाम् । कुष्माण्ड । रा नि व २३ । पुन्नागवृक्ष । नाग केसरवृक्षे । वै निघ । [रा नि व.७ ।

**नागपुष्पफला** । स्त्री । कुष्माण्डीलतायाम् ।

**नागपुष्पा** । स्त्री । नागदमन्याम् । मन शिलायाम् । वै निघ । [नि व १० ।

**नागपुष्पिका** । स्त्री । स्वर्णयूथिकायां । रा

**नागपुष्पी** । स्त्री । नागदमन्याम् । भा । स्वर्णयूथिकायाम् । रा नि व १० । पुष्पवृक्षविशेष । गुणा —"नागिनी रचनी तिक्ता तीक्ष्णोष्णा कफ पित्तनुत् । विनिहन्ति विष शूलं योनिदोषवमि क्रिमीन् ॥" भा अर्श चि ।

**नागफणः** । पु । (Opuntia Dillenii. Syn. Cactus Indicus ) वृक्षविशेषे । फणिमनसा । ते ता नागदलि ।

**नागफलः** । पु । पटोले । रा नि व ३ । कटु पटोले । वै निघ । [अ सा चि कुङ्कुमवटी ।

**नागफेनम्** । क्ली । अहिफेने । वै निघ २अ

**नागवधूप्रिय** । पु । सल्लकीनिर्यासे । धूना । वै निघ । [त्यवृक्षे । श च ।

**नागबन्धु** । पु । उदुम्बरवृक्षे । श चि । अश्व

**नागबला** । स्त्री । (Sida spinosa. Syn. Sida alba ) गोरक्षतण्डुलायाम् । গোরক্ষ চাকুলিয়া । हि गुलशकरी ककही । च द यक्ष्म चि महाद्यचूर्णे । च चि १अ नागररसायने । सा कौ महाकामेश्वरमोदके । नागानामिव बल यस्या सा । सि यो यक्ष्म चि बलाद्यघृते । भा मू क्र चि नागबलातैले । योगरत्न उ ख । गुणा — मधुराम्ला कषाया उष्णा गुरु कण्डूकुष्ठवातव्रणपित्तघ्नी च । स्निग्धा आयुष्या ग्राहिणी हृद्या मूत्रकृच्छ्रक्षीणक्षयरोगेषु हिता च । भा । मधुराम्ला कषाया उष्णा गुरु कण्डूकुष्ठवातव्रणपित्तघ्नी वाजीकरणी च । रा नि व ४ ।

**नागबलातैलम्** । क्ली । वातरक्ते तैलम् । तिलतैलं १६ श । क्वाथार्थं—गोरक्षतण्डुलामूल १२॥० श वारि ६४ श शे १६ श छागदुग्ध १६ श । कल्कार्थं—तगर यष्टिमधु प्र. ५ प वा २ श । तुलाद्र्ध्यं जलद्रोण्या इति । प प्र । তিলতৈল ১৬ শ । কাথার্থ—গোরক্ষচাকুলিয়া ১২॥০ শ জল ৬৪ শ শে ১৬ শ ছাগদুগ্ধ ১৬ শ. । কল্কার্থ—তগরপাদুকা, যষ্টিমধু প্রত্যেকে ৫ প বা ২ শ. । च द ।

**नागभू** । स्त्री । क्षुद्रपाषाणभेदायाम् । ছোট পাথরকুচা । रा नि व ५ ।

**नागभृत्** । पु । डुण्डुभसर्पे । त्रिका ।

**नागमती** । स्त्री । कृष्णतुलस्याम् । वै निघ. ।

**नागमाता** । स्त्री । शारिवायाम् । वै निघ । मन शिलायाम् । हे.च. । मनसादेव्याम् । श.र. ।

**नागमार:** । पुं । भृङ्गराजे केशराजे । (केशुते। चिका । चि । हस्तिमारके ।

**नागरम्** । क्ली । मुस्तायां । मे । च.सू.२अ. । शुण्ठ्याम् । रा नि.व.६ । भा. । वा सू १५अ.वचादिव. । "नागरातिविषाभया. ।" वा चि १अ दुरालभादि' । शुण्ठ्यां । हरीतक्या । च द.सन्निपातज्व.चि.षडङ्गपानीये । च.सू ४अ । पु । नागरङ्गवृक्षे । अ र. ।

**नागरक:** । पुं । नागरङ्गवृक्षे । वै निघ. ।

**नागरक्तम्** । क्ली । सिन्दूरे । हे.च. ।

**नागरघन:** । पुं । नागरमुस्तायाम् । नागरमूता । रा नि.व ६ ।

**नागरङ्ग:** । पुं । (Citrus aurantium.) Orange. जम्बीरविशेषे । कमला लेबू । हि नारङ्गी, सन्तरा । मं नारङ्ग । तें गंजनिम्म, नारजिचेट्टु । ता. किचिलिचेट्टु । उत्. नारिङ्गी । गुणा.—तत्फलम् अम्लम् अत्युष्णं वातपित्तहरं सरञ्च । पक्व स्वाद्वम्ल हृद्यं दुर्जरं वातघ्नञ्च । मद व.६। मधुरमम्ल गुरु उष्ण रोचनम् आमवातक्रिमिशूलघ्नं श्रमघ्न बलकर रुच्यञ्च । रा नि व.११ । सुरभि पाकि गुरु दुर्जरम् अत्यम्ल मधुरकल्पं हृद्य वातघ्नञ्च । तत्केशर रुच्य वातहरञ्च । राज. । वातघ्नं दुर्जरं गुरु च । सु.सू.४६अ ।

**नागरमुस्तकम् (स्ता)** । क्ली,स्त्री । (Cyperus pertenuis. Syn. Mariscus cyperus.) नागरदेशप्रसिद्धमुस्तायाम् । नागरमुथा । हि नागरमोथा । तें तुङ्गगड्डलाविभ्' । ता: मुहक्काच । दा, गरमोटा । गुणा.—तिक्ता कटु कषाया शीतला कफघ्नी पित्तज्वरातिसारारुचितृषादाहघ्नी श्रमघ्नी च । रा.नि व.६ ।

**नागरा** । स्त्री । पानीयामलके । वै.निघ. ।

**नागरादि:** । पुं । कषायभेदे । "नागरातिविषामुस्तभूनिम्बामृतवत्सकै. । सर्व्वज्वरहर: क्वाथ सर्व्वातीसारनाशन. ॥" च.द.अ.सा चि. । अन्य —"नागर देवकाष्ठञ्च धन्याकं बृहतीद्वयम् ।" च.द.सामान्यज्व चि. । शुण्ठ्यादीनां प्रत्येक रत्तिद्वयाधिकमाषकत्रय चतुष्पलजलेन पक्व पलमवशेषयेत् । शा,को, । अपर.—"नागरं सुरतरुञ्च धान्यक कुण्डली बृहतिकायुग निशि ।" अचि.ज्व.चि. । नागरमुस्तायाम् । वै.निघ. ।

**नागराह्वम्** । क्ली । शुण्ठ्याम् । रा.नि.व.६ ।

**नागरी** । स्त्री । स्नुहीवृक्षे । मनसा गाछ । श.च. । [निघ. ।

**नागरीकन्या** । स्त्री । वन्ध्याकर्कोटक्याम् । वै.

**नागरुक:** । पुं । नागरङ्गवृक्षे । कमला लेबुर गाछ । श.र. ।

**नागरूपप्रभम्** । क्ली । हरिताले । वै.निघ. ।

**नागरेणु: (क:)** । पु । सिन्दूरे । रा.नि.व. १३ । (क') नागकेसरवृक्षे । वै निघ. ।

**नागरोत्था** । स्त्री । नागरमुस्तायाम् । "नागरोत्था कफहृत्या ।" रा नि व.६ ।

**नागलता** । स्त्री । शिश्ने । चिका ।

**नागवल्लरी** । स्त्री । नागवल्ल्याम् । भा. ।

**नागवल्लिका (ल्ली)** । स्त्री । पत्रशाकविशेषे । नागिता गाछ । ताम्बूलीलतायाम् । पाण गाछ । गुणा —कटुतीक्ष्णा तिक्ता पीनसवातघ्नी कफकासहरा रुच्या दाहकृद्दीपनी च । सा स्थानविशेषजातत्वात् बहुधा भिन्नगुणा । तत्र श्रीवाट्यम्लवाटीमालसीसदागिराम्लसरादय प्रसिद्धा. । तत्र अम्लसरा मालवे अगरापर्णं इति ख्याता, आन्ध्रे पीटकुलिपर्णं हेसनीया च, घोरसमुद्रदेशे घोरसमुद्रदेशपर्णं इति प्रसिद्धा । श्रीवाटीगुणा.—मधुरा तीक्ष्णा रसाढ्या सरसा रुच्या च। अम्लवाटी—कटुकाम्लतीक्ष्णतिक्ता उष्णा विष्टम्भकरी वातघ्नी च। मालसी—मधुरा तीक्ष्णा कटूष्णा पाचनी रुच्या दीपनी च। सदागिरा—अतिरसा सुगन्धि रुच्या तीक्ष्णा मधुरा दीपनी पुस्तकरी अतिवल्या विरेचनी सुखसौगन्ध्यकारी च । अम्लसरा—तीक्ष्णा मधुरा रुच्या हिमा दीपनी बल्या मुखामोदिनी गुल्माध्मानादिजित् । पटुलिका—कषाया उष्णा कटु: मलकर्षिणी पित्तकृत् वातघ्नी च । हेसनीया —कटुतीक्ष्णा उष्णा दीर्घपत्रा रुच्या दीपनी पाचनी च । ताम्बूलं सद्यस्त्रोटितं मुखरोगादिजनकं दाहारोचकरक्तदं मलकर विष्टम्भि वाग्निजननम्। चिरत्रोटित ताम्बूलदलं जलपोषितं गुणकर रुच्य बल्यञ्च । तत्र पर्णं तिक्तमूलं कषायं दाहमक

सुखजाड्यकर मलजननञ्च । गुर्भ पर्णं वातश्लेष्मरो गघ्न रुच्य पथ्य दीपन पाचनञ्च । शिरापर्णं रक्त-हृत् शैथिल्यजनकञ्च । रा नि व.११ । नागवल्लीफल हृद्य सुगन्धि कफवातजिच्च । भवि.१७भ. ।

**नागवारिकः** । पु । मयूरे । करीन्द्रे । मे. ।

**नागविन्ना** । स्त्री । नागवृकायाम् । नागद न्त्यां । वा च ६भ. ।

**नागवीजम्** । क्ली । शीसकृतरसवेधकवीजवि शेषे । यथा—"माक्षिकेण हतं नाम नागञ्च रञ्ज येन्मुहु । तं नाग वाहयेद्वीजे द्विपीडशगुणानि ह । वीजन्विद वरं श्रेष्ठं नागवीजमकीर्त्तितम् ॥" र चि.३भ । [क्षुपे । पद्म ।

**नागहन्ता (न्तिका)** । स्त्री । वृश्चिकाली

**नागशुण्डी** । स्त्री । हस्तिशुण्ड्याम् । वै निघ । तालमाखान्याम्, डम्बरीफले । रा नि व ७। [निघ.।

**नागश्रीवल्लभः** । पुं । सल्लकीनिर्यासे । वै

**नागसत्त्वः** । पुं । सीसकयाम् । वै निघ. ।

**नागसम्भवम्** । क्ली । सिन्दूरे । अम. ।

**नागसिन्दूरम्** । क्ली । सीसकृतसिन्दूरे । त त्प्रकारश्च यथा—"भुजङ्गमभगन्धञ्च पिष्टा पञ्चमलं पयेत् । तत्र सविद्रुते नागे वासामार्गसमुद्भवम् । चार वा निधयेत्तत्र चतुर्थांशं गुरूक्षितं । मर्दरे पाचयेद्युक्त्या वासादण्डावघट्टितं । ततः उद्धृत्य त चूर्णं वासाम्भोरैर्विमर्दयेत् । पुटेत् पुनः समुद्धृत्य तै मैव परिमर्दयेत् । एवं सप्तपुटैर्नाग सिन्दूरं जा यते ध्रुवम् । तारस्य वक्ष्यमाणो नाग वातपित्तकफा पह । वहवीकुष्ठगुल्मार्श शीपत्रचविषापह ॥" र स वि ९भ. । [च टी भ ख्या. ।

**नागसुगन्धा** । स्त्री । रास्नायाम्, सर्पगन्धायां ।

**नागस्फोता** । स्त्री । दन्तीक्षुपे । रा नि.व ६ । नागदन्तीक्षुपे । रा नि व ५ । [व ११ ।

**नागहनुः** । पुं । नखीनामगन्धद्रव्ये । रा नि.

**नागहन्त्री** । स्त्री । वन्ध्याकर्कोटक्याम् । रा. नि.व.७ । [हस्तीक्षुपे । वै निघ. ।

**नागा** । स्त्री । नाकुल्याम् । पुत्रदात्र्याम् । ना

**नागाख्यः** । पु । नागकेशरे । निघ. । चवि ९अध्या,४भ. ।

**नागान्तकः** । पुं । मयूरे । गरुडे । अम. ।

**नागारातिः** । पुं । वन्ध्याकर्कोटिकायाम् । रा नि.व ७ ।

**नागारिः** । पु । देवदालीलतायाम् । वै निघ । वन्ध्याकर्कोटक्याम् । रा नि.व ३ ।

**नागार्जुनयोगः** । पु ज्वरं प्रभृतिरोगेषु यो गविशेषे । त्रिफला पञ्चलवणं कुष्ठ कटुकी देवदा रु विडङ्ग निम्बफल बला गोरक्षतण्डुला हरिद्रा दारुहरिद्रा सौवर्चललवण प्र. समम् । करञ्जत्व सेन पिष्टा वदरास्थिप्रमाणा गुडी कार्या । छाग जलेनापि च तक्रेणापि काञ्जिकेन गुडघृतादिरस सेन लवणेन जलेन मूत्रकेण तैलेन ज्वरोगं निगु-ण्ड्या सर्व्वज्वरञ्च हन्ति । ত্রিফলা, পঞ্চলবণ, কুড়, কটুকী দেবদারু, বিড়ঙ্গ, নিমফল, বেলেড়া, গোরক্ষচাকুলি, হরিদ্রা, দারুহরি দ্রা, সচললবণ প্রত্যেকে সমভাগ। করঞ্জ ছালের রসে মর্দন। কুলপ্রমাণ গুলী হইবে। च द. ।

**नागार्जुनवटिका** । स्त्री । नेत्ररोगे हिता । "त्रिफलाव्योषसिन्धूत्थयष्टीतुत्थरसाञ्जन । प्रपौण्ड रीक जन्तुघ्न लोध्र ताम्रं चतुर्दश । द्रव्याण्येतानि सञ्चूर्ण्य वर्त्ति कार्या नभोऽम्बुना ॥" रस र. । न ताम्बु नगरवारि ।

**नागार्जुनाभ्रम्** । क्ली । हृद्रोगे औषधम् । "सहस्रपुटने शुद्ध वज्राभ्रमर्जुनत्वच । सत्त्वैर्विम र्दितं सप्तदिन खल्ल विशोषित । छायाशुष्का वटी कार्या नागार्जुनाभ्रम् ॥" रसा म ।

**नागार्जुनी** । स्त्री । दुग्धिकायाम् । *विकृते* । वै निघ. । [व.७ ।

**नागालावु** । स्त्री,क्ली । कुष्माण्ड्याम् । रा.नि.

**नागाह्वः** । पु । वनचम्पकवृक्षे । रा नि.व.१० क्ली । नागकेशरपुष्पे । वा सु.१५भ चन्दनादि । "हैमामधुकनागाह्वम् ।" नि.धा वाजीकरणेषु । "नागाह्वयापि चन्दनम् ।" च.द मू कृ चि ।

**नागाह्वयम्** । क्ली । नागकेशरपुष्पं । वा.सू. १५भ एलादि । "पुन्नागनागाह्वयम् ।"

**नागाह्वा** । स्त्री । हस्तिकन्दे । रा नि.व ७ । नागवल्लीलतायाम् । नागदमन्याम् । वै.निघ. ।

**नागिनी** । स्त्री । नागदन्तीक्षुपे । रा.नि.व.६। सचणाकन्दे । रा.नि.व.७ ।

**नागी** । स्त्री । बन्ध्याकर्कोटक्याम् । वै निघ.२भ. जीर्णज्व चि.कल्याणघृते ।

**नागीयः** । पु । नागकेशरे । रा नि.व ६ ।

**नागेश्वररसः** । पु । गुल्मे रसः । पारदः गन्धकः सीष, रङ्गं मन.शिला रसाञ्जनः यवक्षारः सर्ज्जिक्षारः टङ्कणं लौहं ताम्रम् अभ्र म. समम् । वचीचीरेण मर्द्दन । पश्चात् वासाचित्रकदन्तीमूलक्वाथेन दिवसं मर्द्दयेत् । मात्रा माषप्रमाणा । पारा, गन्धक, सीष, वङ्ग, मनछाल, निशादल, यवक्षार, साचिक्षार, सोहागा, लौह, ताम्र, अभ्र समभाग। सिजुर आठाय मर्दन। परे वासक, चिता ओ दन्तीर मूल समभाग लइया एकत्र क्वाथ करिया १ दिन मर्दन करिबे। मात्रा १ माष कलाय । भैष. ।

**नागोद(र)म्** । क्ली । गर्भजरोगविशेषे । "शुक्रशोणितं वायुनाभिप्रपन्नम् अवक्रान्तजीवमाध्मापयत्युदरम्, तत्कदाचिद्यदृच्छयोपशान्तं नैगमेषापहृतमिति भाषन्ते। तमेव कदाचित् प्रलीयमानं नागोदरमित्याहुः ।" सु.शा.१०अ. ।

**नाटाम्रः** । पुं । कालिङ्गकलतायाम् । उरस्स । त्रिका. ।

**नाड़ः** । पु । नले । नल गाछ । रा.नि.व.८। नाडीवल्लतायाम् । च सू.१अ. ।

**नाड़िः** । स्त्री । शरीरान्तर्नाडिकायाम् । च.टी भ. । सिंहपिप्पल्याम् । कालशाके । दूर्वाभेदे । नाडीव्रणे । नालि घा । वै.निघ. ।

**नाड़िकम्** । क्ली । कालशाके । कालन्द। शाक । भा.पू.१भ.शा.व. । [वै निघ. ।

**नाड़िका** । स्त्री । कालशाके । घटपरिमाणे ।

**नाड़िकायन्त्रम्** । क्ली । यन्त्रविशेषे । वकयंत्र, भाटीयंत्र । तस्य लक्षणं यथा—"विनिधाय घटे द्रव्यं कनीयासमधोमुखम् । घटमन्यमुखे तस्य स्थापयित्वोभयोर्मुखं । मृदुधिः समालिप्य नाड़िकां विनिवेशयेत् । यन्त्रात् कुण्डलिताड़िला जलद्रोण्यां महीयसां । आधारभाण्डपर्यन्तं ततश्च तां विधारयेत् । अधस्ताज्ज्वालयेदग्निं यावदाधो विगेदधः । ततीयादाधारगतं निर्मलं रसमुत्तमम् । नाडिकायन्त्रमेतद्धि मुनिभिः परिकीर्त्तितम् ॥" इति । अत्रि. । [टी.भ. ।

**नाड़िकेरः (लः)** । पुं । नालिकेरवृक्षे । श

**नाड़िचीरम्** । क्ली । निर्वेष्टने । नली । हारा.।

**नाड़िन्धमः** । पुं । स्वर्णकारे । त्रिका. ।

**नाड़िपत्रम्** । क्ली । नाड़ीचशाके । श.मा. ।

**नाड़ी** । स्त्री । शिरायाम् । रा.नि.व.१८ । नासाशाम् । नक्षत्रे । रा.नि.व २३ । नालि । गण्डदूर्व्वायां । मे. । नाडीव्रणे । रा.नि.व २० । ६० पलात्मककाले ।

**नाड़ीकः** । पुं । पट्टशाके । पाटशाक । कोष्ठैर शाक । हिं पटुया । भा.पू.१भ.शा व. । तत्पत्रं तिक्तमधुरभेदेन द्विविधं, तयोस्तिक्तं कृमिकुष्ठहरं, मधुरं पिच्छिलं शीतं विष्टम्भि कफवातलम् । ग्रन्थपत्रं—नलितमित्युच्यते । नालिता । ज्वरघ्नं पित्तकफज्वरघ्नं । तज्जलघ्नं पित्तघ्नं रोचनं व्यञ्जने हितञ्च । राज. । क्ली । कालशाके । हिं कालशाक । गुणाः—"कालशाकं सरं रूच्यं वातकृत्कफशोथहृत् । बल्यं रुचिकरं मेध्यं रक्तपित्तहरं हिमम् ॥" भा. ।

**नाड़ीकलापकः** । पुं । सर्पाक्ष्यां । भा. ।

**नाड़ीकल्पनविधिः** । पुं । भूमिष्ठस्य नाडीच्छेदनविधौ । "नाभिबन्धनात् प्रभृति हि अष्टाङ्गुलमभिज्ञानं कृत्वा छेदनावकाशस्य द्वयोरन्तरयोः शनैर्गृहीत्वा तीक्ष्णेन रौप्यराजतायसानां छेदनानामन्यतमेन ऊर्द्ध्वधारेण छिन्द्यात् । तामग्रे सूत्रेणोपनिबध्य कण्ठे चास्य शिथिलमवसक्तेत् । तस्य चेन्नाभिः पच्येत लोध्रमधुकप्रियङ्गुदारुहरिद्राकल्कसिद्धेन तैलेनाभ्यञ्ज्यात् एषामेव तैलौषधानां चूर्णेनावचूर्णयेदिति ।" च.शा.८अ. ।

**नाड़ीकेरः(लः)** । पुं । नारिकेलवृक्षे । श र.।

**नाड़ीचः** । पुं । तिक्तपट्टशाके । नालिता पाता। "नाड़ीचबीजकल्कः ।" भैष.क्षुद्री.चि. । पेचुकि । कटू । त्रिका. ।

**नाड़ीचक्रम्** । क्ली । नाड़ीनिर्णयकग्रन्थे ।

**नाड़ीचरणः** । पुं । पक्षिणि । त्रिका. ।

नि.व.२३। भूम्यामलक्याम्। एरण्डवृक्षे। वै.निघ।

**नानाकान्दः** । पुं। पिण्डाली। रा नि.व.७।

**नान्दीमुखी** । स्त्री। क्षुधान्यभेदे। यव। सा स्निग्धा। सु.सू.४६अ। "नान्दीमुखी मधूली च मधुरा स्निग्धशीतला।" च.र.।

**नापाकम्** । क्ली। पद्मबीजे। वै.निघ.।

**नापितशाला (लिका)** । स्त्री। नापित भवने। त्रिका.।

**नाभकः** । पुं। हरीतकीवृक्षे। वै.निघ।

**नाभिः** । पुं, स्त्री। उदरावर्त्ते। নাই। रा. नि.व १८। तन्नामकमर्म्मस्थाने। सु.शा.६अ। स्त्री। कस्तूरिकामदे। मे.। [श.र.।

**नाभिकण्टकः** पुं। नाभिरोगे। গোঁড়।

**नाभिका** । स्त्री। क्षुद्रकटभीवृक्षे। रा.नि.व.८।

**नाभिगुड़कः** । पुं। नाभौ गुडकवदुन्नतौ। নাইয়ের গোঁড়। त्रिका.।

**नाभिगोलकः** । पु। नाभिगुडके। जटा.।

**नाभिच्छेदनम्** । क्ली। नाड़िकाच्छेदने। च.।

**नाभिनाड़ी** । स्त्री। अमलानामनाभिनाड्यां। নাভিনাড়ী। च.।

**नाभिपाकः** । पुं नाभिशोथे। নাই পাকা।

**नाभिनाला** । स्त्री। नाभिनाड्यां। त्रिका.।

**नाभिलापः** । पु। अनिच्छायाम्। वै.निघ.।

**नाभी** । स्त्री। नाभौ। श.र.।

**नाभीलम्** । क्ली। स्त्रीकटिसन्धौ। नाभिगुडके। मे.। पीडायाम्। नाभिकूपे। हे.च.। अण्डसन्धौ। वै.निघ।

**नाभ्यभ्यङ्गः** । पु। नाभौ तैलमर्दने।

**नायिका** । स्त्री। पिण्डिकाल. किञ्चित्स्थूले कस्तूरीभेदे। মৃগনাভিবিশেষ। यथा—"चूर्णा कृतिस्तु खरिका तिलका तिलाभा कौलत्थबीजसदृशी च कुलत्थिकाख्या। स्थूला ततः किमपि यं किल पिण्डिका स्यात् तस्माच्च किञ्चिदधिकापि च नायिकैषा॥" रा.नि.व.१२। [त्रिका.।

**नारः** । पु। गोवत्से। जले। मे.। शुण्ठ्यां।

**नारकीटः** । पुं। भग्नकीटविशेषे। मे.।

**नारकेरः** । पुं। नारिकेलवृक्षे। जटा।

**नारङ्गम्** । क्ली। गर्ज्जरमूलके। গাজরমূলা। रा.नि.व.७।

**नारङ्गः** । पुं। नागरङ्गवृक्षे। কমলা লেবুর গাছ। फलगुणाः—मधुराम्लं गुरु उष्णं रोचनं वातामकृमिशूलश्रमघ्नं बल्यं हृद्यञ्च। रा.नि व.११। मद.व ६। "नारङ्गञ्च स्वादुगुणोपपन्नं सन्दीपनं रोचकमम्लसाद्य। त्रिदोषहृत् शूलकृमीन्निहन्ति मन्दाग्निकायश्वसनापहारि॥" अत्रि.१०अ। मरिचयूषे। पिप्पलीरसे। मे.।

**नारङ्गवर्णकम्** । क्ली। गञ्जने। শালগম। भा.पु.१भ.शा.व.।

**नारदा** । स्त्री। इक्षुमूले। मूर्व्वायां। वै.निघ.।

**नारा** । स्त्री। जले। श.र.।

**नाराचचूर्णम्** । क्ली। उदावर्त्ताधिकारे चूर्णम्। पाठः—"त्रिवृत्कणाहरीतक्यो द्विचतुःपञ्चभागिकाः। गुडिका गुडतुल्या सा विड्बन्धगदापहा॥" তেউড়ী ২ তো পিপুল ৪ তো. হরীতকী ৫ তো. সর্ব্বসম গুড। अन्यत्—त्रिवृच्चूर्णं पिप्पलीचूर्णं प्र. २ तो. शर्करा १ प.। तोलकद्वयं मधुना लिह्यात्। एतद्गाढपुरीषे पित्तकफे देयम्। তেউড়ীচূর্ণ, পিপুলচূর্ণ প্রত্যেকে ২ তো. চিনি ১ প.। ২ তো. মধুর সহিত সেব্য। शा.कौ.। [क्ति। श.र.।

**नाराचिका** । स्त्री। स्वर्णतोलनयन्त्रे। नि-

**नारायणः** । पु। वैद्यवृन्दनामवैद्यकग्रन्थकारे, वैद्यामृतकारे।

**नारायणतैलम्** । क्ली। वातव्याधौ तैलविशेषे। पाठः—"बिल्वोऽग्निमन्थ. श्योनाक. पाटला पारिभद्रकः। प्रसारण्यश्वगन्धा च बृहती कण्टकारिका। बला चातिबला चैव श्वदंष्ट्रा सपुनर्नवा। एषां दशपलान् भागान् चतुर्द्रोणेऽम्भस' पचेत्। पादशेषं परिस्राव्य तैलपात्रं प्रदापयेत्। शतपुष्पा देवदारु मांसी शैलेयक वचा। चन्दनं तगरं कुष्ठं एला पर्णिचतुष्टयं। रास्ना तुरगगन्धा च सैन्धवं सपुनर्नवं। एषां द्विपलिकान् भागान् पेषयित्वा विनिक्षिपेत्। शतावरीरसञ्चैव तैलतुल्यं प्रदापये-

त्। आज वा यदि वा गव्य चीरं दद्यात्तुग यम्॥" इति स्वल्पम्। शौनि गन्धद्रव्य देयम्। বেল, গণিরি, শ্যোণা, পারুল নিমছাল, গন্ধভাদুলিয়া, অশ্বগন্ধা, বৃহতী, কণ্টিকারী, বেলেড়া, শ্বেত বেলেড়া বা (গোবক্ষচাকুলিয়া) গোক্ষুর, পুনর্নবা প্রত্যেকে ১০ প। কাথার্থ—জল ২৫৬ শ শে ৬৪ শ তিল তৈল ১৬ শ.। কল্কার্থ—শুলফা, দেবদারু, জটামাংসী শৈলজ, বচ রক্তচন্দন, তগর পাদ্হকা, কুড, এলাইচ, শালপাণি, চাকুলি, মুগানী, মাষাণী, রাস্না, অশ্বগন্ধা সৈন্ধব, শ্বেতপুনা৷ প্রত্যেকে ২ প শতমূলীরস ১৬ শ ছাগ বা গব্য দুগ্ধ ৬৪ শ.। শীতল হইলে গন্ধদ্রব্য দিবে। রস র।

**नारायणप्रियम्**। क्ली। पीतचन्दने। मद।

**नारायणी**। स्त्री। शतमूल्याम्। रा नि व ४। सा कौ लक्ष्मीविलासे। भैष।

**नारिकेर (ल)**। पु। (Cocos nucifera) The cocoanut tree स्वनामख्याततरौ। নারিকেল গাছ। म ह.। प ह। हि नेरिएल्। म क नारियल। तैं नारिकादम। उत् नड़िया। वम् मारली। मा टैन्ना, टैन्ना। अस्य गुणा — गुरु स्निग्ध शीतत्व पित्तघ्नत्व। अर्द्धपक्वफल त्व ग्गोषघ्न दुर्ज्जरत्व। तदाम्भसलिलं लघु बल्य शीतल रसपाके मधुर पित्तशमन पीनसशमनं तृषाघ्न दाहघ्न शोषशमन सुखदत्व। तत्पक्वजल किञ्चित्पित्तकारि मधुर रुचिकर दीपन बलकर गुरु हृद्य बलवर्द्धनत्व। नारिकेलखर्ज्जूर स्निग्ध गुरु दुर्ज्जरं दाहविष्टम्भकरं हृद्यं बलवीर्य्यवर्द्धनत्व। रा नि व ११। "दुग्धन्तु नारिकेलस्य बल्य हृद्य गुरु स्मृतम्। पाके स्वादु समुद्दिष्ट स्निग्ध हृष्यत्व दाहकम्। किञ्चिदुष्णं वातकफगुल्मकासविनाशकम्॥ नारिकेलघृतं नाम हृद्य बलवर्द्धनम्। केश्य रसे च पाके च मधुरत्व रुचिप्रदम्। हृद्यत्व वात पित्तघ्न तज्जीर्णं गुरु वातहम्॥ नारिकेलस्य पुष्पन्तु शीतं रक्तातिसारहम्। रक्तपित्तप्रमेहघ्न सोमरोगञ्च नाशयेत्। मलस्तम्भकरञ्चापि शीतलम् ॥ नारिकेलशिरोमज्जा रसे पाके मधु स्मृता। नारिकेलपुष्पजल गुरु हृष्यकोष्णिलम्॥" वै निघ। "बालस्य नारिकेलस्य जलम्मायो विरेचनम्।" राज। "स्निग्धं स्वादु हिमं हृद्यं दीपन वस्तिशोधनम्। वृष्य पित्तपिपासाघ्न नारिकेलोदकं गुरु॥" सु। तन्मस्तकगुणा —"नारिकेलस्य तालस्य खर्ज्जूरस्य शिरांसि तु। कषायस्निग्धमधुरबृंहणानि गुरूणि च॥ नारिकेलफल शीतं दुर्ज्जरं वस्तिशोधनम्। विष्टम्भि बृंहणम्बल्य वातपित्तास्रदाहनुत्। विशेषत कोमलनारिकेल निहन्ति पित्तज्वरमूत्रदोषान्। तदेव जीर्णं गुरु पित्तकारि विदाहि विष्टम्भि मत भिषग्भि॥ तस्याम्बु (तदम्बु) शीतलं हृद्य दीपन शुक्रल लघु। पिपासापित्तजित् स्वादु वस्तिशुद्धिकरम्परम्॥' भा। तस्य तैल गुरु वाजीकर चीणधातुपोषण वातपित्तघ्न मूत्राघातप्रमेहश्वासकासयक्ष्महितं मेधाकरं चतनाशनञ्च। "नारिकेल सुमधुर गुरु स्निग्धञ्च शीतलम्। हृद्य मलहर्षं वस्तिशोधन रक्तपित्तनुत्॥ विष्टम्भि पक्व मतिमन्दपक्व कफवातलम्। बृंहण शीतलं पथ्य नारिकेलफलं विदु॥' अत्रि १७अ। [ष्योम्।

**नारिकेरचीरिका**। स्त्री। नारिकेलचीरिका॥

**नारिकेलखण्डम्**। क्ली। शूलाधिकारे औषधम्। पाठ —"कुडवमितमिह स्यान्नारिकेल सुपिष्ट पलपरिमितसर्पिं पाचित खण्डतुल्यम्। निजपयसि तदेतत् प्रस्थमाने विपक्व गुडवदथ सुशीते शाणभागान् क्षिपेच्च। धन्याकपिप्पलिपयोदतुगाद्विजीरान् श्याम त्रिजातकमथापि च केसरञ्च। हन्त्यम्लपित्तमरुचि क्षयमस्रपित्त शूल वमिं सकलपौरुषकारि हारि।" सुपिष्टनारिकेलशस्य ४ प भर्ज्जनाथघृतं १ प शर्करा ४ प नारिकेलजल ४ श। पाकसिद्धौ प्रक्षेप —धन्याक पिप्पली मुस्ता वंशरोचना जीरक कृष्णजीरक गुडत्वक तेजपत्रम् एला नागकेसरपुष्पम् एषां प्र चूर्ण ४ मा। इदं पित्तशूले। मा कौ। रस र.। भैष। अपरम्—कोमलनारिकेलशस्य ८ प शर्करा १ प्र नारिकेलजल ८ श घृत ५ प शुण्ठीचूर्ण १ प दुग्ध १ श एकत्र पचेत्। पाकसिद्धौ वंशलोचना कटुकी मुस्ता गुडत्वक् एला तेजपत्र नागकेशर धान्यक पिप्पली गजपिप्पली प्र चूर्ण ४ तो. प्रक्षेप्यम्। रस र.। इदमम्लपित्ते।

**नारिकेलजलम्**। क्ली। प्रसिद्ध, रक्तपित्ते हितम्। शि धी रक्तपि.चि.।

**नारिकेलतैलम्** । क्ली । तत्फलोत्थतैले ।

**नारिकेललवणम्** । क्ली । सजलनारिकेलमध्ये सैन्धवलवणं पूरयित्वा तन्नारिकेलं मृदावेष्ट्य शोषयेत् । अथ दग्ध्वा तन्मध्याल्लवणं ग्राह्यं । मात्रा ४ माषाः । भैष. ।

**नारिकेलक्षीरी** । स्त्री । नारिकेलदुग्धशर्करादिकृतमिष्टान्ने । *यथा*—"नारिकेलं तनूकृत्य छिन्नम्पयसि गोः क्षिपेत् । सितागव्याज्यसंयुक्तं तत्पचेन्मृदुनाग्निना ॥" गुणाः—"नारिकेलोद्भवा क्षीरी स्निग्धा पित्तातिपुष्टिदा । गुर्वी सुमधुरा वृष्या रक्तपित्तानिलापहा ॥" भा ।

**नारिकेलामृतम्** । क्ली । अम्लपित्ताधिकारे औषधम् । "नारिकेलफलप्रस्थं सुपिष्टं घृतभर्जितं । प्रस्थं प्रस्थं समादाय गव्यक्षीरपूर्णस्य तद्युतं । द्विपात्रं नारिकेलाम्बु तत्समं क्षीरमेव च । धात्र्याश्च स्वरसप्रस्थं खण्डस्यापि तुलां न्यसेत् । एकीकृत्य पचेत्सर्व्वं शनैर्मृद्वग्निना भिषक् । सिद्धशीते प्रदातव्य चूर्णं तत्र सुगुण्डित । त्रिकटी. सचतुर्जातं प्रत्येकन्तु पलोन्मित । धात्रीजीरकयुग्मञ्च धन्याकं ग्रन्थिपर्णक । तुगापयोदचूर्णानि त्रिकर्षञ्च पृथक् पृथक् । मधुनः पलचत्वारि स्निग्धे भाण्डे निधापयेत् ॥" रस.र. । भैष. ।

**नारिकेलिः (ली)** । स्त्री, पु (इन्) । नारिकेलवृक्षे । भा. । श.र. ।

**नारिकेलोदकम्** । क्ली । नारिकेलजले ।

**नारी** । स्त्री । तन्नामकौषधिविशेषे । या अश्वबलेति कथ्यते । यस्याः पत्रम् अश्वसदृशञ्च । च.चि.२७. । रमण्यां । মেয়ে মানুষ । सा मातृशोणितोत्तरा विषमतिथौ जाता च । सुखबोधः ।

**नारीघृतम्** । क्ली । नारीदुग्धोत्थघृते । মেয়ে মানুষের দুধের ঘি । गुणाः—"कफेऽनिले योनिदोषे रोगेष्वन्येषु शस्यतम् । अश्वदुग्धमाले स्त्रीणाञ्च सर्पिः स्याद्मृतोपमम् ॥" अत्रि.८७. । चक्षुष्यं पथ्यं सर्व्वरोगघ्नं मन्दाग्निदीपनं रूच्यं पाके लघु विषघ्नञ्च । रा.नि.व.१५ ।

**नारीचम्** । क्ली । शाकविशेषे । নালিতা । तद्द्विविधं तिक्तं मधुरञ्च । तिक्तं रक्तपित्तघ्नं क्रिमिकुष्ठहरञ्च । मधुरं पिच्छिलं शीतलं विष्टम्भि कफवातकरञ्च । राज. ।

**नारीदुग्धम्** । क्ली । मानुषीदुग्धे । See मानुषीक्षीरम् ।

**नारीपयः** । क्ली । नारीदुग्धे ।

**नारीवल्लभा** । स्त्री । गन्धप्रियङ्गौ । वै निघ. ।

**नारीषण्डः** । पुं । स्त्रीनपुंसके । च.शा.२५. ।

**नारीष्टा** । स्त्री । मल्लिकापुष्पवृक्षे । মল্লিকা ফুলের গাছ । रा नि व.१० ।

**नारीक्षीरम्** । क्ली । मानुषीक्षीरे ।

**नार्य्यङ्गः** । पुं । नागरङ्गवृक्षे । কমলা লেবুর গাছ । श.र. । [वै.निघ. ।

**नार्य्यतिक्तः** । पुं । किराततिक्तके । চিরাতা ।

**नालः** । पुं,क्ली । पद्मदण्डे । अम. । हरिताले । स्वामी । मेद्रे । पिचकिरि । पुं । नले । रा.नि व.८ । मेढ्रे । भा म.३भ.मूत्रोत्सङ्गे ।

**नालकः** । पु । कलाये । মটর । रा.नि.व.१६ । नलक इति पाठोऽपि पुस्तकान्तरे दृश्यते । [८ ।

**नालवंशः** । पुं । नले । নল গাছ । रा नि.व.

**नाला** । स्त्री । नले । स्तम्बे । ডাঁটা, নাড়া । अम.भ ।

**नालावती** । स्त्री । नागवल्लीलतायां । प सु. ।

**नालिः** । स्त्री । नलकास्थनि । নলি । नाड्यां, शिरायां । हि.वी. ।

**नालिकः** । पुं । खड्गके । গণ্ডার । महिषे । चिका. । रक्तगन्धबोले । नाडीशाके । चर्म्मकषायाम् । वै निघ. । क्ली । पद्मे । श.र. ।

**नालिका** । स्त्री । नाडायाम् । श र. । नाड्यां । अ.टी. । चर्म्मकषायाम् । जटा. । करिकर्णवेधशस्त्रे । हारा. । नलाकारतक्षमात्रे । नलिकानामगन्धद्रव्ये । शेफुण्डे । वै.निघ. । मिटपत्रमालितायाम् । श.मा । [ঝাড় । वै.निघ. ।

**नालिकिनी** । स्त्री । कमलिन्याम् । পদ্মের

**नालिकेरः (कः)** । पुं । नारिकेलवृक्षे । अ.टी.र. ।

**नालिजङ्घः** । पुं । द्रोणकाके । हारा. ।

**नालिता** । क्ली । (Arum colocasia)

स्वनामख्यातपत्रशाके। नालिता गाछ। प.सु.। गुणाः—नाडीचवत्।

**नाली**। स्त्री। मन.शिलायाम्। नलिकायाम्। वै.निघ। शाककडम्बके। डाँटा। मे.। नाड्या, शिरायाम्। भ.टी.भ.। पद्मे। श.र.।

**नालीकः**। पुं। पद्मे। मृणाले। शरे। क्ली। पद्मखण्डे। मे.।

**नालीकिनी**। स्त्री। पद्मसमूहे। श.र.।

**नालीव्रणः**। पु। नाडीव्रणे। श.र.।

**नाल्पपुष्पी**। स्त्री। महाशणक्षुपे। प.सु.।

**नावनम्**। क्ली। नस्ये। सु.।

**नासत्यौ**। पुं। अश्विनीकुमारौ। अम.।

**नासा**। स्त्री। नासिकायाम्। वासकवृक्षे। रा.नि.व.११। [षे। निका.।

**नासाच्छिन्नी**। स्त्री। पूर्णिकानामपक्षिविशे

**नासा(प्रती)नाहः**। पुं। नासारोगविशेषे। लक्षणं यथा—"कफावृतो वायुरुदानसञ्ज्ञो यदा स्वमार्गे विगुण स्थितः स्यात्। घ्राणं वृणोतीव यदा स रोगी नासाप्रतीनाह इति प्रदिष्ट॥" सु.उ.२२ब.।

**नासापरिशोषः**। पुं। नासारोगविशेषे। लक्षणं यथा—"घ्राणाश्रिते श्लेष्मणि मारुतेन पित्तेन गाढं परिशोषिते च। समुच्छ्वसित्यूर्ध्वमधश्च कृच्छ्रात्तस्य नासापरिशोष उक्तः॥ सु.उ.२२ब.।

**नासा(सिका)पाकः**। पु। नासारोगविशेषे। लक्षणं यथा—"घ्राणाश्रितं पित्तमरूंषि कुर्य्याद्यस्मिन् विकारे बलवांश्च पाकः। तं नासिकापाकमिति व्यवस्येत् विक्लेदकोथावपि यत्र दृष्टौ॥" सु.उ.२२ब.।

**नासायन्त्रम्**। क्ली। घ्राणार्बुदादिदर्शनार्थे यन्त्रविशेषे। लक्षणं यथा—"घ्राणार्बुदार्शसामेकच्छिद्रा नाड्यङ्गुलद्वया। प्रदेशिनीपरीणाहा स्याद्भगन्दरयन्त्रवत्॥" अत्रि.।

**नासारोगः**। पु। नासागतैकत्रिंशद्रोगेषु। यथा—"अपीनसं पूतिनस्यं नासापाकस्तथैव च। तथा शोणितपित्तञ्च पूयशोणितमेव च। क्षवथुर्भ्रंशथुर्दीप्तो नासानाहः परिस्रवः। नासाशोषेण स

हिता दशैकार्येरिता गदा। चत्वार्य्यर्शांसि चत्वारः शोफाः सप्तार्बुदानि च। प्रतिश्यायाश्च ये पञ्च वक्ष्यन्ते सचिकित्सिताः। एकत्रिंशन्मितास्ते तु नासारोगाः प्रकीर्त्तिताः॥" सु.उ.२२ब। विशेषः स्वस्वपर्य्याये द्रष्टव्यः।

**नासार्शः**। क्ली। घ्राणेन्द्रियजातार्शसि। नाके अर्श। तत्र लक्षणम्—प्रतिश्यायोऽतिमात्रं क्षवथुः कृच्छ्रोच्छ्वासता पूतिनस्यं सानुनासिकवाक्यत्वं शिरोदुःखञ्चेति। सु.नि.२ब.।

**नासालुः**। पु। जातीफलवृक्षे। वै.निघ। कट्फलवृक्षे। श.च.। [सु.सू.३२ब.।

**नासावंशः**। पु। नासादण्डे। नाक बाँड़ि।

**नासा(सिका)शोषः**। पुं। नासापरिशोषरोगे। सु.उ.२२ब.।

**नासासंवेदनः**। पु। काण्डीरलतायाम्। करना। रा.नि.व.३। छिक्किन्याम्। (हँचेंछता)। क्षुद्रकारवेल्ले। वै.निघ. [ड। च.शा.७ब।

**नासास्थि**। क्ली। घ्राणास्थनि। नाकेर हा-

**नासा(परि)स्रावः**। पु। नासास्रावरोगे। लक्षणं—"घनसमच्छ सलिलप्रकाशं यस्या विवर्णं स्रवतीह नासा। रात्रौ विशेषेण हितं विकारं नासापरिस्रावमिति व्यवस्येत्॥" सु.उ.२२ब।

**नासिकन्धमः**। त्रि। नासिकया निःश्वासधारिणि। व्याक.। [व्याक।

**नासिकन्धयः**। त्रि। नासापथेन पानशीले।

**नासिका**। स्त्री। घ्राणेन्द्रिये। रा.नि.व.१८। या गर्भस्थस्य पञ्चभिर्मासै भवति। सुखबोध.।

**नासिकामलम्**। क्ली। सिंघाणे। शिङ्घाणि। रा.नि.व.१८। [का।

**नासिकाशब्दः**। पु। नासाशब्दे। नाक डा-

**नासिक्यम्**। क्ली। नासायाम्। त्रिका.।

**नासिक्यौ**। पु। अश्विनीकुमारद्वये। हे.च.।

**नास्तितः (टः)**। पुं। छागवृषे। श.च.।

**नःछः**। पु। चानाहे, मलावष्टम्भे। वै.निघ.।

**निःशल्या**। स्त्री। क्षुद्रदन्तीवृक्षे। रा.नि.व.६।

**निःशूकः**। पु। शुकशालिधान्ये। रा.नि.व.१६।

**निःश्रेणिः** । स्त्री । वनखर्जूरिकायाम् । मे. ।
**निःश्रेणिका** । स्त्री । कोद्रवाद्रसिद्धे तृणविशेषे । घासविशेष । गुणाः—नीरसा तथा पशूनामबलप्रदा । रा.नि.व.८ । [रा.नि.व.११ ।
**निःश्रेणी** । स्त्री। खर्जूरीवृक्षे । খেজুর গাছ ।
**निःश्वसन(सित)म्** । क्ली । निश्वासे ।
**निःश्वासः** । पुं । नासावायौ, प्रश्वासे । हे.च. ।
**निःसरणम्** । क्ली । निर्गमने । हे.च. ।
**निःसारः** । पुं । पृथुशिम्बश्योणाकवृक्षे । বড সোঁটা শ্যোণা গাছ । रा.नि.व.९ । खदिरीवृक्षिकायाम् । वै.निघ. । शाखोटवृक्षे । श.च. ।
**निःसारकः** । त्रि । रेचके ।
**निःसारा** । स्त्री । कदलीवृक्षे । रा.नि.व.११ ।
**निःस्नेहा** । स्त्री । अतसीवृक्षे । मशिना । चिका. ।
**निःस्यन्दः** । पुं । स्रावे । क्षरणे ।
**निःस्रावः** । पुं । भक्तप्रसुतद्रवमण्डे । ভাতের মাড, ফেন । हे.च. ।
**निकषः** । पुं । स्वर्णमणौ । च.टी.भ. ।
**निकारणम्** । क्ली । मारणे । अम. ।
**निकुचः** । पुं । डहुके । ডেলো । च.सू.४अ. ।
**निकुञ्चकः** । पुं । मुष्टिपरिमाणे । स च कुडवपादः । भरतद्वयसर्वस्वे । वानीरवृक्षे । भा. ।
**निकुञ्जः** । पुं,क्ली । जलवेतसे । मद.व.५ । वै.निघ.२भ पाण्डु-चि.मण्डूरादरिष्टे ।
**निकुञ्चिकाम्ला** । स्त्री । निकुञ्चिकानामश्रीवल्लीतुल्यगुणकण्टकवृक्षे । निकुञ्चिके । निरोषवल्लीति भाषा । रा.नि.व.८ ।
**निकुम्भः** । पु । दन्तीवृक्षे । र.मा. । वा.सू.१५अ.शोधनव. । "निकुम्भकुम्भत्रिफलागवाक्षी ।" भा.म.४भ.जलोदरे चि । "त्रिवृन्निकुम्भानाम् ।" च.सू.२अ.यत्प्रदेहे । जलवेतसे । सु.चि.१०अ ।
**निकुम्भवीजम्** । क्ली । जैपालवीजे । रा.नि.व.६ ।
**निकुम्भा (म्भी)** । स्त्री । कट्फले । वै.निघ. २भ.कर्णकान्त.चि. । दन्तीवृक्षे । प.मु. । चन्द्रप्रभागुड्याम् । [रा.नि.व.६ ।
**निकुम्भाख्यवीजम्** । क्ली । जयपालवीजे ।
**निकृतनः** । पुं । गम्भके । वै.निघ. ।
**निकेतनः** । पुं । जलवेतसे । वै.निघ. । पलाण्डौ । श.च. ।
**निकोचः (टः,ठः) (कः)** । पुं । अङ्कोटवृक्षे । আঁকোড গাছ । रा.नि.व.९ । च.टी भ । च.सू.२०अ. । (टक.) वृक्षभेदे । পেস্তা গাছ । वै.निघ. । [कन्द ।
**निखण्डिका** । स्त्री । गुडूचीकन्दे । गुडूचीकन्द ।
**निखर्वः** । पु । वामने । हे.च. ।
**निगडः** । पुं । धातुमारणवीजविशेषे । यथा—सुधार्कक्षीरं पलाशवीजं गुग्गुलुः प्रत्येकं समं सैन्धवद्विगुणेन सह मर्दयित्वा विधेयः । र.चि.२अ. ।
**निगदः** । त्रि । पुरातने । वा चि ७अ. ।
**निगन्धिकः** । पुं । सुवर्णचम्पके । वै.निघ. ।
**निगरः** । पुं । भोजने । रा.नि.व.२० ।
**निगरणम्** । क्ली । भोजने । रा नि.व २० । पुं । गले । मे. ।
**निगारः** । पुं । भक्षणे । अम. ।
**निगालः** । पुं । गले । গলা । रा.नि.व.१८ । अश्वस्य घण्टाबन्धसमीपस्थदेशे । ज.द.२अ. ।
**निगालवान्** । पुं । अश्वे । अम. । [वर्णा. ।
**निगुः** । पु । मनसि । त्रिका. । मले । मूले ।
**निगूढः** । वनमुद्गे । हे.च. । त्रि । गुप्ते ।
**निग्रहः** । पु । चिकित्सायाम् । रा नि.व २० ।
**निग्रहस्थानम्** । क्ली । भिषजां वादमार्गप्रनार्थमधिगन्तव्यपदविशेषे । "त्रिरभिहितस्य वाक्यस्याज्ञानं परिषदि विज्ञानवत्याम् अननुयोज्यस्यानुयोगोऽनुयोज्यस्य चाननुयोगः ।" च.वि ८अ. ।
**निघण्टुः** । पु । अभिधाने, नामसंग्रहे । हे.च. ।
**निघण्टुराजः** । पु । नरहरिकृतराजनिघण्टौ ।
**निघ्नः** । पु । खरे । वराहे । उष्णा ।
**निचयात्मकः** । त्रि । सान्निपातिके ।

**निधनम्** । क्ली । मरणे । अम । पुं । वधतारायाम् । [नि व.९ ।

**निधमन:** । पुं । निम्बवृक्षे । निम् गाछ । रा.

**निधि:** । पुं । नलिकायाम् । नालुका । रा नि.व १२ । जीवकौषधौ । श.च ।

**निधुवनम्** । क्ली । सुरते । अम. ।

**निध्यानम्** । क्ली । दर्शने । अम ।

**निनन्दु:** । स्त्री । मृतवत्सायाम् । हे.च. ।

**निन्द(न्द्य)तल:** । त्रि । निन्दितहस्ते । श.र. ।

**निप:** । पुं । कदम्बवृक्षे । श.च. । कलसे । अम. ।

**निपाक:** । पुं । रन्धने, पाके । श.र. ।

**निपानम्** । क्ली । दोहनभाण्डे । त्रिका. । कूपसमीपे शिलादिबद्धे कूपोद्धृताम्बुस्थाने । भ. ।

**निपुण:** । पुं । चिकित्सके । सु.नि १६अ. ।

**निफला** । स्त्री । ज्योतिष्मतीलतायाम् । लताफट्‌की । भा. ।

**निफालनम्** । क्ली । दर्शने । वै.निघ. ।

**निफेनम्** । क्ली । अहिफेने । रा.नि.व.६ ।

**निबन्ध:** । पुं । मलमूत्ररोधरोगे, आनाहे । हे.च. । निम्बवृक्षे । जटा. ।

**निबन्धनम्** । क्ली । हेतौ । भा. ।

**निभालनम्** । क्ली । दर्शने । त्रिका. ।

**निमज्जथु:** । पुं । शयने । निद्रायां । वै.निघ ।

**निमज्जनम्** । क्ली । स्नाने, अवगाहने । वै.निघ. । [वा चि.७अ. ।

**निमर्द्दक:** । पुं । मांसस्य विविधव्यञ्जनप्रकारे ।

**निमित्त(क)म्** । क्ली । हेतौ । मा.नि. । चिह्ने । अम. । (कम्) चुम्बने । श.मा ।

**निमित्तकृत्** । पुं । काके । रा.नि.व १९ ।

**निमीलः (नम्)** । पुं, क्ली (नम्) । निमिषे । हे.च. ।

**निमेष:** । पुं । नेत्रवर्त्मगतरोगविशेषे । लक्षणं—"निमेषणी: शिरा वायु: प्रविष्टो वर्त्मसंश्रया: । चालयेदति वर्त्मानि निमेष: स गदो मत: ॥" सु उ३अ. । निमिषे । शब्द । श.र. ।

**निमेषरुक्** । पुं । खद्योते । त्रिका. ।

**निम्नगम्** । क्ली । जले । रा.नि व.१४ ।

**निम्ब: (क:)** । पुं । (Melia azadirachta, Syn. Azadirachta Indica.) स्वनामख्यातवृक्षे । निम् गाछ । हिं निम् । म निंब, लिम्ब । कं बेउ । ते येपचेट्टु । ता. वेपुम्मरम । गुणा: —शीत: तिक्त: व्रणकृमिवमिशोफघ्न: श्लेष्मघ्न: बहुविषपित्तघ्न: विशेषतो हृदयविदाहशान्तिकरश्च । रा.नि.व ९ । तत्फलगुणा:—रसे तिक्तं पाके कटु भेदनं स्निग्धं लघु उष्णं कुष्ठघ्नं गुल्मार्श:कृमिमेहघ्नञ्च । भा. । "दूर्व्वानन्तानिम्बवासात्मगुप्ता. ।" वा.सू.१५अ.आरग्वधादि: । खर्ज्जूरवृक्षे । तालीशपत्रे । मरिचे । पलाण्डौ । क्षतमूलके । रा.नि.व.२१ ।

**निम्बतरु:** । पुं । पारिभद्रवृक्षे । रा.नि.व.८ । निम्बवृक्षे । मन्दारवृक्षे । अम. ।

**निम्बतैलम्** । क्ली । निम्बफलीयतैले । निम् फलेर तैल । गुणा:—कटूष्णकृमिकुष्ठकफघ्नञ्च । रा.नि.व.१५ ।

**निम्बपञ्चकम्** । क्ली । पञ्चनिम्बे । रा.नि.व.१२ ।

**निम्बपत्रम्** । क्ली । प्रसिद्धं, रक्तपित्ते हितम् । निमपाता । सि.यो र.पि.चि खण्डखाद्ये । गुणा: —"निम्बपत्रं स्मृतं नेत्र्यं कृमिपित्तविषप्रणुत् । वातलं कटुपाकञ्च सर्व्वारोचककुष्ठनुत् ॥" भा. । च.द.अष्टाङ्गधूपे ।

**निम्बप्रसव:** । पुं । निम्बपत्रे । वा चि.९अ. ।

**निम्बवीज:** । पुं । राजादनीवृक्षे । खिर्णी गाछ । रा नि.व.११ ।

**निम्बु: (म्बू:) (क:)** । पुं । (Citrus medica. Var, acida.) अम्लजम्बीरवृक्षे । टक लेबुर गाछ, कागजी लेबू । म लिंबे । कं लिम्बू । गुणा:—फलमम्लरसं कटूष्णं गुल्मामवातहरम् दीपनं पाचनं वातकफकण्ठरुग्विहरं । पक्वमतीव रुच्यम् । रा नि.व ११ । निम्बूफलं वातघ्नं दीपनं पाचनं लघु कृमिघ्नं तीक्ष्णमुदररुक्प्रशमि हितं रोचनं मन्दाग्नौ बद्धविट् च हितम् । भा. । "निम्बुकफलमम्लमादनं तीक्ष्णमुष्णमुदररुग्घ्न पचम् । वातपित्तकफशूलिनां हितं नष्टवान्तरुचि

शोधनम्परम् ॥ त्रिदोषमथोज्वरपीडितानां दोषा श्रितानाञ्च सवज्वलानां । मलग्रहे बद्धगुदे हितञ्च विसूचिकायां मुनयो वदन्ति ॥" भवि.१७अ. ।

**निम्बुकपानकम्** । क्ली । निम्बूरसकृतप्रपानके । लेबूव शर्बत । निम्बुरस १ भ. शर्करोदक ६ भ. लवङ्गमरिचचूर्णेन सम्मिश्य कृते पानके । भा । [रसे ।

**नियतः** । पु । गन्धके । र.सा.स.वसन्ततिलक

**नियमनः** । पु । निम्बवृक्षे । वै निघ. । क्ली । रसस्य संस्कारविशेषे । See पारद ।

**नियामकगणः** । पु । रसनियामकद्रव्यसमूहे । यथा—"सर्पाक्षीवनकर्कोटी कञ्चुकी यमचिञ्चिका । शतावरी शङ्खपुष्पी शरपुङ्खा पुनर्नवा । मूषापर्णी च मत्स्याक्षी ब्रह्मदण्डी शिखण्डिनी । अनन्ता काकजङ्घा च काकमाची च पोतिका । विष्णुक्रान्ता सहचरा सहदेवी महाबला । बला नागबला मूर्व्वा चक्रमर्द्दकरञ्जकौ । पाठा तामलकी नीली शालिनी पद्मचारिणी । घण्टा विषघ्टा गोजिह्वा कोकिलाक्षी घनध्वनि । माण्डुपर्णी क्षीरिणी च त्रिपुटी सिंहपुच्छिका । कृष्णवर्णा च तुलसी सिंही च गिरिकर्णिका ॥" र सा सं. ।

**नियोगः** । पु । इदमेव कर्त्तव्यमिति अवधारणे । यथा—पथ्यमेव भोक्तव्यम् । सु उ.२५च ।

**नियोद्धा** । पु । कुक्कुटे । रा नि.व.१८ ।

**निय्या** । स्त्री । सर्पपत्रांशमाने प.प्र. ।

**निरक्ता** । स्त्री । उपशाये ।

**निरशनम्** । क्ली । अनशने । व्याक ।

**निरसनम्** । क्ली । निष्ठीवने । अम ।

**निरसा** । स्त्री । निर्विषिकावृक्षे । रा नि व.८ ।

**निरातङ्कः** । त्रि । रोगमुक्ते । रा नि.व.२० ।

**निरापशालिः** । पु । जलशून्यक्षेत्रे उत्पन्नसम्पातशालिधान्यविशेषे । निर्जल'कलम टेइनशिक धान्य । मं रूपशालि । कं तुरुनेलु । गुणा—मधुर. स्निग्ध शीतल पित्तदाहघ्न त्रिदोषघ्न वृष्य पथ्य सर्व्वरोगघ्नञ्च । रा.नि.व १६ ।

**निरामज्वरः** । पु । पक्वज्वरे । लक्षण—"क्षुत्क्षामता लघुत्वञ्च गात्राणां ज्वरमार्द्दवम् । दोषप्रवृत्तिरुत्साहो निरामज्वरलक्षणम् ॥" मा नि. ।

**निरामयः** । पु । शूकरे । श मा । वनच्छागे । मे । त्रि । रोगमुक्ते । रा. नि व.२० ।

**निरामालुः** । पु । कपित्थवृक्षे । श च. ।

**निरालम्बा** । स्त्री । आकाशमांसी । इन्द्रजटाधारिणी । रा.नि व १२ ।

**निरिन्द्रियः** । त्रि । इन्द्रियशून्ये । [४च. ।

**निरीहः** । त्रि । निश्चेष्टे । निर्व्यापारे । वा.चि.

**निरुत्थः (स्थित.)** । त्रि । मृते । र सा स. ।

**निरुत्थीकरणम्** । क्ली । मृतलौहस्य मित्रपञ्चकादिभि पाकेन मारणे । "सर्व्वमेतन्मृत लौहं पक्तव्य मित्रपञ्चकैः । यदत्र स्यान्निरुत्थञ्च सेव्य रक्तिचतुष्टयम् ॥" मतान्तरं यथा—"गोघृत ग्रन्थकं लौह समखल्ले विमर्द्दयेत् । दिनैकडम्बकाद्रावे कृत्वा गजपुटे पचेत् । इत्येव सर्व्वलौहानां कर्त्तव्यं स्यान्निरुत्थितम् ॥" र सा.स. ।

**निरुद्धगुदः (पायु.)** । पुं । तन्नामकक्षुद्ररोगे । लक्षणादि यथा—"वेगसन्धारणाद्वायुर्विहतो गुदमाश्रित । निरुणद्धि महत् स्रोत सूक्ष्मद्वारं करोति च ॥ मार्गस्य सौक्ष्म्यात् कृच्छ्रेण पुरीषं तस्य गच्छति । सन्निरुद्धगुद व्याधिमेनं विद्यात् सुदुस्तरम् ॥" सु नि.१३च. ।

**निरुद्धप्रक(का)शः** । पुं । मेढ्रगतक्षुद्ररोगविशेषे । लक्षण—'वातोपसृष्टमेवन्तु चर्म्म संश्रयते मणिम् । मणिश्चर्म्मोपनद्धस्तु मूत्रस्रोतो रुणद्धि च । निरुद्धप्रकशे तस्मिन्मन्दधारमवेदनम् ॥" सु नि. १३च । [च. ।

**निरुद्धमणिः** । पु । निरुद्धप्रकशे । वा.उ ११

**निरुपमः** । पु । गोधिरक्तजातिभेदे । सु कल्प. ८च ।

**निरूहः** । पु । वस्तिविशेषे । "कषायक्षीरतैलैर्यो निरूह स निगद्यते ।" शा को । तत्र परिमाण—क्वाथ ११ तो. पित्ते ८ तो वाते च ६ तो. पातव्यम् । खेहमधुनोश्च ३।४।६ दद्यात् यथाक्रमं कफपित्तवातेषु दातव्यानि । तथा कल्कस्य १ प. सैन्धवस्य १ तो. । एतच्चोपावमस्तान्ताव एकैकपदं दातव्यम् । इति निरूहवस्तिकल्पनाया थे था । वै.निघ ज्व,चि. । स चोत्क्लेशकदोषहरश्म-

नलैवुनवंहणपिच्छिलमधुतैलयापनयुक्तरथसिद्धोत्त रवस्तिभेदेन बहुधा। तेषां लक्षणानि तत्तत्पर्य्याये मृग्याणि। भा.। तस्य कालादि—‘अनुवास्य स्निग्धतनुं तृतीयेऽह्नि निरूहयेत्। मध्याह्ने किञ्चिदावृत्ते प्रयुक्ते बलिमङ्गले। अभ्यक्तस्वेदितोत्सृष्टमलं नातिबुभुक्षितम्। मधुस्नेहनकल्काख्यकषायावापतः क्रमात्। त्रीणि षट् द्वे दश त्रीणि पलान्यनिलरोगिषु। पित्ते चत्वारि चत्वारि द्वे द्विपञ्चचतुष्टयम्। षट् त्रीणि द्वे दश त्रीणि कफे चापि निरूहणम् ॥” च द.।

**निरोधः** । पु । नाशे। रोधे। मे.।

**निरोप्यशालिः** । पु । वापितशालौ। (रोना धान। गुणा —लघवः शीघ्रपाका गुणोत्तरा विदाहिन दोषघ्ना बल्या मूत्रवर्द्धनाश्च। रा नि व १६।

**निर्ऋतिः** । स्त्री । बालस्य तन्नामकमातृकाग्रहविशेषे। बालग्रहविशेष। यया दशमे दिने मासि वर्षे वा बालो गृह्यते। तेन तस्य ज्वरगात्रोद्वेजनादि भवति। च.द बालरो चि.।

**निर्गन्धपुष्पी** । स्त्री । शाल्मलिवृक्षे। श च.।

**निर्गुण्ठी (ण्डी)** । स्त्री। (Vitex negundo) स्वनामख्यातवृक्षे, सिन्धुवारवृक्षे। निशिन्दा गाछ। हि मेउडीसम्भालु, निर्गुण्डी। मं लिङ्गुर। तें नावलिचेट्टु, तेल्लव। वम्. काटरि। ता. नोच्चि। दा. मान्वालि। फा. सिस्वान्। गुर्ज्ज नगोड। कोङ्कणे निगुड सेन्दुवार इति च। भा.। सा चतुर्धा—श्वेता नीला आरण्या कर्त्तरी चेति। श्वेतपुष्पागुणा —‘निर्गुण्डी कटुका तिक्ता रूक्षा चोष्णा कषायका। स्मृतिप्रदा नेत्रहिता केश्या लघ्वग्निदीपनी। मेध्या वर्ण्या च सम्प्रोक्ता गुदवातक्षयापहा। सन्धिवातञ्च वातञ्च शोफश्वासमरुन्मी(?) तथा। कुष्ठकफ व्रणं प्लीहां गुल्मकण्डूरुज तथा। विष शूलञ्चारुचिञ्च ज्वर मेदो रुज तथा। गृध्रसीञ्च प्रतिश्यायकास श्वासञ्च नाशयेत्। पित्तनाशकरी प्रोक्ता पर्णमस्या लघु स्मृतम्। कृमिनाशकर प्रोक्त ..... ॥” नीलपुष्पागुणा —“नीला निर्गुण्डिका तिक्ता रूक्षा चोष्णा कटु स्मृता। आध्मवातमदरक्तार्श श्वासकफं हरेत्। वातनाशकरी प्रोक्ता . .... ॥” वै द्रव्यगुण। रा.नि व,४। कर्त्तरीगुणा.—निर्गुण्डी कर्त्तरीयुक्ता कट्वी तिक्ता कफापहा। वातक्षयञ्च शूलञ्च कण्डूकुष्ठञ्च नाशयेत् ॥ आरण्ययो श्वेतकृष्णयो. गुणाः —प्रोक्ता चारण्यनिर्गुण्डी पथ्या पित्तज्वर हरेत्। विषञ्च गृध्रसीवात नाशयेद्वर्णकारिणी। पर्णञ्चास्यास्तु कटुकञ्चाग्निदीप्तिकर लघु। कृमीन् कफञ्च वातञ्च नाशयेत् ... ॥ पुष्पञ्चास्या कटु चोष्ण तिक्तकृमिकफापहम्। प्लीहा गुल्मञ्च वातञ्च कुष्ठ शोथञ्च नाशयेत्। अरुचेर्नाशकम्प्रोक्तङ्कण्डूञ्चैव विनाशयेत् ॥” वै द्रव्यगुण.। See सिन्दुवार.। नीलनिर्गुण्ड्याम्। रा.नि,व.४। सु सू ३७अ.। नीलशेफालिकायाम्। श र.।

**निर्घातनम्** । क्ली। हतश्वेतञ्च विचाल्य शल्योद्धरणरूपे कर्म्मणि। सु सू.७अ। [श.र.।

**निर्जरः** । त्रि। जरारहिते। क्ली। सुधायाम्।

**निर्जरसर्षपः** । पु । देवसर्षपे। रा नि व.८।

**निर्जरा** । स्त्री। गुडूच्याम्। तालपर्ण्याम्। मूर्ग्याम्। मे। नले। मे.।

**निर्झरः** । पु’। गजे। शाती। श र.। तुषा-

**निर्यायनम्** । क्ली। गजापाङ्गे। श.र।

**निर्णेजकः** । पुं। रजके। अम.।

**निर्णेजनम्** । क्ली। क्षालने। धावने।

**निर्दरम्** । क्ली। तरुसारे, वृक्षनिर्यासे। मे.।

**निर्दहनः** । पुं। भल्लातकवृक्षे। क्ली। तद्बीजे। रा.नि.व.११।

**निर्दहनी** । स्त्री। मूर्व्वायाम्। मूर्ग्याम्। र. मा.। च.द.शूल.चि.। “तथाभया निर्दहनीच।”

**निर्दिग्धः** । त्रि। बलवति, मांसले। हे.च.।

**निर्दंशः** । पु। विषरक्षणे। यथा—“शारीरमागन्तु चेति।” सु.उ.६५अ.।

**निर्भर्त्सनम् (ना)** । क्ली, स्त्री। अलक्तके, लाक्षायाम्। रा नि व.६।

**निर्भिन्नचिर्भिटः** । पुं। फुटिकायां। श.चि.।

**निर्भुग्नः** । त्रि। विस्फारिते। मा.नि।

**निर्म्म(र्म्मो)ध्या** । स्त्री। नलिकानामगन्धद्रव्ये। रा नि व १२। [धर्के। म। त्रि। पवित्रे।

**निर्म्मलम्** । क्ली। कतकफले। निर्माल्ये। च-

**निर्म्मलोपलः** । पुं । स्फटिके । रा नि व १३।

**निर्म्माल्यम्** । क्ली । शिवनिर्माल्ये । च.द उ न्मा.चि. । देवोच्छिष्टद्रव्ये । पुराणम् । [व.१२ ।

**निर्म्माल्या** । स्त्री। स्पृक्कानामगन्धद्रव्ये । रा नि.

**निर्म्मुटः** । पु । वनस्पतिविशेषे । चिका । ख र्यैरे । थापर । द्दारा. ।

**निर्म्मोकः** । पु । सर्पकञ्चुके । সাপের খোলশ । भा.म.४भ गर्भ चि. ।

**निर्याणम्** । क्ली । गजापाङ्गदेशे । हे च ।

**निर्यातनम्** । क्ली । मारणे । हे.च. ।

**निर्यास. (क)** । पु । तरुक्षीरे । গাছের আঠা । वल्कले । छाल । र.मा.। कषाये, क्काथे । श मा. । लाक्षायाम् । वै.निघ. ।

**निर्यासी** (इन्) । पु । आखोटकवृक्षे । प.मु ।

**निर्य्यूपः** । पुं । निर्यासे । श मा. ।

**निर्य्यूहः** । पुं । शिम्बीधान्यकृतक्काथे । क्काथविशेष । र मा. । प.प्र १ख । 'शिम्बीधान्यकृत तोयं निर्य्यूह इति संज्ञित ।" इइ मु.। निर्यासे । चम ।

**निर्लोहम्** । क्ली । बोलनामगन्धद्रव्ये । थूनथावाणी । रा नि.व ६। व्याघ्रनखे । नखी । वै.निघ।

**निर्ल्व(र्व)यनी** । स्त्री। अहिनिर्मोके । हे च. वै.निघ. ।

**निर्व्वचनम्** । क्ली । निश्चितवचने । यथा— "आयुर्विद्यतेऽस्मिन्निति आयुर्वेद ।" सु.उ ६५अ।

**निर्व्वाणपथः** । त्रि । रोपणे । भाग्रने । वा चि. ६अ. ।

**निर्व्विषः** । पुं । जलसर्पे । वै निघ ।

**निर्व्विषा (षी)** । स्त्री । (Curcuma zedoaria.) केदारदेशोत्पन्नौषधविशेषे । निर्विषा घास । निर्विषा इति महाराष्ट्रे प्रसिद्धा । गुणा.— "कटु शीता कफवातरक्तघ्नी बहुविषघ्नी व्रणरोपणी च । रा नि व ६ । [म् । रा नि व.११ ।

**निर्व्वीजा** । स्त्री । काकस्पीद्राक्षायां । किशमि

**निर्वृत्ति.** । स्त्री । उपनी । निवाटि । "नि- निरामयस्यासौ ।" का पत्रनि. ।

**निर्वेधिमः** । पुं । तन्नामककर्णबन्धनाकृतौ । "स च पीठीपमपालि उभयतः चीणपुत्रिकाश्रित ।" सु.सू १६अ. ।

**निर्वेष्टनम्** । क्ली । नाडीचीरे । द्दारा. ।

**निर्व्यथनम्** । क्ली । छिद्रे । चम. ।

**निर्हारः** । पु । मलमूत्रत्यागभवने । पाङ्किक सत्वम् । निर्हरणे, शल्याद्युत्पाटने । भ. ।

**निर्हारगृह(स्थान)म्** । क्ली । निर्हारभवने । পায়খানা । शल्योत्पाटनगृहे । स्मृति ।

**निर्हारी** (इन्) । त्रि । दूरगामिगन्धे । चम. ।

**निलिम्पा** । स्त्री । दोहनभाण्डे । स्त्रीगवि । त्रिका । [च. ।

**निवन्धः** । पु । चक्षुष कक्रुदसभागे । अ द ९

**निवातम्** । क्ली। वाताभावे। गुणा —"निवाते त्वायुषे सेव्यमारोग्याय च सर्व्वदा ।" सु चि २४अ.

**निवृत्तसंग्रम्** । क्ली । गुह्यरोगभेदे । निदानादि यथा —"विमर्दनादिदुष्टेन वायुना चर्म्म मेढ्रज । निवर्त्तते सरुग्दाह क्वचित्पाकञ्च गच्छति । पिण्डितं ग्रथित चर्म्म तत्प्रलम्बमधोमणे । निवृत्तसंज्ञ सकफकण्डुकाठिन्यवत् तत् ।" वा उ ३३अ ।

**निशग्न्या** । स्त्री । कृष्णदन्तोरुपे । रा.नि.व.६।

**निशा** । स्त्री । हरिद्रायाम् । प मु. । रा.नि व. ६ । आम्रहरिद्रायाम् । भा सपद्मीतालीशादि चूर्णे ।

**निशाकरः** । पु । कुक्कुटे । श र. ।

**निशाख्या** । स्त्री । हरिद्रायाम् । रा.नि व.६ ।

**निशाचरः** । पु । चोरकनामगन्धद्रव्ये । अयं ग्रन्थिपर्णस्यैव भेदः । भटेउर इति नेपालदेशे प्रसिद्ध । रा.नि व.१२ । पेचके । सृगाले । सर्पे । मि । चक्रवाके । श र । [जटा ।

**निशाचरी** । स्त्री । केशिनीनामगन्धवृक्षे ।

**निशाटः** । पुं । पेचके । हे च. ।

**निशाटकः** । पु । गुग्गुलौ । रा नि.व.१२ ।

**निशाटनः** । पु । पेचके । द्दारा ।

**निशापशिला (शिका) (पी)** । स्त्री । चनिशिवनुयादिमुनिशापार्थं माषवर्णदृषत्प्रभित-

शिलायाम्। शुवशिलन शिप। सुसू ८च ।

**निशादिः** । पुं । हरिद्रादिगणे । वा उ २अ.।

**निशाद्वयम्** । क्ली । हरिद्रा दारुहरिद्रा च। वा सू १५।४२सुस्तादिव.। 'द्विनिशा द्वितिक्ता ।"

**निशान्धः** । त्रि । रात्र्यन्धे। रातकाणा। स्त्री। जतुकालतायाम् । रा.नि व ३।

**निशापतिः** । पु । कर्पूरे । अम ।

**निशापुष्पम्** । क्ली। उत्पले। शुन्दि फूल। रा नि व १०। [श च ।

**निशाभङ्गा** । स्त्री। दुग्धपुच्छाम्। दुधपेया।

**निशामूषा** । स्त्री। अन्धमूषायां। रस र हि का वि ।

**निशामृगः** । पु । शृगाले । श र.।

**निशालोहम्** । क्ली। पाण्डुरोगे लौहम्। "लौहचूर्ण निशायुग्म त्रिफलारोहिणीयुतं। प्रलिह्यान्मधुसर्पिर्भ्यां कामलापाण्डुशान्तये ॥' र सा सं।

**निशावन.** । पु । शणक्षुपे। रा नि व ४।

**निशावेदी** (इन्) । पु । कुक्कुटे। हे च.।

**निशाहास'** । पु'। शुक्लपद्मे । त्रिका.।

**निशाह्वा** । स्त्री। हरिद्रायाम् । अम ।

**निशिक्रन्द.** । पु। बालाना रात्रिरोदनरोगे। "कुष्कुन्दरुमली मासी हरिद्रा बिल्वपत्रक । सनि र्मुण्डीदल धूमात् निशिक्रन्दोऽस्ति नो शिशो ॥" रस र बाल चि.।

**निशितम्** । क्ली। तीक्ष्णलौहे। रा.नि.व.१३।

**निशिपुष्पा (ष्पिका) (ष्पी)** । स्त्री। शेफालिकावृक्षे। त्रिका । श र ।

**निशुम्भनम्** । क्ली। मारणे। हला.।

**निशैतः** । पु । बकपक्षिणि । त्रिका ।

**निशोत्रा** । स्त्री। श्वेतत्रिवृति । त्रिवृति। ८ड उँड़ी। वै.निघ.२भ च चि मण्डूरादिगुटी।

**निश्चला** । स्त्री। शालपर्ण्याम् । रा नि.व ४।

**निश्चलाङ्ग.** । पु । बके। रा नि.व १९।

**निशारकः** । पु । पुरीषक्षयापरपर्याये प्रवाहिकाभेदे मै। नि शो प्रवाहिका चि,श्रीकण्ठ। "प्रवाहिकेति सा ख्याता कैश्चिन्निशारकस्तु स ।" पराशर, उल्लयश्च। [त्रिका.।

**निस्तुकणम्** । क्ली। दन्तशाणे। मञ्जन।

**निश्वासः** । पु । श्वासनिर्गमे। बहिर्मुखश्वासे। हे च.।

**निषङ्गथिः** । पु। तृणविशेषे। स्कन्धे। उणा.।

**निषण्णकम्** । क्ली। आसने। सुनिषण्णकशाके। श र.।

**निषादग्रहः** । पुं। ग्रहविशेषे। तदाविष्टस्य लक्षण यथा—"गृहीत्वा क ष्ठलोष्ट्रादि भ्रमन्त चीरवासस । नग्न धावन्तमुन्नत्तदृष्टि तृणविभूषण। श्मशानशून्यायतन रथ्यैकद्रुमसेवित। तिलान्नमद्यमासेषु सतत सक्तलोचन। निषादाधिष्ठित विद्यात् वदन्त परुषाणि च ॥" वा.उ ४अ.।

**निषादी** (इन्) । पु । हस्तिपके। अम.।

**निषेक** । पु । सेके। नि ष्यन्दे। गर्भाधानसंस्कारे। भ.।

**निष्क.** । पु, क्ली। स्वर्णे। माषचतुष्टये। प प्र। कर्षपरिमाणे। "चतुर्भिर्माषकै शाण स निष्कोऽष्टकमेव च।" गोविन्दी परिभाषा। स्वर्णदले। स्वर्णकर्षे। साष्टशततोलके। हे च.।

**निष्कण्ठ.** । पु । वरुणवृक्षे। श च.।

**निष्कल:** । त्रि। वीर्यहीने। मे.।

**निष्कला (ली)** । स्त्री। वृद्धायाम्। रा.नि. व १८। निवृत्तरजस्कायाम्। श र.।

**निष्कुटः** । पु । गृहसन्निहितनिकुञ्जे। गृह गृहे। अम.। [रा नि व ६।

**निष्कुटिः** । स्त्री। एलायाम्। सूक्ष्मैलायाम्।

**निष्कुटी** । स्त्री। स्थूलैलायाम्। भ.टी भ.।

**निष्कुम्भः** । पु । दन्तीवृक्षे। भ टी.रा.।

**निष्कुल:** । त्रि। त्वकशिर स्थिरहिते सि यो. यत्र चि यवमध्याशे। पु । तरुकोटरे। अम ।

**निष्क्वाथ'** । पु । मांसादिक्वाथे। हे च ।

**निष्ठा** । स्त्री। चिकित्सायाम्। रा नि व २०।

**निष्ठानम्** । क्ली। व्यञ्जने। अम ।

**निष्ठीवनम्** । क्ली। मुखेन श्लेष्मादीनां वमने।

थूक् फेना। च द.सान्निपातज्व.चि.। "नस्य निष्ठीवनन्तथा।" रा.नि व.६।

**निष्ठीविका** । स्त्री। निष्ठीवने। च शा.२अ।

**निष्ठिवः (नम्)** । पुं,क्ली। निष्ठीवने। अम.।

**निष्पक्वम्** । त्रि। क्वथिते। अम। अतिपक्व व्यञ्जनादौ। भ.।

**निष्पत्रका: (त्रिका)** । पुं, स्त्री। करवीरवृक्षे। कदवी गाछ। गुणाः—आध्मानकर कटू आकषायः कफकर. श्वासवायूरोधकशूलखर्जूव्रण घ्न। रा.नि.व ८। [च.।

**निष्पत्राकृतिः** । स्त्री। अतिपीडायाम्। हे.

**निष्पावः (कः)** । पुं। (Phaseolus radiatus.) A sort of pulse. शिम्बाम्। शीम। प.सु.। श्वेतशिम्बा। शादा शिम्। र मा। च द. ग्रन्थि.चि.। राजशिम्बीवीजे। 'निष्पावस्तु राजशिम्बीवीज भेटरास, भेटवास इति लोके।" भा.मसूरी.नि.। हि भेटरास। तै श्रानपचेट्, राजशिम्बि। हैमा। गुणा —वातादिकार गुरु सर विदाही हृच्छि. शुक्रकफशोफविषापह्न। वा.सू.। "निष्पावकफल मष्ट बहुवर्चस्कर गुरु।" राज ३प.। "निष्पावो मधुरो रुचो विपाकेऽम्लो गुरु सर। कषायः स्तन्यपित्तासृक्मूत्रवातविबन्ध कृत्। विदाह्युष्णो विषश्लेष्मशोयघ्नश्चक्षुकनाशन।" भा.पू १भ.धा व.। गुञ्जादये। राजमाषे। हि लोविया। वर्वटी। यूषगुणा.—"यूषो निष्पावज स्तन्य भ्रमसुत्पादयेत् स्तने। श्लेष्माण हृदिरोगच नाशयेत्सुपासित.॥" भटस्य यूषगुणा —"निष्पावयूप पित्तासमूत्रस्तन्यानिलप्रद। विदाह्युष्णो गुरु शोफकफघ्नश्चक्षुक्रतल श्रुत॥" द्रव्य गु.। तुषे। सूर्पवायौ। मे.।

**निष्पावी** । स्त्री। (Vigna Catiang. Syn. Dolichos sinensis.) शिम्बीधान्यविशेषे। राजमाषे। बोड़ा इति भाषा। वर्वटी। हि लोबिया। म वडुवर्ण। क तट्टवरे। ता हिषा हरिच्छुभमेदेन। गुणा.—हे एव कषाये मधुरे कण्ठशुद्धिकरे दीपने रुच्ये द्वितीया तु ईषच्छ्रेष्ठा। रा.नि व.७।

**निष्प्रत्यनीकम्** । त्रि। उपघातराहित्ये। भा म ४अ.चुद्दरी.बकीक चि.। 'निष्प्रत्यनीक विरजं विशेषात्।" [अ र.।

**निष्फली** । स्त्री। निष्फलायाम्। वन्ध्याकर्कोट्याम्।

**निसारा** । स्त्री। कदलीवृक्षे। रा.नि.व ११।

**निसिन्धु.** । पु। निर्गुण्डीवृक्षे।

**निसुन्धार:** । पु। निर्गुण्डीवृक्षे। भैष ज्व चि. पानीयवर्ष्या। [शाकवृक्षे। वै.निघ।

**निसृता** स्त्री। रक्तनिशृतायाम्। प.सु। स्त्री

**निसृतान्लक:** । पु। कोष्ठगतरोगभेदे, छर्दिरोगे। वै निघ.।

**निस्तनी** । स्त्री। वटके। वडि। श.च.।

**निस्तर्हणम्** । क्ली। मारणे। अम।

**निस्तल: (ली)** । त्रि। वर्त्तुले। अम.। पुं। तलप्रदेशे। हे च.। [व १६।

**निस्तुषः** । पु। गोधूमे। प सु.। गम्। रा.नि.

**निस्तुषरत्नम्** । क्ली। स्फटिके। रा.नि व.१३।

**निस्तुषक्षीर:** । पु। गोधूमे। रा नि.व.१६।

**निस्तुषितः** । त्रि। त्वग्रहिते। मे.।

**निस्तुषोपलम्** । क्ली। स्फटिके। प सु.।

**निस्तोदः** । पु। अतिव्यथायाम्। [व.८।

**निस्त्रिंशपत्रिका** । स्त्री। स्नुहीवृक्षे। रा नि.

**निस्त्रुटी** । स्त्री। एलायाम्। वै निघ.।

**निस्नैणपुष्पिकः** । पुं। राजधुस्तूरके। रा. नि व ११। [का.।

**निस्नेह. (हा)** । पुं, स्त्री। अतसीवृक्षे। त्रि

**निस्नेहफला** । स्त्री। श्वेतकण्टकार्याम्। रा. नि व.४।

**निस्यन्दः** । पु। स्पन्दने। विका.।

**निस्पृहा** । स्त्री। अमूलवनलतौ। वै निघ.। अग्निशिखावृक्षे। श.च.। [क्षातिसारे।

**निस्रावक** । पु। प्रवाहिकारोगे। च.द र.

**निहाका** । स्त्री। गोधिकायां। अम.।

**निहार** । पु। नीहारे। श.र.। [कोष।

**निशा** । स्त्री। हरिद्रायां। निशि। उपादि-

**नीकः** । पु । वृक्षभेदे । उणा. । [रा नि.व १२ ।

**नीच.** । पु । चोरकनामगन्धद्रव्ये । ৫ঁ ঠনা ।

**नीचकः** । त्रि । ह्रस्वे । श.र. । स्त्री (का) । उत्तमायां गवि । च टी भ ।

**नीचकदम्बः** । पु । गोरक्षमुण्ड्याम्, महाश्रावणिकायाम् । वै निघ ।

**नीचकुलिशम्** । क्ली । वैक्रान्तरत्ने । प सु. ।

**नीचगम्** । क्ली । जले । वै.निघ. ।

**नीचभोज्यः** । पुं । पलाण्डौ । श.च. ।

**नीचवज्रम्** । क्ली । वैक्रान्तमणौ । रा.नि.व १३ ।

**नीड़ः** । पुं, क्ली । पक्षिकुलाये । अम. ।

**नीड़जः**
**नीड़ोद्भवः** } पुं । पक्षिसामान्ये । हे.च. । अम. ।

**नीतम्** । क्ली । धान्ये । शस्ये । वै.निघ. ।

**नीथम्** । क्ली । जले । उणा. ।

**नीपः** । पु । कदम्बवृक्षे, धाराकदम्बे । ৫কলি কদম । मं राजकदम्ब । रा नि.व.९ । गुण.—गरदोषहर । सु.सू.४६अ. । अशोकवृक्षे । नीलाशोके । बन्धूकवृक्षे । বাঙ্গুনি গাছ । मे । भूकदम्बे । কুর্দিমা । वै निघ. ।

**नीपराजः** । पुं । राजकदम्बवृक्षे । वै.निघ ।

**नीरम्** । क्ली । जले । रा नि.व.१४ । बालके । বালা । वै निघ १भ.ज्व.चि.दाहचि.चन्दनादिकषाये ।

**नीरजः** । पु । काशभेदे । ছোট কেশে । रा. नि व.८ । जलनकुले, जलमार्जारे । উদ্বিড়াল । श र. । क्ली । उत्पले । पद्मे । नीलोत्पले । कुष्ठौषधौ । मे. । "नीरजगारिवे च ।" सु चि.२५अ. । मौक्तिके । रा.नि.व.१३ ।

**नीरजाः** । स्त्री । अजातरजस्कायां स्त्रियि ।

**नीरदः** । पुं । मुस्तायां । रा नि व.६ । वै.निघ १भ.दाह.चि.चन्दनादिकषाय । त्रि । अदन्ते ।

**नीरप्रियः** । पु । जम्बुवेतसे । वै.निघ. ।

**नीरहषः** । पु । जम्बूमधूकवृक्षे । वै निघ ।

**नीरसः** । पु । दाडिम्बवृक्षे । हारा. । त्रि । रसहीने ।

**नीरसा** । स्त्री । नि श्रेणिकावृक्षे । रा.नि व.८ ।

**नीराखुः** । पुं । जलमार्जारे । উদ্বিড়াল । हारा. । [ওড়া গাছ । श.च. ।

**नीरिन्दुः** । पुं । अश्वशाखोटवृक्षे । আশ্শ্যাওড়া গাছ । श.च. ।

**नीरुक्**
**नीरुजम्** } त्रि । रोगमुक्ते । रा नि व २० । क्ली । कुष्ठभेदे । কুড়বিশেষ । जटा. ।

**नीलन्** । क्ली । (Indigofera Tinctoria.) नील्याम् । नीलपद्मे । मे । सौवर्चललवणे । तालीशपत्रे । विषे । रा.नि व.६ । तुत्थके । नीलोत्पले । रा.नि.व १३ । कृष्णाञ्जने । वै.निघ. ।

**नीलः** । पुं । नीलासनवृक्षे । नीलपत्र আসন গাছ । र मा. । नीलवृक्षे । रा.नि.व ६ । वटवृक्षे । रा.नि.व ११ । नीलकान्तमणौ । रा नि. व १३ । वै.निघ.२भ.चयचि.नवरत्नराजमृगाङ्के । नीलवर्णे । सारिकापक्षिणि । नीलवानरे । मे । कृष्णकुरण्टके । कृष्णनिर्गुण्ड्याम् । वै.निघ. ।

**नीलकम्** । क्ली । कृष्णलवणे । कासे । जले । गन्धशोले । वै.निघ. । कान्तलौहे । रा.नि.व १३ ।

**नीलकः** । पुं । नीलभृङ्गराजे । रा.नि व ४ । नीलबीजे, नीलबीजासनवृक्षे । रा.नि.व.९ । कृष्णसारमृगे । भल्लातकवृक्षे । वै.निघ. ।

**नीलकणा** । स्त्री । कृष्णजीरके । रा नि व ६ । जीरके । वै निघ. । [मयूरे । अम ।

**नीलकण्टकः** । पु । चातकपक्षिणि । वै.निघ. ।

**नीलकण्ठम्** । क्ली । मूलके । মূলা । प सु. ।

**नीलकण्ठः** । पु । पीतशालवृक्षे । পিয়াশাল् । र मा. । मयूरे । अम. । शिग्रुवृक्षे । चाषपक्षिणि । खञ्जरीटे । दात्यूहे । कपोते । ग्राम्यचटके । हे. च. । सारसपक्षिणि । वै.निघ. । नीलैकदलपुष्पवृक्षे । लक्षण यथा—"लक्षणाया अभावे तु नीलकण्ठशिफा मता ।" सु.टी.मधुमती । [११ ।

**नीलकण्ठाक्षम्** । क्ली । रुद्राक्षे । रा नि.ब्र.

**नीलकन्दः** । पु । महिषीकन्दे । কাল আলু বিশেষ । रा नि व ७ ।

**नीलकपित्थकः** । पुं । महाराजचूते । नील-वर्णकपित्थभेदे । रा.नि.व.११ । See टङ्क ।

**नीलकमलम्** । क्ली । नीलपद्मे । नील पद्म । गुणाः—शीतलं स्वादु पिच्छलं सुगन्धि रुच्यं रसायने श्रेष्ठं देहदार्ढ्यकरं केश्यञ्च । रा.नि.व.१० ।

**नीलकलम्बी** । स्त्री । (Ipomoea hederacea. Syn. I. Coerulea.) स्वनामख्यात लतायाम् । नील कल्मी । हि कालदाना । च स्या बीजचूर्णं विरेचने हितम् । [नि.व.६ ।

**नीलकाचोद्भवम्** । क्ली । काचलवणे । रा.

**नीलकुरण्टकः** । पुं । (Barlaria coerulea.) नीलझिण्टीक्षुपे, नीलाम्लाने । नील झाँटी । रा.नि.व.१० । भैष.कुष्ठ चि. ।

**नीलकुसुमा** । स्त्री । नीलपुष्पझिण्टीक्षुपे । नील झाँटी । रा.नि.व.१० । See नीलाम्लान ।

**नीलकेशी** । स्त्री । नीलीक्षुपे । रा.नि.व.४ ।

**नीलक्रान्ता** । स्त्री । विष्णुक्रान्तायाम् । नील अपराजिता । । रा.नि.व.३ ।

**नीलक्रौञ्चः** । पुं । नीलवर्णक्रौञ्चपक्षिणि । नील बक । वै.निघ ।

**नीलगिरिकर्णिका** । स्त्री । नीलापराजितायाम् । रा.नि.व.३ ।

**नीलगिरिजा** । स्त्री ।(Clitoria Ternatea.) विष्णुक्रान्तायां । अपराजिता । हि कवथेठी । बम्. गोकर्णी । आस्फोतायाम् । हापरमाली । कोयालरम् । [नाम । भ रिको. ।

**नीलङ्गुः** । पुं । कृमिविशेषे । कीटभागे । म

**नीलचर्म** । क्ली । परूषकफले । रा.नि.व.११।

**नीलच्छदः** । पुं । दैत्यखर्जूरवृक्षे । वै.निघ. ।

**नीलच्छविः** । पुं । कुकुभपक्षिणि । वै.निघ. ।

**नीलजम्** । क्ली । नीललोहे । रा.नि.व.१३ ।

**नीलझिण्टी** । स्त्री । नीलपुष्पझिण्टीक्षुपे । नील झाँटी । रा.नि.व.१० । See नीलाम्लान ।

**नीलतरुः** । पुं । नारिकेलवृक्षे । रा.नि.व.११।

**नीलतालः** । पुं । तमालवृक्षे । तमाल गाछ । वै.निघ. । हिन्तालवृक्षे । रा.नि.व.६ ।

**नीलतुत्थम्** । क्ली । तुत्थभेदे । वै.निघ.२भ. चक्ष.चि.ग्रहेश्वररसः ।

**नीलदूर्वा** । स्त्री । हरितदूर्वायां । नील दूर्वा घास । मं नीलीहरियाली । कं हसुगरकी । तें हरितदूर्वालु । गुणाः —मधुरा तिक्ता शीतला रोचनी रक्तपित्तातिसारघ्नी कफवातज्वरघ्नी च । रा.नि.व.८ । "कफपित्तास्रवीसर्पतृष्णादाहत्वगामयान् ।" भा. । [व.६ ।

**नीलद्रुमः** । पुं । नीलबीजासनवृक्षे । रा.नि.

**नीलधातुः** । पु । खटिकायां । नील खड़ि माटी । र.मा । [रा.नि.व.६ ।

**नीलध्वजः** । पुं । तमालवृक्षे । तमाल गाछ ।

**नीलनिर्गुण्डी** । स्त्री । (Gendarussa vulgaris. Syn. Justicia gendarussa ) नीलपुष्पसिन्धुवारवृक्षे । नील निसिन्दा । बगस माखन । हिं नरबसिं । बम् कालखड्गलगा । दा कालिसुम्बालि । गुणाः —कटुका तिक्ता रूक्षा कासघ्नी श्वयथुवातप्रदरपामाध्मानहरी । रा.नि.व.४।

**नीलनिर्यासकः** । पु । नीलबीजासनवृक्षे । रा.नि.व.६ । See नीलबीज । [१० ।

**नीलपङ्कजम्** । क्ली । नीलकमले । रा.नि.व.

**नीलपत्रः** । पुं । गुन्द्रवृक्षे । रा.नि.व.८ । नीलबीजासनवृक्षे । आम्रातकवृक्षे । रा.नि.व.६ । दाडिमवृक्षे । रा.नि.व.११ । क्ली । नीलपद्मे । अ. च । [वै.निघ. ।

**नीलपत्रा** । स्त्री । भूकदम्बे । दन अजह ।

**नीलपत्रिका** । स्त्री । नीलाम्लानवृक्षे । नील पद्म म्लान शाक । र.मा. । क्षुद्रवार्ताकीमूलायाम् । वै.निघ. । [व ।

**नीलपत्री** । स्त्री । कृष्णनीलीक्षुपे । रा.नि.व.

**नीलपद्मम्** । क्ली । नीलकमले । नील पद्म । रा.नि.व.१० । [रा.नि.व.११ ।

**नीलपर्णम्** । क्ली । परूषकफले । फलसा ।

**नीलपर्णी** । स्त्री । विदारीभेदे । र.मा । क्षीरकाकोल्यां । वै.निघ. ।

**नीलपिच्छः** । पुं । श्येनपक्षिणि । श्येन पाखी । रा.नि.व.१९ ।

**नीलपिष्टोड्डी** । स्त्री । वृक्षविशेषे । पीटीं-डी इति लोके । वै.निघ । [न्य.८म. ।

**नीलपीतः** । पुं । महाविषवृश्चिकभेदे । सु.क

**नीलपुनर्नवा** । स्त्री । नीलदलपुनर्नवायाम् । हि नीलगदहपडीया । मं कालीघेंट । कं करियवेल्लडकिलु, करियगवजिलि । गुणा.–तिक्ता कटूष्णा रसायनी हृद्रोगपाण्डुश्वयथुश्वासवातघ्नी । रा.नि व.५ ।

**नीलपुष्पः** । पुं । नीलभृङ्गराजे । नीलभिण्टा । रा.नि व.४ । विलन्तरवृक्षे । कृष्णनिर्गुण्ड्याम् । वै. निघ. । स्त्री । ग्रन्थिपर्ण्यां । भा. ।

**नीलपुष्पकः** । पुं । नीलनिर्गुण्डीवृक्षे । वैनिघ.।

**नीलपुष्पा** । स्त्री । अपराजितायाम् । प.मु. । विष्णुक्रान्तायाम्, नीलापराजितायाम् । रा.नि.व ५। नीलभिण्टीक्षुपे । नील झाटी । रा.नि.व.१०। See नीलाम्लान. । ग्रन्थिपर्ण्याम्। कृष्णनिर्गुण्ड्या । नील्याम् । वै.निघ. ।

**नीलपुष्पिका (ष्पी)** । स्त्री । नीलपुष्पापराजितायाम् । नील अपराजिता । रा.नि व.३ । नीलवृक्षायाम्। नील বোণ। । प.मु.। नील्याम् । रा.नि व ४ । अतसीक्षुपे । मशिनाव गाछ । रा. नि.व.१६ । [निघ. ।

**नीलपृष्ठः** । पुं । मत्स्यविशेषे । कुई माछ । वै.

**नीलपृष्ठा** । स्त्री । नीलीवृक्षे । भा.म.१भ. ।

**नीलपोरः** । पुं । इक्षुभेदे । गुणाः—वातकरः कफपित्तघ्न कषाय. विदाही च । भा.सू.मू ४५भ.।

**नीलफला** । स्त्री । जम्बूवृक्षे । জাম গাছ । रा नि.व.११ । वार्त्ताकुवृक्षे । वै.निघ. ।

**नीलभण्टः** । पुं । पियालवृक्षे । পিয়াশাল । प मु. । See भण्डट. । [वै.निघ. ।

**नीलभूमिमलघातः** । पुं । खर्परधातौ ।

**नीलभृङ्गराजः** । पुं। नीलपुष्पभृङ्गराजे। नील কেশরিয়া । हिं भमेरिया । गुणा.—तिक्तोष्णः चक्षुष्यः केशरञ्जन. कफामयोश्वित्रघ्न रसायनश्च । रा.नि.व.४ । [भ ।

**नीलमकुष्ठः** । पुं । नीलवर्णमुद्गे । नकुल.११

**नीलमञ्जरी** । स्त्री । नीलनिर्गुण्ड्याम् । वै. निघ. ।

**नीलमणिः** । पुं । स्वनामख्यातमणौ । नील-वर्ण मणि । गुणाः—तिक्तोष्णः कफपित्तवातघ्नः धारणात् शुभदश्च । रा.नि.व.१३ ।

**नीलमण्डलम्** । क्ली । परुषकफले । पुं । तद्वृक्षे । फलसा । रा.नि.व.११ ।

**नीलमयूरः** । पुं । मयूरभेदे । गुणाः—"मेधाढ्यं श्रोतसाच करोत्युत्पाटनं शिखी । स वात-लोऽनिलघ्नश्च, किञ्चिद्रसायनः ।" अत्रि २१भ.।

**नीलमल्लिका** । स्त्री । कपित्थवृक्षे । रा.नि. व.११ । [वै.निघ. ।

**नीलमक्षिका** । स्त्री । पृथुकृष्णमक्षिकायाम् ।

**नीलमाषः** । पुं । राजमाषे । बर्बटी । प.मु.।

**नीलमीलिकः** । पुं । खद्योते । श.मा. ।

**नीलमृत्तिका** । स्त्री । कृष्णमृत्तिकायाम्। पुष्पकासीसे । रा.नि.व.१३ ।

**नीलमेहः** । पुं । पित्तजप्रमेहरोगे । अत्र रोगी सफेन स्वच्छं नीलञ्च मेहति । सु.नि.६भ. ।

**नीलयष्टिका** । स्त्री । इक्षौ। কাজলা ইক্ষু । कृष्णकुटजे वै.निघ. । [व १३ ।

**नीलरत्न(क)म्** । क्ली । नीलमणौ । रा नि.

**नीलराजा** । स्त्री । नीलपुष्पराजायां । र.मा।

**नीलरूपकः** । पुं । मरुवृक्षे । वै.निघ. ।

**नीललोहम्** । क्ली । वर्त्तलोहे, कृष्णलोहे । रा.नि व.१३ । [ज्ञान । श.च. ।

**नीललोहिता** । स्त्री । भूजम्बूवृक्षे । মেটে।

**नीलवटी** । स्त्री । नीलवट्यां । नीलवड़ि । चि.क्र.क केशरञ्जने ।

**नीलवर्णम्** । क्ली । रसाञ्जने । र.मा. । नील-मूलके । परुषकफले । वै.निघ. । [नि.व.५ ।

**नीलवर्षाभूः** । स्त्री । नीलपुनर्नवायाम् । रा.

**नीलवल्ली** । स्त्री । वन्दाके । মান্দড়া । र.मा।

**नीलवीजः** । पुं । स्वनामख्याताशनवृक्षे । নীল দোষ आसन वृक्ष । मं सोद्रिवीया । कं

केपिवहीने। गुणा —बीजकणो कटु शीतो कषा यो कुष्ठघ्नौ मारको कण्डूदद्रुघ्नौ। तयोरसित थे ष । रा नि व ८ । [पी । पमु ।

**नीलवुह्ना** । स्त्री । छगलान्त्याम् । नील वो ।

**नीलवृन्तकम्** । क्ली । तूलकाष्ठ । तूले । रा नि व ८ ।

**नीलवृपा** । स्त्री । वार्त्ताकी । रा नि व ७ ।

**नीलवृक्ष** । पु । काडयमालतयो स्वनामप्रसि द्धे वृक्षे । गुणा —"नीलवृक्षस्तु कटुक कषायोष्णो लघुस्तथा । वातामयप्रशमनो नानाश्वयुनाशन रा नि व ६ ।

**नीलशिग्रु** । पु शोभाञ्जनवृक्षे । रा नि व ७

**नीलशिम्बिका** । स्त्री शिम्बीभेदे वै निघ ।

**नीलशुक** । पु । महाविषवृश्चिकजातिभेदे । सु कल्प ८ष । [निघ

**नीलशोधनी** । स्त्री । नील्याम् । नील । वै

**नीलषष्टिक** । पु । षष्टिकशालिविशेषे । नी ल वर्ण ८ष टि धान । गुणै गौरषष्टिकात्किञ्चिद्र न । रा नि व १६ ।

**नीलसस्यम्** । क्ली । बाजरा इति ख्याते शस्य । बाजरा । वै निघ ।

**नीलसहाचर** । पु । नीलपुष्पझिण्ट्याम् । हि नीलपुष्पकटसरैया भा म ४भ सुखर घि. "तुलाघृत नीलसहाचरन्तु । भैष । [व ८ ।

**नीलसार** । पु । नीलवीजासनवृक्षे रा नि

**नीलसिन्दुक (का) (वार)** । पु स्त्री नीलनिगण्ड्याम् । नील ि शन्द । रा नि व ४ ।

**नीलस्पन्दा** । स्त्री । नीलापराजितायाम् । रा नि व ७ ।

**नीला** । स्त्री । नीलीक्षुपे । नकुल १५ष । नील पुनर्नवायाम् । लाक्षायाम् रा नि व ४ ५।६ मक्षिकायाम् । कृष्णजीरके । वै निघ तन्नामकीट जन्यगतमर्मीहवे । तत्स्थान कण्ठनाडीमुभयत । सु शा ६ष । नीलमक्षिकायाम् । षम ।

**नीलाख्य** । पु । नीलमणौ । वै निघ ।

**नीलाङ्ग** । पु । नीलक्रौञ्चपक्षिणि । पारावते । वै निघ । सारसपक्षिणि । चाषपक्षिणि । रा नि व १८ । [क्रिमौ । षम ।

**नीलाङ्गु** । पु स्त्री । शीमचिकायाम् । हि ।

**नीलाञ्जनम्** । क्ली । रसाञ्जने । तुत्थके । रा नि व १३ । सौवीराञ्जने । नर्क्ष्द ७ । । रमा । गुणा —उष्ण रसायन तिक्त कटु शसमसुखनेत्रदो मवणदाहघ्न भेदकञ्च । रा नि व १३ । तच्छोधनं —"नीलाञ्जन चूर्णयित्वा जम्बीरद्रवभावितं । दिनैकमातपे शुद्धं भवेत्कार्य्येषु योजयेत् ॥ रसा स । [कुल । वै निघ ।

**नीलाञ्जनच्छदा** । स्त्री । जम्बूवृक्ष । शाम

**नीलाञ्जना** । स्त्री । बीजवृक्ष । वै निघ ।

**नीलाञ्जनी** । स्त्री । कालाञ्जन्याम् । नील कापास । रा नि व ४ ।

**नीलाण्डक** । पु । रोहितमत्स्य । वै निघ ।

**नीलाद्रिकर्णी** । स्त्री । नीलापराजितायाम् । रा नि व २ ।

**नीलापराजिता** । स्त्री । नीलपुष्पापराजि तायाम् नील अपराजिता । म नीलगूपली । क नीलगिरिकर्णिकी । गुणा —शीतला तिक्ता ज्वरदाहरक्तातिसारघ्नी पित्तछर्दिकोन्मादमदभ्रम श्वासातिकासघ्नी चामाक्षघ्नो च रा नि व २ ।

**नीलाब्जम्** । क्ली । नीलकमले रा नि व १० ।

**नीलाभ्रम्** । क्ली । कृष्णाभ्र । नील अभ्र । रा नि व १३ । See अभ्रकम् । [व ६ ।

**नीलाम्बरम्** । क्ली । तालीशपत्र । रा नि

**नीलाम्बुजम् (न्म)** । क्ली । नीलपद्म । प. मु ।

**नीलाम्लान** । पु । नीलपुष्पझिण्टीक्षुपे । नील आटो म कालाकोरांटा । क करियगोरंटे । गुणा —कटु तिक्त कफवातशूलघ्न कण्डूकुष्ठघ्न व्रणघ्न शोकत्वग्दोषघ्नश्च । रा नि व १० ।

**नीलाम्ली** । स्त्री । स्वनामख्यातफलवृक्षे । हिं नलबुनगुड कालीपिठोलि । म भगगन्धि । क नेलथगिडु । सा श्वेतनीलभेदेन द्विधा । गुणा —मधुरा रुच्या कफवातहरी च । रा नि व ४ ।

**नीलालुः** । पु । नीलवर्णालुकविशेषे । नील आलु । म नीलालु । क करियगेसु । गुणा — मधुर शीत पित्तदाहश्रमघ्न । रा नि व ७ ।

**नीलाशी** । स्त्री । नीलनिर्गुण्ड्याम् । वै निघ ।

**नीलाम्रजम्** । क्ली । तुत्थके । वै निघ. ।

**नीलाश्मा** । पु । नीलमणौ । रा.नि.व १३ ।

**नीलासन.** । पु । नीलबीजासनभेदे । पिया शालविशेष । गुणा — कटु शीत कषाय कुष्ठकण्डूदद्रुघ्न सारकश्च । रा नि व ९ । [निघ. ।

**नीलाह्वा** । स्त्री । कृष्णापराजितायाम् । वै.

**नीलाश्वः** । पु । हये । वै निघ. ।

**नीलिका** । स्त्री । शकालोहे । विद्रधीतिभाषा । नील्याम् । नील । रा नि व ४ । नीलनिर्गुण्ड्याम् । बनलोध । रा नि व १२ । क्षुद्ररोगविशेषे । लक्षण —"कृष्णमेवगुणं वक्त्रं गात्रे वा नीलिकां विदुः ।" मा नि । "शीककोधादिकुपितादातपित्तान्मुखे त तु । श्यामल मण्डलं व्यङ्गं वक्त्रादन्यत्र नीलिका ॥" वृ.च ३१च । लिङ्गनाशनामकपैत्तिकदृष्टिरोगे । भा. । See काच । इन्दीवराल्लतायाम् । वट्टे । कालशैले । वै निघ. । वातज्वरे । गजवै ।

**नीलिनी** । स्त्री । नील्याम् । च सू २च । नीलपुष्पायाम् । रा नि.व.४ । सु सू ३९च । शि यो. च्या विपचनम्पने । "नीलिनीं कटुरोहि णीम् ।" च द.ज्व चि. । "नीलिनीमगरवाच ।" नीलपुनर्नवायाम् । रा नि व ५ । वा सू १५च. । "कुकुर्यादौ नीलिनीतिन्वकानि ।" श्वेतमलायां । च द गुल्म चि । "सरला नीलिनी वचा ।" श्याम निशायां । म द. । शिवपिप्पल्याम् । वै.निघ ।

**नीलिनीफलम्** । क्ली । नीलीबीजे । नीलेर बीच । सु.सू १च. ।

**नीली** । स्त्री । स्वनामख्यातक्षुपे । नील गाछ । रा नि व ४ । See चक्रिका । नीलपुष्पायाम् । नील ट्गोना । च.द.सन्निपातज्व चि.चक्रदत्ताङ्के । "नीली कम्पिल्लकं त्रिवृत् ।" तन्नामकौषधी, य स्या चीरं नील पुष्पादि नीलम् । या चानेक लतादलानलो भवति । च चि १च । नीलाञ्जनिकायां, शारदकन्या, नित्यपिच्छीति इत्यत्र । सु चि २१च । कालाञ्जन्याम् । काल कार्पास । वा टी.हेमा । शीकल्पिकायाम् । वेल गाछ । द्र दरकी । 'नीलीतुल्य लगेलच ।" "चूर्णं श्यामा हरनीली ।" सु सू.४च. ।

**नीलीफलम्** । क्ली । शीफले । सु चि १०च ।

**नीलीहृद्याकृतिः** । स्त्री । शरपुङ्खायाम् । श रपुङ्खा, बन नील । वै.निघ ।

**नीलोत्पलम्** । क्ली । (Nymphaea stellata or N. Caerulea) नीलकमले । नील पद्म, नीलोत्पल । नीलकुमुदे । नील शुन्दि । हि नीलोफर । म नीलोत्पल । क नैदलिलु । तैं नल्लकलुव । गुणा — अतिस्वादु शीतल सुरभि रु च्छघ्नत् पाकेऽतितिक्त रक्तपित्तघ्न । रा.नि व.१० । "नीलोत्पलमतिस्वादु शीतं सुखकरं मतं । पाके ऽतितिक्तं सुरभि रक्तपित्तस्य नाशकम् ॥" द्रव्यगु ण । च चर्म. चि । तन्मूलगुणा — गुरु विष्टम्भि शीतलच । राज ९च ।

**नीलोत्पलिनी (ली)** । स्त्री । नीलकमलिन्यां । नील पद्मेर झाड़ । कुमुदिन्यां । शुन्दी वा कुमुदफुलेर झाड़ । रा नि.व १० ।

**नीलोदरः** । पुं । महाविषदर्विकजातिभेदे । सु कल्प ८च. । [नि । रा नि.व १३ ।

**नीलोपलः** । पु । नीलमणौ । नीलकान्त म-

**नीवरम्** । क्ली । जले । वै.निघ. ।

**नीवारः** । पुं । Wild variety of Oryza sativa तृणधान्यविशेषे । উড়ি धान । हि तीनी । तें निवरिवड्लु । गुणा — मधुर स्निग्ध, लघु पवित्र पथ्यदश्च । रा.नि.व.१६ । "नीवार शीतलो ग्राही पित्तघ्न कफवातकृत् ।" भा प्रा. व. । तदन्नगुणा — "नीवारभक्तं रुचिदो लघुर्वै पलकृद्भव" । वातकारी यक्ष्मकासश्लीहामनवनाश-न ॥" वै.निघ. । रक्तपित्ते हित । शि.यो र पि. चि खण्डखाद्ये । [धान । र.मा ।

**नीवारतण्डुका** । स्त्री । नीवारे । উড়ি

**नीहारः** । पु । हिमे । शिशिरे । स च कफवातवर्द्धक. । "शीताधिक सनीहार सविदुरस्तम यितुवान् ।" राज १च ।

**नुत्त.** । पु । पद्मपत्रमङ्गचे । लकुचवृक्षे । वै.निघ. ।

**नेत्रम्** । क्ली । दर्शनेन्द्रिये । चक्षुः । रा.नि.व. १८। नेत्रपरीक्षा यथा—वातेन रूक्ष धूम्रमरुणञ्च । पित्तात् पीतरक्तहरितवर्णं सदाहञ्च । कफेन धव लं ज्योतिर्हीनञ्च । भा. । तदुक्तं—"विद्याद्द्व्यङ्गुल बाहुल्यं स्वाङ्गुष्ठोदरसम्मितं । द्व्यङ्गुलं सर्व्वतः सार्द्धं भिषङ् नयनबुद्बुदं । सुवृत्तं गोस्तनाकारं सर्व्वभूतगु-णोद्भवम् । पलं भुवोऽग्नितो रक्तं वातात् कृष्णं सितं जलात् । आकाशादश्रुमार्गाश्च जायन्ते नेत्र-बुद्बुदे । दृष्टिश्चात्र तथा वक्ष्ये यथा ब्रूयाद्विशार-दः । नेत्रायामत्रिभागन्तु कृष्णमण्डलमुच्यते । कृ-ष्णात् सप्तममिच्छन्ति दृष्टिं दृष्टिविशारदाः । मण्ड-लानि च सन्धींश्च पटलानि च लोचने ।" सु.उ. १अ. । तत्मूले । गाछेर शिकड़ । रा.नि.व २ । च.द.वि.ज्व चि. । "दीर्घपत्रककर्णाख्यनेत्रम् ।" वस्तिशलाकायाम् । शला इति लोके । यथा—ने त्राणि सुवर्णरजतताम्रायोरीतिदन्तशृङ्गमणितरु सारमयानि श्लक्ष्णानि दृढानि गोपुच्छाकाराणि ऋजूनि गुटिकामुखानि । तदभावे नलवंशास्थिस-म्भवा । नेत्रप्रणिधानदोषाः षट्, पार्श्वावपीडितम-त्युत्क्षिप्तमवसन्नं तिर्य्यक्क्षिप्तं चलितं विवर्त्तित मिति । अतिस्थूलं कर्कशमवनतमणु भिन्नं सन्नि कृष्टविप्रकृष्टकर्णिकं सूक्ष्मातिच्छिद्रमतिदीर्घमतिह्र-स्वमित्येकादशनेत्रदोषाः । सु.चि.३५अ । See अनुवासनवस्तिः ।

**नेत्रकर्म्म (प्रसाधनम्)** । क्ली । नेत्रविधने औषधादिषु । यथा—"सैकवाश्च्योतनस्निग्धौ वि-डालतर्पणस्तथा । पुटपाकोऽञ्जनं नेत्रे यथावस्थं प्रयोजयेत् ।" सौड. । भा. । [अम. ।

**नेत्रच्छदः** । पुं । नेत्रावरणे । চক্ষের পাতা ।

**नेत्रधावनम्** । क्ली । चक्षुर्धावने । तस्य वि-धिः—"दन्तमूर्द्धमधो कृत्वा प्रातः सिञ्चेत लोचने । तोयपूर्णमुखेन दृष्टिरात्र प्रसीदति ।" राज.१म ।

**नेत्रनैर्म्मल्यकारी** । पुं । खर्परघाती । वै.निघ. ।

**नेत्रपर्य्यन्तः** । पुं । अपाङ्गदेशे । रा.नि.व.१८ ।

**नेत्रपाकः** । पुं । चक्षुषः पाके । लक्षणं—"क-ण्डूपदेहाश्रुयुतः पक्वोदुम्बरसन्निभः । संरम्भी पच्यते यस्तु नेत्रपाकः स शोफजः ।" मा.नि. ।

**नेत्रपापाघः** । पुं । कटुक्षायाम् । र.मा. ।

**नेत्रपिण्डः** । पुं । बिडाले । नेत्रगोलके । हा-रा. । [२ ।

**नेत्रपुष्करा** । स्त्री । रुद्रजटायाम् । रा.नि.व.

**नेत्रबलम्** । क्ली । रसाञ्जने । वै.निघ ।

**नेत्रभूषणम्** । क्ली । कृष्णाञ्जने । কাজল সুর্মা । वै निघ । [वै.निघ. ।

**नेत्रमङ्गलकारी (इन्)** । पुं । खर्परघाती ।

**नेत्रमलम्** । क्ली । पिच्चटे । পিচুটী । वै.निघ. ।

**नेत्रमीला** । स्त्री । यवतिक्तालतायाम् । रा. नि व.३ ।

**नेत्ररोगः** । पुं । दृष्टिगतरोगे । চক্ষের রোগ । तस्य निदानं—सततदूरेक्षणरोदनकोपशोकाभि-घातादिभिर्वातादयः कुपिता नेत्रविकारान् जनय-न्ति । ते च रोगाः षट्सप्ततिः । यथा—वातजा दश, पित्तजा दश, कफजास्त्रयोदश, रक्तजा षोडश त्रिदोषजाः पञ्चविंशतिः, बाह्यौ द्वौ । ते च पुनः षट्सप्ततिप्रकारा अवयवभेदेन षट्सप्तति-र्भवन्ति । यथा—सन्ध्याश्रया नव, वर्त्मजा एकविं-शति, शुक्लजा एकादश, कृष्णजाश्चत्वारः, सर्व्व-स्थाः सप्तदश, दृष्टिजाः द्वादश, बहिर्जातौ द्वौ चेति । मा.नि. । अपरस्य नेत्ररोगा यथा—"तोय-स्रावः प्रसन्नान्धो नक्तान्धस्तिमिरस्तथा । शुक्रकौ शुक्रजालश्च पटलश्चार्बुदस्तथा ॥ पूयस्रावश्च काचाख्यो रक्तस्रावस्तथैव च । पिपिटी वर्त्मरोगश्च अभिष्यन्द-स्तथैव च ॥ वातपित्तकफैर्दुष्टैर्नेत्ररोगा भवन्त्यमी । लिङ्ग चिकित्सितं तेषां प्रवक्ष्याम्यनुपूर्व्वशः ॥" अ.द. ।

**नेत्ररोगहा** । पु । वृश्चिकाल्यां । বিছাতি । रा.नि व.८ ।

**नेत्ररोम** । क्ली । नेत्रपक्ष्मणि । वै.निघ. ।

**नेत्रवती** । स्त्री । पश्चिमदेशप्रसिद्धभारतवर्षीय-नद्याम् । एतज्जलगुणाः—सुमधुरं कान्तिजनकं ह र्षं पुष्टिकरं दीपनं पाचनं बल्यञ्च । रा.नि व.१४ ।

**नेत्रवर्त्म** । क्ली । दृष्टौ, नेत्रे । वै.निघ. ।

**नेत्रवर्त्मबन्धः** । पुं । नेत्ररोगविशेषे । वै.निघ. ।

**नेत्रवस्तिः** । पुं । नेत्रे वस्तिदानप्रकरणे । "ने-त्रमेवं परित्यज्य साद्धं द्व्यङ्गुलम् । सर्व्वतथापि चर्मणी जलं दत्वा प्रमर्दयेत् ॥ तेन पिष्टेनान्तराले

इव सन्धिविवर्जितम्। क्षतालवाल इवप्रान्ते शुक्लभागे द्रवेण वै। पूरयेद्व यथापक्ष्म पूरितं चैव जायते। नेत्रे पलं प्रकुर्वीत विकासस्तु तथैव च॥ स्नस्थे कफे सन्धिरोगे मात्रा पञ्चशत विदुः। कफे वाते कृष्णरोगे मात्रा सप्तशत मता। दृष्टिरोगेष्वष्टशत मधिमन्थे सहस्रकम्। शुक्रेऽस्ति कुटिले शुक्ले स्यात् शतद्वयमतो मता॥ पित्तरोगे नवशत सहस्रं वातरोगिणाम्। एकाहं वा त्र्यहं वापि पश्चाहं चेष्यतेऽथवा॥ द्रवपापाङ्गतो नीत्वा नीलद्रव्य विलोक्य च। सुखं निरीक्षयेत् पश्चात् नेत्रवर्त्मविधिस्त्वयम्॥ निर्वृत्तिर्व्याधिशान्तिश्च क्रियालाघवमेव च। सम्यक रोगी सुखसुप्तिर्वैशद्य वर्ण्यं पाटवम्॥ शोकाद्युपालगुरुता स्रैग्धैर् स्यादतिसपिते। रुक्षाविल रुक्षत्व नेत्र स्याद्धीनतर्पिते॥ रुचि स्निग्ध क्रमशात प्रयोज्य सम्प्रदायत।' सौड। See सु उ.१८ष।

**नेत्रविभूषणम्**। क्ली। नीलाञ्जने। वै निघ।

**नेत्रवैमल्यकारी** (इन्)। पुं। खर्परधातौ। वै निघ।

**नेत्राभिष्यन्द**। पु। नेत्रसर्व्वगतरोगे। নেত্র শূল বা চক উঠা। स चतुर्विध वाताभिष्यन्द, पित्ताभिष्यन्द, कफाभिष्यन्द रक्तजश्चेति। अय रोग प्रायेणाधिमन्थादिसर्व्वविधनेत्ररोगाणामाकर। लक्षण यथा—"प्रायेण सर्व्वे नयनाम यास्ते भवन्त्यभिष्यन्दनिमित्तमूला। वातात्पित्तात् कफाद्रक्तादभिष्यन्दश्चतुर्विध। प्रायण जायते घोर सर्व्वनेत्रामयाकर॥ निस्तोदनस्तम्भनरोमहर्ष सङ्घर्षपारुष्यशिरोभितापा विशुष्कभावा शिशिराशुता च वाताभिपन्न नयने भवन्ति। दाहप्रपाकौ शिशिराभिनन्दा धूमायन वाष्पसमुच्छ्रय। उष्णाशुता पीतकनेत्रता च पित्ताभिपन्न नयने भवन्ति॥ उष्णाभिनन्दा गुरुताक्षिशोफ कण्डूपदेहा वतिशीतता च। स्रावो मुहु पिच्छिल एव चापि कफाभिपन्न नयने भवन्ति॥ ताम्राशुता लोहितनेत्रता च राज्य समन्तादतिलोहिताय। पित्तस्य लिङ्गानि च यानि तानि रक्ताभिपन्ने नयने भवन्ति॥" सु उ ६ष।

**नेत्रामय**। पुं। नेत्ररोगे। रा नि व २०।

**नेत्रामयहर**। पुं क्ली। खर्परे। वै निघ।

**नेत्राम्बु**। क्ली। अश्रुणि। চক্ষের জল। अम।

**नेत्रारि**। पुं। स्नुहीवृक्षे। মনসা গাছ। रा नि व ८।

**नेत्रार्श**। क्ली। अक्षिजातार्शसि। तच्च वर्त्मावरोध वेदनास्रावौ दर्शननाशश्च। सु नि.१ष।

**नेत्रास्थि**। क्ली। नयनाधिष्ठाने घोणास्थ्यस्थि नये। च शा ७ष।

**नेत्री**। स्त्री। नाड्यां। श र।

**नेत्रोपम**। पु। वातामे। বাদাম। भा।

**नेत्रोपमफल**। पु। वातामवृक्षे। भा।

**नेत्रौषधी**। स्त्री। अजशृङ्ग्याम्। তীত পুষ্পী, কৌঙা। प सु। र मा। क्ली। नेत्रहितौषध मात्रे। पुष्पकासीसे। नीलाञ्जने। नीलशैवाकम्। रा नि व १३।

**नेत्रवर्ग**। पु चक्षुर्हितकरद्रव्यगणे। यथा—"द्विधा रसाञ्जनम्नीक त्रिफला लोध्रकद्वयं। कुमारिका च विमला गणोऽय नेत्रसञ्ज्ञक॥ ष कँ चि।

**नेदिष्ठ**। पु। अङ्कोटवृक्षे। আটা।

**नेपाल**। पु। कृष्णकौ। वै निघ। [नि व ६३।

**नेपालकम्**। क्ली ताम्रधातौ। তামা। रा

**नेपालनिम्ब**। पु किराततिक्तके। চিরাতা। चिरतिक्ता, नपालनिम्ब चिरायते इति च लोके। गुणा—"नेपालनिम्ब शीतोष्णो योगवाही लघुस्तथा तिक्तोऽतिकफपित्तास्रशोफतृष्णाज्वरापह।" रा नि व ८। [क्रिमिहे। भा पू १अ शा व।

**नेपालमूलकम्**। क्ली गजदन्ताकारे मूल

**नेपालशृङ्गी**। स्त्री। नेपालदेशीयशृङ्गीविषे। নেপাল দেশীয় মিঠা বিষ। गुणा—"नेपालशृङ्गी नैपाली हन्ति सा कफजान् गदान्। वातजाञ्छिखिलाद्यापि सन्निपातोद्भव ज्वरम्। आमवातं महाघोरं क्षुद्रोगमपि दारुणम्।" चरि। [निघ।

**नेपालि(ली)का**। स्त्री। सोमलतायां। वै

**नेपा**। स्त्री। नवमल्लिकायाम्। সেউতী। रा नि व १। कस्तूर्य्याम्। वा उ ३ष। मन शिलायाम्। वै निघ शिवा.वि धुमे।

**नेपालीयम्** । क्ली । ताम्रे । वै निघ ।

**नेपालेक्षुः** । पु । पुण्ड्रकेक्षौ । पूँडि ईक्षु । रा नि व १४ ।

**नेमि (मी)** (इन्) । पु । शुक्लखदिरे । रा नि व ८ । चक्रवाकपक्षिणि । च द १७ । तिनि शवृक्षे । अम । र मा ।

**नेमिवृक्ष.** । पु । श्वेतखदिरवृक्षे । रा नि.व ८।

**नैकुम्भम्** । क्ली । जैपालबीजे । सा.कौ ।

**नैगमेष.** । पु । पितृग्रहसञ्ज्ञके बालरोगे । त दाविष्ट लक्षण यथा— य फेन वमति विनम्यते च मध्ये सोद्वेग विलपति चोर्द्धमीक्षमाण । ज्व र्य्येत भृततमथो वसासगन्धि निं सञ्ज्ञो भवति हि नैगमेषजुष्ट ॥” नैगमेषस्तु पार्व्वत्या सृष्टो मेषान नो ग्रह । कुमारधारी देवस्य गुहस्यात्मसम स खा । सु उ २७अ. । [२ । सु शा.१०अ ।

**नैगमेषापहृतः** । पु । नागोदरे । নাগোদ

**नैचिकी** । स्त्री । उत्तमायां गवि । अम ।

**नैचुलम्** । क्ली। हिज्जलबीजे। च सू २अ वमन.।

**नैदानिक.** । त्रि । निदानशास्त्रकुशले ।

**नैपाल.** । पु । नेपालनिम्ब । চিরেতা । रा नि व ६।

**नैपालिकम्** । क्ली। ताम्रधातौ। रा नि.व १३।

**नैपाली** । स्त्री । मन शिलाभेदे । নেপালি मन छाल । मे । सु चि २अ । मन शिलायां। र मा । रा नि व १३ । नील्यां । श र । नवम ल्लिकायाम् । সেউতী । वसन्ती नेवारीति लोके । भा । रा नि व.१० । शेफालिकायाम् । मे । इक्षुभेदे, नेपालेक्षौ । गुणा —वातकर कफपि त्तघ्न कषायी विदाही च । सु सू ४५अ । [म ।

**नैयग्रोधम्** । क्ली। वटवृक्षफले । वटफल । भ

**नैर्झरजलम्** । क्ली । निर्झरवारिणि । ঝর্ণার जल । “शैलसानुस्रवद्वारिप्रवाहे निर्झरो झर । स तु प्रस्रवणश्चापि तत्रत्य नैर्झरं जलम् ।” भा ।

**नैषधक** । पु । निषधदेशीये शालिधान्यभेदे । गुणा – शालिवत् । च सू २७अ ।

**नोदयन्ती** । स्त्री । नवमल्लिकायां । र मा ।

**न्यक्कारिका** । स्त्री । पतङ्गविशेषे, विष्ठाकीटे । हारा. ।

**न्यग्रोधः** । पु । वटवृक्षे । বট গাছ । रा नि व २३।११ । सु सू ३८अ न्यग्रोधादि । शुतश्रेण्यां, आखुकर्णीलतायाम् । মুষাকাণী । रा नि व २३। शमीवृक्षे । मे । विषपर्ण्यां । मोहननामौषधौ । विश्व । [याम् । श मा ।

**न्यग्रोधपरिमण्डला** । स्त्री । सुन्दरस्त्रि

**न्यग्रोधपुटपाक** । पु । वटकल्कादिसाध्य. पुटपाके । यथा— न्यग्रोधादेश्च कल्केन पूरयद्गौ- रतित्तिरे । निरल्लमुदर सम्यक पुटपाकेन तत्प चेत् ॥” अस्य रसो मधुना सर्व्वातिसारे हित । शार्ङ्ग म ख १अ ।

**न्यग्रोधादिगण.** । पु । तदादिद्रव्यवर्गे । य था —“न्यग्रोधपिप्पलसदाफलरोध्रयुग्म जम्बुद्वयार्ज्जुनकपीतनसोमवल्क लघाम्रवञ्जुलपियालपलाश नन्दि कोलीकदम्बविरलामधुक मधूकम् ।’ इति द्रव्याणि । अन्य — न्यग्रोधोदुम्बराश्वत्थप्लक्षमधुक कपीतनककुभकोशाम्रचोरकपत्रजम्बूद्वयपियालमधूकरोहिणीवञ्जुलकदम्बबदरीतिन्दुकीशल्लकीरोध्र सावरोध्रभल्लातकपलाशनन्दिवृक्षाश्चेति । गुणा — “न्यग्रोधादिर्गणो व्रण्य सग्राही भग्नसाधक । र क्तपित्तहरो दाहमेदघ्नो योनिदोषहृत् ॥’ वा सू ३५अ । सु सू ३८अ । [रा नि व १ ।

**न्यग्रोधिका** । स्त्री । आखुकर्णलतायाम् ।

**न्यग्रोधी** । स्त्री । द्रवन्त्याम् । বড দন্তী । रा. नि व ५ । आखुकर्णीलतायाम् । शुतश्रेण्याम् । रा नि व ४ । मुसकुडीति कश्चित् । चम भ ।

**न्यङ्कु.** । पु । शम्बरमृगे । शाम्बर इति भाषा । हिं बाराहशिङ्गा । मांसगुणा स्वादु लघु बल्य वृष्य त्रिदोषघ्न । भा मांसव । मणिविशेषे । ॥।

**न्यङ्कुभूरुह.** । पु । आरग्वधवृक्षे । वै निघ । श्योणाकवृक्षे। শোণাপাঠা । भिषा. ।

**न्यच्छम्** । क्ली । क्षुद्ररोगभेदे । तल्लक्षण—“म- ण्डलं महदल्पं वा श्यामं वा यदि वा सितं । स हजं नीरुजं गात्रे न्यच्छमित्यभिधीयते ॥’ सु नि १३अ । [हिप । क्ली । पार्श्व, दृश्य । मे ।

**न्यच** । पु । गण्डके । [illegible] । वै निघ । म

**न्याक्यम्** । क्ली। भर्जिततण्डुले। मुडि । श च.।

**न्यादः** । पु । भोजने । आहारे । अम ।

**न्युब्ज.** । पु। रोगे । व्यथायाम् । कुशे । वै निघ । हे.च. । त्रि । कुब्जे । कुँजो । मे. । रुजामुखे । अम. । क्ली। कर्म्मरङ्गे । कामवाडा । मे ।

**न्यूनपञ्चाशद्भावः** । पु । जघन्य उन्मादव ति । पागल । का पुराण ।

**न्यूनाङ्गः** । त्रि । हीनाङ्गे । खञ्जे ।

**न्यूनेन्द्रियः** । त्रि । असम्पूर्णेन्द्रिये, खञ्जादौ । श चि. ।

## प

**पक्कटी** । स्त्री। प्लक्षवृक्षे । पाकुड गाछ । वै निघ. ।

**पक्क(क्का)पौड़** । पु । वर्द्धनवृक्षे । हि पक्वौडा । गुणा —हृद्यग्रहणविधौ श्रस्त कटु जीर्णज्वरघ्नश्च। रा नि.व ८ ।

**पक्ता** । त्रि । स्वय पाककर्त्तरि । पु । अग्नौ ।

**पक्तिः** । स्त्री। गौरवे । पाके । मे । पाकशक्तौ। च.द.शिराव्यधे ।

**पक्तिशूलः** । पु , क्ली । परिणामशूलरोगे । रा नि व २० । See अन्नद्रवशूल ।

**पक्क.** । त्रि । क्वथिते श्रते वा (वस्तुनि) । र.मा. । परिणते । पाका । अम.भ । क्ली । स्विन्नतण्डुलादौ । पुराणम् । [पके । वै निघ. ।

**पक्कक्षत्** । पु । निम्बवृक्षे । श च । त्रि । पा

**पक्कपात्रम्** । क्ली । पक्कशरावे । वा.उ.५च. ।

**पक्कमांसम्** । क्ली । पाकसिद्धमांसे । पाक करा मांस । गुणा —स्थिरं बलवर्द्धन वीर्य्यवर्द्धनञ्च । रा नि व.१७ । तद्वदृते । मद व ६ ।

**पक्करसः (सिक)** । पु । मद्ये । श र. । सीधुनामद्यभेदे, सौधौ । गुणा.—बलवर्णकर सर. शोफघ्न वातघ्न पाके मधुर हृद्य इन्द्रियबोधनश्च। सु सू.४५च । "रोचनो दीपनो हृद्य शोषशोफार्शसा हित । स्नेहश्लेष्मविकारघ्नो वर्ण्य पक्करसो मत ॥" च सू २७च. ।

**पक्कवारि** । क्ली। उष्णजले । काञ्जिके । श च।

**पक्कगन्धस्समीपतिः** । पु । राजकदम्बे । वै निघ । [दृक्षे ।

**पक्कासम्** । क्ली । पाचितान्ने । घृतादिपक्कभक्ष्य-

**पक्काशयः** । पु । नाभेरधोभागे । पाकाशय । 'पक्काशयौ ह्यधो नाभे ।" रा.नि व १८ । अपिच "नाभिस्तनान्तर जन्तोराहुरामाशयम्बुधा । आमाशयादध पक्काशयात्तूर्द्ध पाकला ॥" भा ।

**पक्केष्टका** । स्त्री । दग्धेष्टकायाम् । वै सपद ।

**पखौण्ड़ (पौड)** । पु । पक्कपौड़वृक्षे । प-खोड । रा नि व.८ ।

**पङ्क.** । पु । कर्द्दमे । कादा । गुणा —पङ्कस्य दाहनाशित्वं भग्नसन्धिहितत्वं हिमत्वञ्च । राज । शोथघ्नत्वं सरत्वञ्च । भा ।

**पङ्ककर्व्वटः** । पु । कोमलकर्द्दमे । थितन प नि । त्रिका । [पाखी । त्रिका. ।

**पङ्ककीरः** । पु । कीयष्टिकपक्षिणि । टिटिभ

**पङ्कक्रीड़ः** । पुं । ग्राम्यशूकरे । वै निघ. ।

**पङ्कगडक** । पुं । (Magrognathus.) पङ्कालमत्स्ये क्षुद्रमत्स्यभेदे । पाँकाल माछ । त्रिका ।

**पङ्कगतिः** । पुं । पङ्कालमत्स्ये । श मा. ।

**पङ्कग्राहः** । पुं । शिशुमारे । वै निघ । मकरे । हारा. ।

**पङ्कजम् (न्म)** । क्ली । पद्मे । प सु. ।

**पङ्कजातः** । पु । भद्रराजकृपे । शौनगाच । वै.निघ. । [पद्मेर झाड़ । वै निघ ।

**पङ्कजिनी** । स्त्री । पद्मालये, कमलिन्याम् ।

**पङ्कपर्पटी** । स्त्री। सौराष्ट्रमृत्तिकायां । र.मा.।

**पङ्कमण्डूकः** । पुं । जलशुक्तौ । वै निघ । शम्बूके । शामुक । हारा. ।

**पङ्कट् (हम्)** । क्ली । पर्णे । रा नि व १० ।

**पङ्कवारि** । क्ली । काञ्जिके । वै निघ. ।

**पङ्कवासः** । पु । कर्कटे । रा.नि.व.१८ ।

**पङ्कशुक्तिः** । स्त्री । शुक्ती । झिनुक । त्रिका. ।

**पङ्कशू(षू,सू)रणः** । पु । पद्मकन्दे । शालुक । त्रिका. ।

**पङ्कारः** । पु । (Vallisneria, or Tropa bispinosa.) जलजवृक्षविशेषे, कण्टकसेवल्यां । मे. ।

**पङ्किलः** । त्रि । पङ्कमये । मलिने ।

**पङ्कीरः** । पुं । टिट्टिभपक्षिणि । टिटिभ पाखी । वै निघ. ।

**पङ्केज(रुह)म्** । क्ली । कमले । रा नि व.१० ।

**पङ्क्तिकण्टकः** । पुं । अपामार्गक्षुपे । रा नि.व ४ ।

**पङ्क्तिकन्दः** । मालाकन्दे । रा नि.व ७ ।

**पङ्क्तिचरः** । पुं । कुररपक्षिणि । रा नि.व १९ । क्रौञ्चपक्षिणि । श.चि. ।

**पङ्क्तिवीजः (कः)** । पुं । बर्बुरकवृक्षे । बाबला गाछ । रा.नि.व.८ । आरग्वधवृक्षे । कर्णिकारवृक्षे । शोन्दाल, चीनेर करवी गाछ । रा नि.व.९ ।

**पङ्क्तिशूलः** । पुं,क्ली । परिणामशूले । निदानलक्षणे । "स्वैर्निदानैः प्रकुपितो वातः सन्निहितो यदा । कफपित्ते समावृत्य शूलकारी भवेद्बली । भुक्ते जीर्यति यच्छूलं तदेव परिणामजम् । तस्य लक्षणमप्येतत् समासेनाभिधीयते । आध्मानाटोपविण्मूत्रविबन्धारतिवेपनैः । स्निग्धोष्णोपशमप्रायं वातिकं तद्वदेद्भिषक् । तृष्णादाहारतिस्वेदकट्वम्ललवणोत्तमम् । शूलं शीतशमप्रायं पैत्तिकं तद्वदेद्भिषक् । छर्दिहृल्लाससम्मोहस्वल्परुग्दीर्घसन्तति. । कटुतिक्तोपशान्ती च विज्ञेयञ्च कफात्मकम् ॥" इत्यादि । [योर्बधात् ।" सु नि १४ ।

**पङ्गुः** । पु । वातव्याधिविशेषे । "पङ्गु सक्थ्नो-

**पङ्गुल(ल्य)हारिणी** । स्त्री । ग्रिग्टीक्षुपे । रा नि व ४ । [र्यादि' । शुक्लाश्वे ।

**पङ्गुलः** । पु । एरण्डवृक्षे । वा सू १५अ.विद्रा

**पङ्गुल्यम्** । क्ली । पङ्गुभावे । रा.नि.व.४ ।

**पचनम्** । क्ली । पाके । पुं । अग्नौ । श च । स्त्री (नी) । वनबीजपूरे । रा.नि व. ११ ।

**पचम्पचा** । स्त्री । दारुहरिद्रायाम् । प.मु. । भा म १म.तन्द्रिकज्व.चि. । "मरिचकणपचम्पचा वचारुक् ।"

**पचा** । स्त्री । पाके । अम. ।

**पचेलुकः** । पुं । पाचके । त्रिका. ।

**पच्यमानज्वरः** । पुं । ज्वरविशेषे । पच्यमान ज्वर । लक्षणम्—"ज्वरवेगोऽधिकस्तृष्णा छर्दनी-सारविड्ग्रहा । मलप्रवृत्तिरुत्क्लेशः पच्यमानस्य लक्षणम् ॥" मा.नि. ।

**पञ्चः** । पुं । तिक्तपटोले । वै निघ. ।

**पञ्चकट्यम्** । क्ली । जीवनपञ्चमूले ह्रस्वपञ्च-मूले च । वा.सू १५अ. ।

**पञ्चकन्दाः** । पुं । पञ्चसिद्धौषधिविशेषेषु । ते च तैलकन्दक्रौडकन्दसुधाकन्दरुदन्तीसर्पाख्यात्मका । रा नि.व.२२ । *See* सिद्धौषधिः ।

**पञ्चकपित्थम्** । क्ली । कपित्थस्य मूलत्वक्पत्र-फलपुष्पेषु । वा.उ.२८अ. ।

**पञ्चकर्म्म** । क्ली । वमनविरेकनस्यनिरूहानुवास-नेषु । वमनादि पाँचप्रकार क्रिया । "प्रथमं वमनं पश्चात् विरेकश्चानुवासनं । एतानि पञ्चकर्म्माणि निरूहो नावनं तथा ॥" मा. । तेषु न्यून-सप्ताब्दे अतीताशीत्यब्दे च नस्यं, ऊनद्वादशे धूमं, ऊनपञ्चमे कवलं, ऊनदशमे अतिक्रान्तसप्ततौ च शोधनं, न्यूनषोडशे सप्ततिवार्षिके च रक्तमोक्षणं न देयम् । एतानि दोषनिर्हरणार्थं यथाकालं प्र-योज्यानि । प म.४ख. । विशेषास्तत्तच्छब्दे मृग्याः ।

**पञ्चकषायः** । पुं । सप्तापाठापटोलप्रियङ्गुनि-म्बात्मकद्रव्यवर्गे । भा.म.४म यो व्या चि. । "चूर्णं पञ्चकषायजे ।" भैष.कर्णरो.चि. ।

**पञ्चकीरः** । पुं । जलकुक्कुटे । त्रिका. ।

**पञ्चकृत् (त्यः)** । पुं । पर्कटीवृक्षे, पखौड़वृक्षे । रा नि व.८ ।

**पञ्चक्रमाः** । पु । सौम्यकीटभेदे । सु.कल्प,८अ. । See कीट ।

**पञ्चतृणम्** । क्ली । कुशकाशशरदर्भेक्षुतृणरूपतृण-पञ्चमूले । "कुशः काशः शरो दर्भ इक्षुश्चैव तृणोद्भवम् । पञ्चतृणमिदं ख्यातं तृणजम्पञ्चमूलकम् ॥" –प प्र.२ख. । अन्यच्च—"शालीक्षुकुशकाशैः स्यात् शरैश्च तृणपञ्चकम् । एषां मूलं तृषादाहपित्तास्र-मूत्रसङ्ग्रहम् ॥' भा. ।

**पञ्चथः** । पुं । कोकिले । वै निघ. ।

**पञ्चनखः** । पुं । व्याघ्रे । रा.नि.व.१८ । कच्छपे । जटा. । गजे । शिका. । व्याघ्रशरभशार्दूलगोधाककच्छपशरटसिंहेषु । भक्ष्यपञ्चनखाः—"शशकः शल्लकी गोधा खड्गी कूर्म्मश्च पञ्चमः ।" स्मृतिः ।

**पञ्चनखरः** । पुं । गोधायाम् । গোসাপ । वै.निघ. ।

**पञ्चनिदानम्** । क्ली । रोगज्ञानस्य पञ्चविधोपायेषु । यथा—"निदानं पूर्व्वरूपाणि रूपाण्युपशयस्तथा । सम्प्राप्तिश्चेति विज्ञानं रोगाणां पञ्चधा स्मृतम् ।" मा.नि. ।

**पञ्चनिम्बम्** । क्ली । समभागत्वक्पत्रफलपुष्प-मूलरूपे निम्बपञ्चके । "निम्बस्य पत्रत्वक्पुष्पफल-मूलैर्विनिश्चितैः । पञ्चनिम्बं समाख्यातं तन्निम्बं निम्बपञ्चकम् ॥" रा.नि.व.२२ ।

**पञ्चपत्रः** । पुं । वज्राम्लकन्दे । रा.नि.व ७ ।

**पञ्चपर्णिका** । स्त्री । गोरक्ष्याम् । रा.नि.व.५।

**पञ्चपर्णि(र्णी)का** । स्त्री । गोरक्ष्या, गोरक्ष विशायाम् । रा.नि.व.५ ।

**पञ्चपल्लवम्** । क्ली । आम्रजम्बूकपित्थबीजपूर-बिल्वपल्लवेषु । আম, জাম, কয়েৎ, টাবা ও বিল্বপত্র । "आम्रजम्बूकपित्थानां बीजपूरकबिल्वयोः । गन्धकर्म्मणि सर्व्वत्र पत्राणि पञ्चपल्लवम् ॥" प.प्र.१ख. ।

**पञ्चपित्तम्** । क्ली । मत्स्यमहिषवराहमयूरच्छागपित्तेषु । মাছ, মহিষ, শূকর, ময়ূর, ছাগ ইহাদের পিত্ত । "वराहच्छागमहिषमत्स्यमायूर-पित्तकं । पञ्चपित्तमिति ख्यातं सर्व्वेषेव हि कर्म्मसु ॥" वै.संग्रहः । तेषां दृष्टिः—मत्स्यादिपित्तं विन्दादेर्विभावितं दृष्टिमायाति । शा.सी. ।

**पञ्चमापाः** । पुं । प्राणापानव्यानोदानसमाना-ख्येषु पञ्चविधदेहानलादिषु । सु. ।

**पञ्चबला** । स्त्री । बलातिबलानागबलाराजबलामहाबलासु । वै.निघ ।

**पञ्चबुद्धीन्द्रियम्** । क्ली । पञ्चज्ञानेन्द्रियेषु । स्पर्शनं रसनं घ्राणं दर्शनं श्रोत्रञ्चेति । च. ।

**पञ्चभद्रम्** । क्ली, पुं । गुडूचीपर्पटमुस्तकिरात-विश्वभेषजेषु । গুলঞ্চ, ক্ষেৎপাপড়া, মুতা, চিরাতা ও শুঁট । "गुडूची पर्पटं मुस्तं किरातं विश्वभेषजम् । पञ्चभद्रम् ।" सि.यो.च.द.ज्व.चि. ।

**पञ्चभूतम्** । क्ली । क्षित्यप्तेजोमरुद्व्योमसु । च. ।

**पञ्चभृङ्गम्** । क्ली । देवताड़शमीभङ्गातालीश-निर्गुण्डीषु । দেয়াতাড়া, শাঁই, সিদ্ধি, তালীশপত্র ও নিশিন্দা । वै निघ ।

**पञ्चमम्** । क्ली । मैथुने । तन्त्रम् ।

**पञ्चमकारम्** । क्ली । मद्यमांसमत्स्यमुद्रामैथुन-रूपे मकारपञ्चके । तन्त्रम् ।

**पञ्चमास्यः** । पुं । कोकिले । श.र. । [व.१५।

**पञ्चमुखः** । पुं । सिंहे । पिङ्गलसिंहे । रा.नि.

**पञ्चमुखी** । स्त्री । वासकक्षुपे । বাসক গাছ । रा.नि.व.४ ।

**पञ्चमुष्टिः (कः) (टी)** । पुं,स्त्री । सान्निपातिकज्वरे यूषविशेषे । আহার দ্রব্যবিশেষ । स च यवबदरीफलकुलत्थमुद्गकाशामलकानामेकैका मुष्टिं गृहीत्वाष्टगुणतोये पक्वः । च.द.सन्निपातज्व चि.। "यवकोलकुलत्थानां मुद्गमूलकशुण्ठयोः । एकैकमुष्टिमाहृत्य पचेदष्टगुणे जले । पञ्चमुष्टिकइत्येष वातपित्तकफापहः । शूले प्रशस्यते गुल्मे कासे श्वासे क्षये ज्वरे ॥" ८ दीलके । वै निघ.२ भ.ग्रय.चि.मूर्च्छमायां । लज्जायाम् । वै.निघ. ।

**पञ्चमूत्रम्** । क्ली । मूत्रपञ्चके, तच्च गर्द्दभीगोमेषीच्छागीमहिषीजमिश्रितमूत्रे । "गवामजानां मेषीणां महिषीणाञ्च मिश्रितम् । मूत्रेण गर्द्दभीनाञ्च सम्मतं मूत्रपञ्चकम् ॥" रा.नि.व २२ । गुणास्तन्मूत्रशब्दे मन्याः ।

**पञ्चमूलम् (ली)** । क्ली,स्त्री। पञ्चानां मूलानां समष्टौ । तानि च शृगालवृन्तादि शतावरी जीवक-ऋषभ-गोक्षुर-गुडूच्यादिकानि बहुविधानि प्रत्येकं पञ्चपञ्चमूलात्मकानि भवन्ति । १ । "बिल्वश्योणा-

कगाम्भारीपाटलागणिकारिका ।' इति बृहत्पञ्चमूलम् । च द । सु सू ३८ अ । २ । शालपर्णी पृश्निपर्णी बृहती कण्टकारिका गोक्षुरश्च । स्वल्पपञ्चमूलम् । गुणा —अश्मरीहरम् अत्यग्निदीपनम् । अर्क चि । See लघुपञ्चमूल । ३ । कुशकाशदर्भशरेक्षुमूलात्मक तृणपञ्चमूल पित्तकासक्षीरपाने ग्राह्यम् । सि यो कास चि श्रीकण्ठ । ४ । शतावरी विदारीकन्द जीवन्ती विषाणी जीवकात्मक शतावर्य्यादिपञ्चमूल । गुणा —स्तन्यकर गुरु वृष्य बल्य शीतल कान्तिदमाप्रेयश्च । ५ । जीवकर्षभकमेदामहामेदाजीवन्तीषु । जीवकादिपञ्चमूल । गुणा – वृष्य चक्षुष्य धातुवर्द्धन बल्य दाहपित्तज्वरतृष्णाघ्नश्च । ६ । बलापुनर्नवैरण्डमुद्गपर्णीमाषपर्णीषु । बलादिपञ्चमूल । गुणा भेदक शोफघ्न ज्वरघ्नश्च । वै निघ । ७ । गोक्षुरबदरीन्द्रवारुणीकासमर्दसर्षपेषु । गोक्षुरादिपञ्चमूल । ८ । गुडूचीमेषशृङ्गीशारिवाविदारीहरिद्रासु । वल्लीपञ्चमूले । ९ । करमर्दत्रिकण्टकसैरीयक (झाँटी) शतावरीगृध्रनखीषु । इति कण्टकपञ्चमूलं । सु. सू ३८ अ । गुणा तत्तत्पर्य्याये मन्तव्य ।

**पञ्चमूल्यादि** । पु । ज्वरातिसारे कषाय । "पञ्चमूलीबलाबिल्वगुडूचीमुस्तनागरै । पाठाभूनिम्बह्रीवेरकुटजत्वक्फलैः शृतम् ॥" च द ।

**पञ्चरत्नम्** । क्ली । स्वर्णमौक्तिकमाणिक्यहीरकराजपट्टेषु । अन्यत्र—"कनकं हीरकं नीलं पद्मरागश्च मौक्तिकम् । पञ्चरत्नमिदं प्रोक्तमृषिभिः पूर्व्वदर्शिभिः ॥" हेमा ।

**पञ्चरसलोहम्** । क्ली । वर्त्तलौहे । वै निघ ।

**पञ्चरसा** । स्त्री । हरीतक्याम् । मद व १ । आमलक्याम् । हारा. ।

**पञ्चरचक.** । पु । पञ्चोष्णाद्रे । रा नि व ८ ।

**पञ्चराजिफलः** । पु । पटोलकलतायाम् । रा नि व ४ ।

**पञ्चलवणम्** । क्ली । काचसैन्धवसामुद्र (करकच) विड्सौवर्च्चललवणेषु समभागेषु । "काचसैन्धवसामुद्रविड्सौवर्च्चलैर्युतम् । स्यात्पञ्चलवणम् ।' रा नि व २२ । "सौवर्च्चल सैन्धवञ्च विड्मौद्भिदमेव च । सामुद्रेण सहैतानि पञ्च स्युर्लवणानि च ॥" प ष १ख. । तद्गुणा — मधुरं सोष्णं विष्टम्भि वृष्यं

सूक्ष्म बलापहम् । वीर्य्योष्ण दीपन तीक्ष्ण कफपित्तविवर्द्धनम् ॥' शार्ङ्ग.म ६अ ।

**पञ्चलक्षण** । त्रि । वातपित्तकफसन्निपातागन्तूनां लक्षणयुक्ते । व्रणस्य गन्धवर्णस्रावावेदनाकृतिरूपलक्षणयुक्ते । सु चि १अ ।

**पञ्चलौह(क)म्** । क्ली । लौहाष्टकलौहे । पञ्च । सुवर्णरजतताम्रवङ्गनागरूपेषु पञ्चसु धातुषु । "सुवर्णं रजतं ताम्रं त्रपुसीसाख्यलोहकम् । वङ्गनागसमायुक्तं तन्माहुः पञ्चलोहकम् ।' इति प्रथमम् । समभागस्वर्णरजतताम्रत्रपुकृष्णायसेषु । "सुवर्णं रजतं ताम्रं त्रपु कृष्णायसं समम् । यद्यद्गमिति वा द्रव्यं द्वितीयं पञ्चलोहकम् ॥'' इति द्वितीयम् । रा नि व १२ । भा उ २८अ ।

**पञ्चवक्त्र** । प । पञ्चमुखरुद्राक्षे । स्मृति ।

**पञ्चवक्त्ररस** । पु । रसोऽयं सन्निपातज्वरे हितः । "गन्धशटङ्कणमरिचं विष धत्तूरजैर्द्रवैः । दिनमर्द्दितं प्रोक्तं पञ्चवक्त्रो रसो भवेत् । आर्द्रकस्य रसेनैव दातव्यो रक्तिकामित ॥" भा ।

**पञ्चवटी** । स्त्री । बिल्वाश्वत्थवटाशोकोदुम्बरेषु । वै निघ ।

**पञ्चवर्णक.** । पु । क्षुद्रवालुके । वै निघ ।

**पञ्चवर्द्धन.** । पु । पञ्चोदरदे । रा नि व ८ ।

**पञ्चवल्कलम्** }<br>**पञ्चवेतसम्** } क्ली । वटाश्वत्थोदुम्बरप्लक्षवेतसवल्कलेषु । वट, अश्वत्थ, यज्ञडुमुर, पाकुड ও বেতস ছাল । "न्यग्रोधोदुम्बराश्वत्थप्लक्षवेतसवल्कलैः । सर्वैरेकत्र मिलितैः पञ्चवेतसमुच्यते ।'' रा नि व २२ । शिरीषपिप्पलजम्बूवेतसेषु । भा उ ३६अ । गुणा —"स्तम्भकं हिमं दाहि व्रणयोदविसर्पजित् ।'' भा ।

**पञ्चबीजम्** । क्ली । कर्कटीत्रपुसदाडिमपद्मबीजकुष्माण्डेषु पञ्चबीजेषु । কাঁকুড়, শশা, দাড়িম, পদ্ম ও কুমাড়ের বীজ । शर्ङ्कराजशलाका जीरकत्रिलवङ्गमधुकेषु । ডাইশ্‌ক্রিয়া, বনানী, ... তিন ও পুন ।

**पञ्चशस्यम्** । क्ली । धान्यतिलमुद्गयवनिष्पावेषु

**पञ्चशाख.** । पु । हस्ते । रा नि व १८ ।

**पञ्चशिख.** । पु । सिंहे । त्रिका ।

**पञ्चशुक्लः** । पुं । सौम्यकीटभागी । सु.कल्प.८ अ. । See कीटः ।

**पञ्चशूरणम्** । क्ली । शूरणपञ्चके । अत्यम्लपर्णीकाण्डीरमालाकन्दशूरणारण्यशूरणात्मके । "अत्यम्लपर्णीकाण्डीरमालाकन्ददिशूरणैः । मीलितो भवति योगोऽयं पञ्चशूरणसंज्ञकः ॥" रा.नि.व.२२।

**पञ्चशैरीषम्** । क्ली । शिरीषवृक्षस्य फलपत्रत्वङ्मूलपुष्पेषु समभागेषु । "शैरीषं कुसुमं मूलं फलं पत्रं त्वगित्ययं । कीटारिः कथितो योगः पञ्चशैरीषकाभिधः ॥" रा.नि.व.२२ ।

**पञ्चसर्पिणी** । स्त्री । औषधिविशेषे । लक्षणं— "मण्डले. कपिलैर्युक्तैः सर्पाभा पञ्चसर्पिणी । पञ्चारत्निप्रमाणा ।" सु.चि.३०अ. ।

**पञ्चसार(राख्य)पानकम्** । क्ली, पुं । पानकभेदे । पानादिरसभेद । स चाभिनवमत्स्याक्तरसः कदलीपनसमिश्रोऽम्लरसमिश्रश्च । तदुक्तं—"द्राक्षामधूकखर्ज्जूरकाश्मर्य्यैः सपरूषकैः । तुल्यांशैः कल्पितं पूतं शीतं कर्पूरवासितम् ।" वा.सू.५अ. । काश्मीरमधुखर्ज्जूरमृद्वीकाफालसाफलं । तेषां जल गृहीत्वा तु एकीकृत्य पिबेदनु । चातुर्जातेन्दुमरिचशर्कराशार्द्रकादिकान् । वस्त्रेण गालयित्वा तत् पञ्चसाराख्यपानकम् । गुरु वृष्यं धातुकरं पित्तकृष्णमदाहनुत् ॥" वै.द्रव्यगुण. ।

**पञ्चसाराम्बु** । क्ली । खर्ज्जूराद्यम्बुनि । "मधुखर्ज्जूरमृद्वीकापरूषकसिताम्भसा ।" वा.चि.२अ. ।

**पञ्चसिद्धौषधी** । स्त्री । पञ्चकन्दात्मकसिद्धौषधिषु । रा.नि.व.२२ । See सिद्धौषधी ।

**पञ्चसुगन्धिकम्** । क्ली । कर्पूरकङ्कोललवङ्गजातीफलपूगेषु । "कर्पूरकङ्कोललवङ्गपुष्पगुवाकजातीफलपञ्चकेन । समांशभागेन च योजितेन मनोहरं पञ्चसुगन्धिकं स्यात् ॥" रा.नि.व.२२ ।

**पञ्चक्षारम्** । क्ली । यवपलाशसर्ज्जतिलमुष्ककक्षारेषु । "यवमुष्ककसर्ज्जानां पलाशतिलयोस्तथा । क्षारैव पञ्चभिः प्रोक्तं पञ्चक्षाराभिधो न च. ॥" रा.नि.व.२२ । पञ्चलवणे । वै.निघ. ।

**पञ्चक्षीरद्रुमः** । पुं । वटाश्वत्थोदुम्बरपर्कटीप्लक्षाख्येषु । इ., दरकत, दउडुमर, पाकुड़, पइकुत । हि.पं. द्रष्ट.वि.भि.र्इड़ । चम. – ७

दुम्बरवटाश्वत्थवेतसप्लक्षेषु वर्त्तते । "उदुम्बरो वटोऽश्वत्थो वेतसः प्लक्ष एव च ।" प.प्र.१अ. । वेतसोऽत्र गम्भमुण्ड इति उत्तरदेशे प्रसिद्धः । प्लक्ष इति वटः । अथवा पर्कटीत्यश्वत्थभेदः । प.प्र.१अ.। See क्षीरवृक्षः ।

**पञ्चाङ्गम्** । क्ली । योगविशेषः । स चैकस्य वृक्षस्य समभागमिलितत्वक्पत्रफलमूलपुष्पात्मकः । "त्वक्पत्रकुसुमं मूलं फलमेकस्य शाखिनः । एकत्र मिलितं तस्मिन् पञ्चाङ्गमिति संज्ञितम् ॥" रा.नि.व.२२ । पुं । कच्छपे । श मा. ।

**पञ्चाङ्गगुप्तः** । पुं । कच्छपे । त्रिका. ।

**पञ्चाङ्गिकपञ्चगणः** । पुं । स्वल्पमहत्तृणवल्लीकण्टकसंज्ञकेषु पञ्चमूलेषु । सि यो व्रणा चि ।

**पञ्चाङ्गीबन्धः** । पुं । पञ्चाङ्गुलाकारव्रणबन्धविशेषे । "चिबुके चापि पञ्चाङ्गी हनुसन्धौ विसन्धिते । स्वेदयित्वा स्थिते सन्धौ कुर्य्यात्पञ्चाङ्गुलाकृतिम् ॥" सु.शा.ड. । सु.चि.२अ. ।

**पञ्चाङ्गुलः** । पुं । श्वेतैरण्डे । एरण्डवृक्षे । रा.नि.व.८ । क्ली । तेजपत्रे । वै.निघ. ।

**पञ्चाङ्गुली** । स्त्री । तक्काक्षुपे । रा.नि.व.४ । ऊर्द्धजत्रुजव्रणस्य बन्धनविशेषे । सु.सू.१८अ. ।

**पञ्चाज्यम्** । क्ली । छागदध्यादिपञ्चके । वै.निघ.२भ जीर्णज्व.चि. ।

**पञ्चात्मा** । पुं । शरीरान्तर्वायौ । यथा—"प्राणोऽपानः समानश्चोदानव्यानौ च वायवः ।" निदा.।

**पञ्चाननः** । पुं । शिवे । सिंहे । मे. ।

**पञ्चाननरसः** । पुं । हृद्रोगाधिकारे रस. । पाठः—"सूतकस्यो द्विवेधांशा मर्द्दयेद्गोस्तनीद्रवैः । यष्टिखर्ज्जूरसलिलैर्दिनं हृद्रोगजिद्रसः । धात्रीचूर्णं सिताभासु पिबेद्रोगापनुत्तये ॥" रस.चि. ।

**पञ्चामृतम्** । क्ली । दुग्धादिपञ्चविधद्रव्यसमाहारे । गुडूचीगोक्षुरतालमूलीमुण्डिकाशतावरीणां मिलितसमभागे । "गुडूची गोक्षुरश्चैव मुषली मुण्डिका तथा । शतावरीति पञ्चानां योगः पञ्चामृताभिधः ॥" गुलञ्च, गोखरू, तालमूली, मुण्डी, शतमूली । रा.नि.व.२२ । पञ्चौषधं पञ्चामृतमुच्यते । द्वितीय देवपूजनार्थम् । दुग्धमधुशर्करादधिघृतेषु । दुध, दधि, घृत, चिनि, मधु ॥

**पट्टी** (दन्) । पु, स्त्री । लोध्रवृक्षे । भटीभ । रक्तरोध्रे । रा नि व ६ ।

**पणः** । पु । कपर्दे । वै निघ २भ मधुरत्व चि विषाक्तिकाकषाये । ५गुञ्जामाने प्र प्र ।

**पणदा** । स्त्री । पत्राम्बायाम् । रा नि व २२ ।

**पणश (स)** । पु । (Artocarpus integrifolia) कण्टालुफलवृक्षे । कँटाल गाछ । हि कटहर । म फणस । क हलसिन । तें छत् पणस । ता पिल्ला । गुणा —फल मधुर पिच्छिल गुरु हृद्य बलवीर्यवृद्धिकर श्रमदाहशोषघ्न रुचिकर ग्राहि दुर्जरञ्च । तद्बीजम् ईषत्कषाय मधुर वातल गुरु तत्फलविकारघ्नं त्वग्दोषघ्नञ्च । बालपणसफलन्तु नीरस हृद्यञ्च । मध्यपक्व तत् दीपन रुचिदं लवणादियुक्तञ्च । रा नि व ११ । पक्वफल रक्तवर्द्धक मधुरं शीतल दुर्जरं वातपित्तघ्नं श्लेष्मवृद्धकबलकरञ्च । तद्बीजं रक्तपित्तघ्न स्वादु फल तुल्यगुणञ्च । तदपक्वफल कषायं स्वादु वातल शीतलञ्च । राज । तन्मज्ज(कुँति)गुणा —शुक्रलं विदोषघ्न विशेषेण गुल्मिनां न हितम् । रा नि व ११ । अस्य क्वाथ मांसग्रन्थ्यशोमि, तन्मज्ज(कुँति) भण्डरी, कोमलपल्लव, चर्मरोगे च हित ।

**पणास्थिकम्** । क्ली । वराटके । कडि । विका । हे च । [See चावर्त्त ।

**पणिकावर्त्तः** । पुं । राजावर्त्तमणौ । प सु ।

**पण्ड (क.)** । पु । नपुंसके । भम ।

**पण्यविलासिनी** । स्त्री । नखीनामगन्धद्रव्ये । रा नि व १२ । [टिको । वै निघ ।

**पण्या** । स्त्री । ज्योतिष्मतीलतायाम् । मदार

**पण्यान्ध (न्धा)** । पुं स्त्री । स्वनामख्यातव्रीहि । म पणधे । कं हनजेमूद । सा दीर्घा मध्या ह्रस्वा च इति त्रिधा । एतासु मध्यमा रसवीर्य विपाकेषु गुणाधिका । अपरञ्च समवीर्ये तिक्तं क्षार सारञ्च, तत्कालभग्नघातशरीरोपयञ्च । रा नि व,८ ।

**पतग** । पुं । पक्षिणि । भम ।

**पतङ्ग. (म )** । पु । पक्षिणि । भम । त्वद्भुमि । अलनभूकृक्षे । रा नि व १६ । रक्तशाली । मै, । वा सू ६भ । च सू २७भ । क्ली । पारदे । मै. । पतङ्गचन्दने । रक्तम् काठ । श च ।

**पतङ्गम** । पु । पक्षिणि । व्याकरणम् ।

**पतङ्गिका** । स्त्री । पुत्तिकानाममधुमक्षिकायाम् । भम ।

**पतत्त्रम** । क्ली । पक्षे । भम ।

**पतत्रि (त्री)** । पु । पक्षिणि । भम ।

**पतद्भीरु** । पु । श्येनपक्षिणि । वाज । श र ७ ।

**पतम. (स )** । पु । पक्षिणि । पतङ्गे । छत्रा ।

**पताका** । स्त्री । चिह्ने । जटा ।

**पति** । पु । मूले । गतौ । भम. ।

**पतिम्बरा** । स्त्री । कृष्णजीरके । श च ।

**पतिश्याय.** । पु । प्रतिश्याये हि ।

**पतेर** । पुं । पक्षिणि । भाड़की छत्रा ।

**पत्** । पु । पादे । रा नि व १८ ।

**पत्त(त्र)ङ्गम्** । क्ली । (Caesalpinia sappan) रक्तकाष्ठविशेषे, पत्राङ्गि । वकम् काठ । हि पतङ्ग । तें बौकतुकट्टु । छत् वकमी । गुर्ज पारस ता वट्टी । र मा । भा उ बाजी । गुणा —“पत्तङ्ग मधुर शीतं पित्तश्लेष्मव्रणास्रनुत् ॥ हरिचन्दनवद्य विशेषाद्दाहनाशनम् । चन्दनानि च सर्वाणि सदृशानि रसादिभि । गन्धेन तु विशेषोऽस्ति पूर्वं श्रेष्ठतमो गुणे । भा । रक्तचन्दने । श र । सु चि ११व । “पत्तङ्ग रक्तचन्दनम् ।” भा मूत्र रा चि कुङ्कुमाद्यतैले । काष्ठक्वाथ रक्तो भाकुल्यकारी, फलक्षयकारी च । पु । भद्रराजी । भीमराज । र मा । भैमराजे । (श्यकराज) ।

**पत्तूर (रा)** । पु,स्त्री । शालिञ्चशाके । र मा । च द सि यो क्लमि चि । सु चि १८भ । जलपिप्पल्याम् । पकटीक्ष । वै निघ । श्रमीवृक्षे । भैमरा चि । क्ली । कुचन्दने । भा । सु मू १८भ वातशमने । पतङ्गे । वै निघ. ।

**पत्त्रम्** । क्ली । दले । पर्णे । भम । तेजपत्रे । रा नि व ६ । सुमू ३८म एम दि । भा चि १भ । “पत्र कटुकरोहिणी ।” परिभाषा । मै ।

**पत्रक,** । पुं । दमनकवृक्षे । रा नि व ११ ।

ज्वरामये रक्तातिसारे च परिणते हितः। रक्तच-न्दने। चम.। भूर्जपत्रे। पत्रकाष्ठे। मे.। See पत्तङ्गम्।

**पत्राढ्यम्**। क्ली। तृणाम्लद्रव्ये। गन्ध तृणवि-शेष। पर्वतद्रव्ये। रा.नि.व.८। पत्राङ्गचन्दने। रा.नि.व.१२। पिप्पलीमूले। रा.नि.व.६। बभ्रु-पत्रहरिताले। तालीशपत्रे। वै.निघ.।

**पत्राम्ला**। स्त्री। चुक्रिकायाम्। चूका पालङ्। भा.। See चुक्रा। [कासाली। रा.नि.व.७।

**पत्रालुः**। पु। इक्षुदर्भद्रव्ये। रा.नि.व.८।

**पत्रावलिः (ली)**। स्त्री। गैरिके। श.च.। ईश्वरीलतायाम्। वै.निघ.।

**पत्रिकम्**। क्ली। तेजपत्रे।

**पत्रिका (ल्का)**। स्त्री। जातीपत्र्याम्। जावि-त्री। वै.निघ.२भ.क्षमि.चि.सुवर्चिकादिचूर्णे।

**पत्रिकाख्य**। पुं। कर्पूरभेदे। रा.नि.व.१२।

**पत्रिकापत्रम्**। क्ली। तालीशपत्रे। वै.निघ.।

**पत्रिणी**। स्त्री। नवाङ्कुरे। पल्लवे। श.च.।

**पत्री (इन्)**। पुं। शालवृक्षे। र.मा.। पक्षिवि-शेषे। श्येनपक्षिणि। मे.। स्त्री। दमनकक्षुपे। दना। च.द.महासुगन्धतैले। गङ्गापत्री। रा.नि.व.१०। दुरालभायाम्। खदिरवृक्षे। तालवृक्षे। जातीपत्र्याम्। वै.निघ.। महातेजपत्रे। च.द.वा.व्या.चि.महाराजप्रसारणीतैले।

**पत्रैला**। स्त्री। एलायाम्। वै.निघ.।

**पत्रोपस्कर:**। पु। कासमर्दक्षुपे। हारा.।

**पत्रोर्णः**। पु। श्योनाकवृक्षे। अम.। धौतकौशे। वै.निघ.। पत्रोर्णवृक्षे। क्ली। धौतकौशेये। अम।

**पत्रोल्लासः**। पुं। पुष्पकलिकायाम्। वै.निघ.।

**पथिका**। स्त्री। कृष्णद्राक्षायाम्। रा.नि.व.११।

**पथिद्रुमः**। पुं। पक्वखदिरे। रा.नि.व.८। खदिरवृक्षे। जटा.।

**पथ्यम्**। क्ली। पादाहारे। "पादाहारं पथ्यमा-हुः।" रा.नि.व.२०। सैन्धवे। वै.निघ.। सामुद्र-लवणे। हितभोजने। भ.च.। पुं। हरीतकीवृ-क्षे। श.मा.। तण्डुलीयशाके। वै.निघ.।

**पथ्यकारी**। स्त्री। रक्तकशाली। रा.नि.व.१६।

**पथ्यका**। स्त्री। मेथिकायाम्। वै.निघ.।

**पथ्यकारी (इन्)**। पु। षष्टिकधान्ये। रा.नि.व.१६।

**पथ्यभोजनम्**। क्ली। हितभोजने। भा।

**पथ्यशाकः**। पुं। तण्डुलीयशाके। नटिशाक। रा.नि.व.५।

**पथ्या**। स्त्री। हरीतक्याम्। भा.पू.१भ। रा.नि.व.११। च.द.वि.ज्व.चातुर्थके। चिर्भटायाम्। वन्ध्याकर्कोटक्याम्। मृगादन्याम्। रा.नि.व.२२।

**पथ्यापथ्यम्**। क्ली। रोगाणां हिताहितद्रव्ये।

**पथ्यापथ्यविधिः**। पु। रोगाणां पथ्यापथ्य-निर्णयग्रन्थे। [लुनि। मे.।

**पदम्**। क्ली। पादे। रा.नि.व.१८। वाक्ये। व-

**पदकम्**। क्ली। निष्कमितस्वर्णे। वै.निघ.।

**पदन्यासः**। पुं। गोक्षुरक्षुपे। श.च.।

**पदरथी (इन्)**। पुं। पादुकायाम्। त्रिका.।

**पदरोहिणी**। स्त्री। वन्दाके। मान्दुरा। वै.निघ.। [याम्। वै.निघ.।

**पदवी**। स्त्री। भिण्टीक्षुपे। झाँटी। नागवल्ला

**पदाकः**। पुं। सर्पे। वै.निघ.।

**पदाङ्गी**। स्त्री। रक्तलज्जालुकायाम्। वै.निघ.। हंसपाद्याम्। रा.नि.व.५।

**पदारोही (इन्)**। पुं। वटवृक्षे। मद.५व.।

**पदार्थः**। पुं। द्रव्यगतरसवीर्यादौ। स पञ्च-विध.—"द्रव्ये रसो गुणो वीर्यं विपाकः शक्तिरेव च। पदार्थाः पञ्च तिष्ठन्ति स्वं स्वं कुर्वन्ति कर्म च॥" भा। "योऽर्थोऽभिहितः सूत्रे पदे वा स पदार्थः।" सु.उ.६५अ.।

**पद्मिका**। स्त्री। रक्तलज्जालुकायाम्। हंसपा-द्याम्। लज्जालुकायाम्। रा.नि.व.५। [१०च.।

**पदेन्द्राभः**। पुं। विष्किरपक्षिविशेषे। च.सू.

**पद्धिमम्**। क्ली। पादशीतलतायाम्। व्याक.।

**पद्मम्**। पुं, क्ली। (Nelumbium Speciosum, Salvadora Indica.) कमले। नल।

**पद्मपत्रा** । स्त्री । स्थलपद्मिन्याम् । वै निघ. ।

**पद्मपर्णम्** । क्ली । पद्मपत्रे । वै.निघ. । पुष्कर-मूले । भ.टी ।

**पद्मपुष्करजम्** । क्ली। पुष्करमूले । रा नि व.६।

**पद्मपुष्पः** । पुं । पारिभद्रकवृक्षे । पिकाङ्गपक्षि-णि । वै.निघ. । (Webera Corymbosa.) कर्णिकारवृक्षे । कनकै फूल । श च. ।

**पद्ममुखी** । स्त्री । कण्टकार्य्याम् । वै निघ. । दुरालभायाम् । श.च. ।

**पद्ममूलम्** । क्ली । पद्मकन्दे । शालुक । रा. नि.व.१० । चि.क क.गर्भ.चि. ।

**पद्मरजः** । क्ली । पद्मकेसरे । वा.सू.३ अ प्रियङ्गा दिः । "पद्मादृशौ योजनवल्लरनन्ता ।"

**पद्मरागः** । पुं । रक्तवर्णे माणिक्यभेदे । See माणिक्यम् ।

**पद्मरेणुः** । पुं । पद्मकेसरे । वै.निघ. ।

**पद्मलाञ्छनः** । पुं । सूर्य्ये । मे. ।

**पद्मवती** । स्त्री । स्थलपद्मिन्यां । वै.निघ. । कमलिन्यां । पद्मेर झाड । रा.नि व.५ ।

**पद्मवर्णः** । त्रि । लोहितवर्णे । भा.४भ । "प द्मवर्णो महापद्म. ।" [पुष्करमूले । जटा. ।

**पद्मवर्ण(क)म्** । क्ली । पद्मकाष्ठे । वै निघ. ।

**पद्मवीजम्** । क्ली। कमलवीजे । पद्मेर वीचि। हिं कमलगट्टा । पद्माच इति महाराष्ट्रकर्णाटयो. र्ख्यातम् । गुणाः—कटु स्वादु पित्तकर छर्दिकर दाहरक्तप्रमर्न पाचनं रुच्यञ्च । रा नि.व.१० । "विष्टम्भि वृष्यं कफञ्च गर्भसंस्थापक परम् । कफ-वातकरं बल्य ग्राहि पित्तास्रजित् .. ॥" भा. ।

**पद्मवीजाभम्** । क्ली । मखान्नफले । माखना इति भाषा । भा. । [कन्दीवृक्षे । रा.नि व.२१ ।

**पद्मवृक्षः** । पुं । पद्मकाष्ठतरौ । रा.नि.व.१२ ।

**पद्मयायिनी** । स्त्री । जलचरपक्षिभेदे । वै. निघ. ।

**पद्मा** । स्त्री । पद्मचारिण्याम् । स्थलपद्म । रा. नि व १३। च.चि २अ. । वा म १५अ.। भार्ग्याम् । वामनहाटे । च सू.४अ. । चि ३अ । च द.गर्भ स्रावे । भा.म.४भ गर्भ-चि । सु.चि.१७. । "स-मङ्गा रजनी पद्मा ।" तन्नामकौषधी । या पद्मा-कारा पद्मगन्धा पद्मवद्रक्ता च । "पद्माकारा पद्म रक्ता पद्मगन्धा ।" च.चि.१अ.कन्दर्पसारतैले । म ञ्जिष्ठायाम् । मृणाले । वै.निघ. । लवङ्गे । अम. । मनमादेव्यां । मे. । कञ्जिकायां । श.र. । कुसुम्भ-पुष्पे । र.मा. ।

**पद्माकरः** । पु । तडागे । अम ।

**पद्माटः** । पुं । चक्रमर्दक्षुपे । चाकन्दा । अम । भैष.सु री.चि ह.खदिरवट्यां । क्ली । तद्बीजे । म हाभल्लातकगुडे ।

**पद्मान्तरम्** । क्ली । पद्मपत्रे । वै.निघ. ।

**पद्मालया** । स्त्री । लवङ्गलतायाम् । अम. ।

**पद्मावती** । स्त्री । स्थलपद्मिन्याम् । जटा । मनसादेव्यां । श.र ।

**पद्माह्व(य)म्** । क्ली । पद्मकाष्ठे । भा । वै. निघ.२भ.सर्व्वज्व चि.सुदर्शनचूर्णे । च द सु री.चि. वृहत्खदिरवट्यां । [नि व ५ ।

**पद्माह्वया (ह्वा)** । स्त्री । स्थलपद्मिन्यां । रा.

**पद्माक्षम्** । क्ली । पद्मवीजे । रा.नि व १० ।

**पद्मिनी** । स्त्री । पद्मखण्डे, कमलिन्यां । पद्मेर झाड । गुणाः—मधुरा तिक्ता कषाया शिशिरा पित्तघ्नी कृमिघ्नी शोषवान्तिभ्रान्तितापक्रमिघ्नश्च । रा.नि व १०। "मूलनालदलोत्फुल्लफलैः समुदिता पुन । पद्मिनी प्रोच्यते ।" भा.पु व. । पद्मे । त्रिक । मृणाले । श मा. । हस्तिन्यां । धरणि. ।

**पद्मिनीकण्टकः** । पुं। क्षुद्ररोगे । पद्मकाँटा। "कण्टकैराचितं वृत्तं कण्डूमत्पाण्डुमण्डलं पद्मिनी कण्टकप्रख्यैस्तदाख्यं कफवातजम् ।" सु.नि.१३अ.।

**पद्मी (द्मिन्)** । पुं । गजे । अम. । [र.मा ।

**पद्मोत्तम(र)विकासः** । पुं। कुसुम्भपुष्पवृक्षे।

**पद्मोत्तरः** । पु, क्ली। कुसुम्भवृक्षे, तत्पुष्पे । रा. नि व.४ । स्त्री । कुसुम्भबीजे । वै.निघ. ।

**पद्मोद्भवा** । स्त्री । मनसादेव्याम् । पुराणम् ।

**पनसः (सः)** । पुं । बहि कण्टकमहाफलवृक्षे, पनसवृक्षे । काँठाल गाछ । हिं कटहल । भा. । मत्स्यविमर्दविशेषे । द्र.कल्प.१अ. ।

**परपत्रिका** । स्त्री। क्षुद्रचुञ्चुपे । रा.नि.व.४।

**परपुष्टः** । पुं । कोकिले । रा.नि.व.१८ ।

**परपुष्टमहोत्सवः** । पुं । आम्रवृक्षे । श मा. ।

**परपुष्टा** । स्त्री । कोकिलायाम् । वै.निघ. ।

**परभृतः (त्)** । पु । कोकिले । काके । अम. ।

**परमदः** । पुं । सुरापानजन्यरोगभेदे । लक्षणम् —"श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च विण्मूत्र सक्तिरथ तन्द्रिररोचकश्च । लिङ्गं परस्य च मदस्य वदन्ति तज्ज्ञा तृष्णा रुजा शिरसि सन्धिषु चापि भेदः ॥" मा.नि ।

**परमपूतिकः** । पु । अहिफेने । प.मु ।

**परमा** । स्त्री । सुगन्धद्रव्यविशेषे, गन्धगन्ध्याम् । तदालेपनं ज्वरघ्नं रक्षोघ्नञ्च । राज.। च द.वा व्या. चि.महाराजप्रसारणीतैले ।

**परमाणुः** । पु । रजसस्त्रिंशत्तमे भागे । "जा-लान्तरगते भानौ यत् सूक्ष्मं दृश्यते रजः । तस्य त्रिंशत्तमो भागः ।" प प्र.१ख ।

**परमान्नम्** । क्ली । क्षीरिकायाम्, पायसे । पा(य)सम्,पेनमाग्र । तत्साधनप्रणाली यथा—"शुद्धेऽर्द्धे पक्के दुग्धे तु घृताक्तांस्तण्डुलान् क्षिपेत् । ते सिद्धा क्षीरिका ख्याता सा सिताज्ययुतोत्तमा ॥ गुणा.— क्षीरिका दुर्जरा बल्या धातुपुष्टिप्रदा गुरुः । वि ष्टम्भिनी हरेत् पित्तरक्तपित्ताग्निमारुतान् ॥" भा.।

**परमायुः** । क्ली । जीवितकाले । यथा—"शत वर्षाणि विशत्या निशाभि पञ्चभि सह । परमा युरिदम्प्रोक्तं नराणां करिणामिह ।" श.मा. ।

**परमायुधः** । पु । चक्रनड्वे । श च ।

**परमृत्युः** । पु । काके । त्रिका ।

**परमेटः** । पु । महानिम्बवृक्षे । र.मा. ।

**परमेष्ठिनी** । स्त्री । ब्राह्मीक्षुपे । वामनहाटी । रा.नि.व.४ ।

**परवः** । पु । (Eclipta prostrata) नील भृङ्गराजे । केशराज । त्रिका । [शि ।

**परला** । स्त्री । पटोलवृक्षे । रस र कुष्ठशैलेन्द्र

**परर्गोकैपणा** । स्त्री। परलोकस्य गवेषणायां । च सू ११ष. ।

**परशम्** । क्ली । मणिविशेषे । परश पाथर । पुराणम् ।

**परशुच्छिन्नः** । पुं,स्त्री । कुठारिया इति ख्या-ते वृक्षे । कोदाले, कुडले । सयङ लीहचा लने । कन्दगुडूच्याम् ।

**परशुरामः** । पुं । रसराजशिरोमणिकारे ।

**पराक्पुष्पः (ष्पी)** । पुं । धूलीकदम्बवृक्षे । रा.नि व.६ । श्वेतापामार्गे । रा नि.व ४ ।

**परागः** । पु । पद्मकेसरे । कर्पूररजसि । वै. निघ । पुष्परेणौ । अम. । चन्दने । मे. ।

**परागपुष्पः** । पुं । धूलीकदम्बे । वै निघ ।

**पराचीनः** । त्रि । पराङ्मुखे । श.उ.२८ष. ।

**पराञ्जः** । पुं । तैलनिष्पीडनयन्त्रे । फेने । श.र ।

**पराप्रियः** । उलुपतृणे । ऊशू । श.च । का सतृणे । वै.निघ ।

**परादिगुणाः** । पुं । परापरत्वादौ । यथा— "परापरत्वे युक्तिश्च सङ्ख्या संयोग एव च । विभा गश्च पृथक्त्वञ्च परिमाणमथापि च । संस्कारोऽभ्यास इत्येते गुणा ज्ञेया परादय ॥" च । [श च. ।

**परानसा** । स्त्री । औषधप्रयोगे, चिकित्सायां ।

**परान्नम्** । क्ली । पराने । पाकराज ।

**परापरम्** । क्ली । पदपकफले । भा ।

**पराभिधम्** । क्ली । कुङ्कुमे । वै.निघ. ।

**परामृतम्** । क्ली । वर्षोपले । त्रिका. ।

**परारुः** । पु । कारवेल्लके । त्रिका. ।

**पराफक.** । पु । पापाथि । त्रिका. । [निघ. ।

**परार्द्धम्** । क्ली । चन्दने । कुङ्कुमे । उशीरे । वै.

**परावतम्** । क्ली । पदपकफले । रा.नि व.११।

**परावरम्** । क्ली । पदपकफले । रा.नि.व.११।

**परावेदी** । स्त्री । वृहत्याम् । दाड्ड । की वारम् । [स्मकारे ।

**पराशरः** । पु । तन्नामकायुर्वेदतन्त्रकारे । See

**पराश्रया** । स्त्री । माधवीलतायाम् । वै निघ. । वन्दायां । पद्मगाड़ा । श.च. । [सु म.११ष. ।

**परासङ्गः** । पु । अपतीर्थे । मौक्तिकरोपे ।

**परिकर्त्तनम्** । क्ली । अधश्छेदे । सु.सू.८ अ. । छेदनवद्वेदनाभवे । वा.टी चि.१ अ. ।

**परिकर्त्तिका** । स्त्री । कर्त्तनवत्पीडायां । च. चि.३ अ । वमनविरेचनव्यापद्विशेषे । सु चि ३४ अ.।

**परिकर्म्म** । क्ली । अभ्यङ्गे । परिचर्य्याकरणे । वै.निघ. । कुङ्कुमादिना कायप्रसाधने । अम भ. ।

**परिकर्म्मी** । त्रि । सर्व्वकर्म्मकर्त्तृषु, परिचारकेषु । सु सू.५ अ. ।

**परिक्रमसहः** । पु । छागे । त्रिका. ।

**परिगर्भिकः (भवः)** । पु। बालरोगविशेषे । এড়্যা লাগা । हि चड्डीडीति लोके । "मातुः कुमारो गर्भिण्याः स्तन्य प्राय पिवन्नपि । कासा ग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः । युज्यते कोष्ठवृद्ध्या च तमाहुः परिगर्भिकम् । रोगं परिभवाख्य च तत्र युञ्जीत दीपनम् ॥" भा. । [भ. ।

**परिग्रहः** । पु। स्त्रियाम् । मूले । कन्दे । अम.

**परिघ.** । पु । सञ्जातकमूढगर्भविशेषे, यत्र ग र्भ परिघ इव योनिमुखमावृत्य तिष्ठेत् । यथा— "योनो स्थित. स परिघ परिघेन तुल्य ।" सु. नि.८ अ ।

**परिचरः** । पु । भृत्ये, सेवके । र.मा. ।

**परिचरकर्म्म** । क्ली । सेवाकार्य्ये ।

**परिचर्य्या** । स्त्री । सेवायाम् । अम. । श.र. ।

**परिचारकः** । पु । सेवके । अम. । लक्षण —"स्निग्धो जुगुप्सुर्बलवान् युक्तो व्याधितरक्षणे । वैद्यवाक्यकृदश्रान्तो युज्यते परिचारक ॥" भा ।

**परिच्छदः** । पु । परिधानवस्त्रे, आच्छादने । भागवत । परिवारे । हे.च. ।

**परिणतः** । त्रि । परिपक्के । अम ।

**परिणामः** । पु। परिपाके । विकारे । वै निघ।

**परिणामज(शूल)म्** । क्ली । पक्तिशूले । रा नि.व २० । [विकारे । अम. ।

**परिणाहः** । पु । वर्त्तुलतायाम् । सु सू.७ अ ।

**परितापः** । पु । रोगे । वै निघ. । कम्पे । विश्व । उष्णतायाम् । च. ।

**परितिक्तः** । पु । निम्बवृक्षे । वै.निघ. ।

**परिदरः** । पु । दन्तमूलगतमुखरोगे । लक्षण —"दन्तमांसानि शीर्य्यन्ते यस्मिन्ष्ठीवति चाप्यसृक् । पित्तासृक्कफजो व्याधि. ज्ञेय परिदरो हि' स. ।" सु नि १६ अ ।

**परिधूमायनम्** । क्ली । धूमोद्गारे । ঢোঁওয়া ঢেকুর । सु नि ६ अ. । [सु ११अ. ।

**परिपचनम्** । क्ली । *तैलपाचनिकायां* । च।

**परिपाकः** । पु । परिणामे । भा. ।

**परिपाकिनी** । स्त्री । *त्रिवृतायां* । श.च । ।

**परिपिष्ट(क)म्** । क्ली। सीसके । रा नि व.१३।

**परिपुटनम्** । क्ली । पाककरणे । वै निघ. ।

**परिपुष्करा** । स्त्री । कर्कटीभेदे, गोडुम्बायां । বাঙ্গেগামুক । श.च । [पवित्रीकृते ।

**परिपूतम्** । क्ली । अपतुषधान्ये । मनु । त्रि ।

**परिपेलम्** । क्ली । कैवर्त्तिमुस्तके । प सू.च.वि. ८ अ. ।

**परिपेलवम्** । क्ली । कुटन्नटे, जलमुस्तायाम् । কেওট মুতা । वा.सू १५ अ रोध्रादि । "शैलवा-लपरिपेलवमोचाः ।" मुस्तायां । अ.द १२ अ. ।

**परिपेल्लम्** । क्ली। जलजातद्रव्यविशेषे, जलमुस्तायाम् । জলের মুতা, কেওট মুতা । म जल-समुद्भवी । फ वलिगड्ड । गुणा —कटूर्ण कफ वातघ्न व्रणघ्न दाहघ्नम् आमशूलघ्न रक्तदोषघ्नम् । रा.नि व ६ ।

**परिपोटः (क')** । पु । कर्णपालीगतरोगे । কাণের পাতার রোগ । लक्षण—"सौकुमार्य्यात् चिरोत्सृष्टसहसाभिप्रवर्धिते । कर्णशोफो भवेत् पाल्यां सरुज परिपोटवान् ॥" सु चि २५ अ । तद्भेदे । वा.उ १८ अ. ।

**परिपोषणम्** । क्ली । विङ्गुनि । अ.द.१२अ.।

**परिप्लुता** । स्त्री । योनिरोगविशेषे । लक्षण यथा—"परिप्लुतायां भवति ग्राम्यधर्मे रुजा भृशम् ।" सु. । तथा —"पित्तलाया नृसंवासे क्षवथूद्गारधारणात् । पित्तसम्मूर्च्छितो वायुर्योनिं दूष यति स्त्रिया । शूना स्पर्शाक्षमा सर्त्तिनीलपी तमसृक् स्रवेत् । श्रोणिवङ्क्षणपृष्ठार्त्तिज्वरार्त्तायाः

**परिस्रावी** (इन्) । पुं । कफजभगन्दरे । लक्षणं यथा—"कण्डूयनो घनस्रावी कठिनो मन्दवेदन । श्वेतावभासः कफजः परिस्रावी भगन्दरः ॥" भा.नि. । त्रि । निरन्तरस्रावशीले । मा ।

**परिस्राव्युदरम्** । क्ली । उदररोगभेदे । लक्षणं यथा—शल्यं यदन्नोपहितं तदन्तं भिनत्ति यस्यागतमन्यथा वा । तस्मात् गुदान्तात् सलिलप्रकाशः स्रावः स्रवेद्वै गुदतस्तु भूय. । नाभेरधश्चोदरमेति वृद्धिं निस्तुद्यतेऽतीव विदह्यते च । एतत्परिस्राव्युदरम् ।" सु.नि.७अ. । [वै.निघ. ।

**परिस्रुतः** । त्रि । विस्रुतः चरिते । क्ली । मद्ये ।

**परिस्रुतदधि** । क्ली । वस्त्रगालितदधनि । छाका दई । गुणाः—वातघ्नं कफकृत् स्निग्धं बृंहणं पित्तघ्नञ्च । सु.सू.४५अ. । [रुक्ष्या । मै ।

**परिस्रुता** । स्त्री । द्राक्षामद्ये । वै.निघ. । वा-

**परिस्रुत्** । स्त्री । मद्यसामान्ये । रा.नि.व.१४ ।

**परिहारः** । पुं । तस्यैव दोषवचनस्य परिहरणे । यथा—"नित्यमात्मनि शरीरस्थे जीवविलिङ्गान्युपलभ्यन्ते । तस्य पुनरपगमान्नोपलभ्यन्ते । त स्मादन्य. शरीरादात्मा नित्यश्चेति ।" च वि.८अ. ।

**परिहार्य्यम्** । क्ली । कुष्ठौषधे । कूड़ । वै निघ. ।

**परिक्षेपी** (इन्) । पु । वातपित्तजभगन्दरे । "वातपित्तात्परिक्षेपी परिक्षिप्य गुदं गति । जा यते परितस्तत्र प्राकारपरिखेव च ॥"

**परीतिः** । स्त्री । पुष्पाद्यने । वै.निघ. ।

**परीरः** । पुं । कारवेल्ले । क्ली । तत्फले । त्रधा. ।

**परीवर्त्तः** । पु । कच्छपे । वै निघ ।

**परीष्टिः** । स्त्री । परिचर्य्यायाम् । मै ।

**परुः** । पुं । अङ्गुलिसन्धौ । रा.नि.व.१८ । वंश ग्रन्थौ । बाँशेर गाँइट । अयं निर्गुणः । रा.नि व.६ । परुषकवृक्षे । वै.निघ. ।

**परुदारः** । पुं । अश्वे । श मा. ।

**परु(रू)षः** । पुं । परुषकवृक्षे । रा.नि.व.११ । वत्सपन्नौ । धामनवृक्षे । वै.निघ. । नीलझिण्टयाम् । श.च । तदामकवायव्यकोटे । सु कल्प.८अ. । See कीट: । स्त्री (षा) । शतपदीभेदे । सु.कल्प. ८अ. । क्ली । परुषकफले । भा ।

**परु(रू)षकः** । पुं । (Zylocarpus Granatum or Grewia Asiatica.) स्वनामख्यातफलवृक्षे । फलसा फलेर गाछ, फलसा । हिं फल्सहे, शकरी, फलसा । मं पर्पका । कं बेट्टा । तें पुटिकी । स द्विधा ह्रस्वविटपभेदात् । सु. सू ३८अ.परुषकादिः । वा सू १५अ. । गुणाः— अम्लकटुकं कफरोगहरं वातघ्नं पित्तकरम् । इत्यामपरूषगुणाः । पक्वं तत् मधुरं रुचिप्रदं पित्तघ्नं तर्पणं शोफहरञ्च । तत्फलं मेहपित्तश्लेष्मवातघ्नम्। च्चि.१७अ. । "परुषकषायाम्लमामं पित्तकरं लघु । तत्पक्वं मधुरं पाके शीतं विष्टम्भि बृंहणम् । हृद्यं हृत्पित्तदाहास्रज्वरक्षयसमीरहृत् ॥" भा. । फलं मलसङ्ग्राहि शैत्यकरं । पत्र व्रणपिडकादौ हितम् । त्वक्कषाया शीतला च । द्रव्यगुणान्तरम् ।

**परुस्** । क्ली । परुषकफले । पर्व फल । रा. नि व.११ । ग्रन्थौ । अम. ।

**परुषकादिः** । पुं । तदादिगणकृतकषाये । स च परुषकवराद्राक्षाकट्फलकतकफलराजाह्वदाडिमशाकात्मकः तृष्णावातमूत्रघ्नः । वा.सू.१५ अ. ।

**परेष्टुका** । स्त्री । बहुवत्सायां गवि । अम. ।

**परैधितः** । पुं । कोकिले । श.मा ।

**परोटः** । पुं । घृतसिद्धरोटिकाभेदे । पराटा । वै.निघ. ।

**परोष्णी** । स्त्री । तैलपायिकायाम् । अम. ।

**पर्कटः** । पुं । पश्चात्तापे । क्रौञ्चपक्षिणि । वै. निघ. ।

**पर्कटिः** (टी) । स्त्री । प्लक्षवृक्षे । भा. ।

**पर्कटी** (इन्) । पुं । प्लक्षवृक्षे । पाकुड़ गाछ । तें जुव्विचेट्टु । प.मु. । र.मा. ।

**पर्जनी** (न्या) । स्त्री । दारुहरिद्रायाम् । प. मु. । रा.नि व ६ । [अम. ।

**पर्णम्** । क्ली । ताम्बूले । रा नि.व.११ । पत्रे ।

**पर्णः** । पुं । पलाशवृक्षे । रा.नि.व.१० ।

**पर्णकः** । पुं । मुनिविशेषाख्ये । भा.पू.१भ.आ.व. ।

म । किं पुनर्यदि युज्येत चन्दनोदीच्यनागरैः ॥" च द पि ज्व चि । भा. ।

**पर्पटी** । स्त्री । सौराष्ट्रमृत्तिकापरनामसुगन्धद्रव्ये । पक्कपर्पटी । हे.च.। पद्मावती, पपरी इति च उत्तरदेशप्रसिद्धे सुगन्धद्रव्ये । गुणा —"पर्पटी तुवरा तिक्ता शिशिरा वर्णलाघवा । विषव्रणहरी कण्डूकफपित्तास्रकुष्ठनुत् ॥" भा. । पलवयमाने । प.प्र. । पिष्टकभेदे । पांपर । उषा. । .

**पर्पटीरसः** । पु । ग्रेभज्जरे रस । रस १ भ गन्धक २ भ. भृङ्गराजरसेन मर्द्य । ताम लौह प्र. रसगन्धयो पादांश दत्त्वा एकत्र सम्मर्द्य पर्पटीवत् पचेत् । अथ सञ्चूर्ण्य निर्गुण्ड्यादिरसेन ७दिनानि मर्दयित्वा भाण्डारे, खेदयेत् । रस.कौ. र.सा स. ।

**पर्य(र्व्व)रीणम्** । क्ली । पर्व्वणि । पाव । श. र । पु । पर्णकृत्तरसे । पर्णशिरायां । मे. । पव-चूर्णरसे । श र. ।

**पर्पिकः** । पु, स्त्री । खञ्जे । व्याक. ।

**पर्य्यगः** । पुं । कटाहे । च सू.१५ष ।

**पर्य्यङ्कः** । पुं । खट्वायाम् । अम. ।

**पर्य्यङ्कपादिका** । स्त्री । कोलशिम्बां । श्वेत आलकुशी । भा १म.शा व ।

**पर्य्ययः** । पु । क्रमोल्लङ्घने, व्यतिक्रमे । अम. ।

**पर्य्यस्तिका (स्ती)** । स्त्री । पल्यङ्के । विका.।

**पर्य्यागतः** । त्रि । पक्के । सु चि.२१ष. ।

**पर्य्याप्तः** । त्रि । यथेष्ट. । क्ली । तृप्तौ । मे. ।

**पर्य्याप्तिः** । स्त्री । तृप्तौ । वै निघ. ।

**पर्य्यायः** । पु । क्रमे । अनुक्रमे । अम. ।

**पर्य्यायमुक्तावलिः** । स्त्री । द्रव्याभिधानविशेषे । [नि । मुद्रि । वाग्नि ।

**पर्य्युषितम्** । क्ली, पु । शिलायाम् । वै.निघ ।

**पर्व्व** । क्ली । ग्रन्थव्यां । वीशेर गिंटि । अम. । चतुर्द्दश्यादिषव्यो । अनुगिर पाव । मे. ।

**पर्व्वकम्** । क्ली । जानुसन्धौ । हाँटु । श्र.च ।

**पर्व्वणिका (णी)** । स्त्री । नेत्रसन्धिजरोगे । लक्षणम्—"ताम्रा तन्वी दाहशूलोपपन्ना रक्ताज्या पर्व्वणी वृत्तशोफा ।" सु उ.२ष । शाकविशेषे । सा च हस्तिशुण्डीति लोके । च सू.२७ष. ।

**पर्व्वतः** । पु । वृक्षे । किरातनिक्तके । वै.निघ. । शाकभेदे । मत्स्यभेदे । पाँकाल माछ । मे । राज. ।

**पर्व्वतकाकः** । पु । द्रोणकाके । हे.च. ।

**पर्व्वतजा** । स्त्री । गिरिजाख्यद्राक्षाविशेषे, यद्धारीति लोके । गुणा —"द्राक्षा पर्व्वतजा लघ्वी साम्ला श्लेष्मास्रपित्तकृत् ।" भा. ।

**पर्व्वतलवणम्** । क्ली । पर्व्वतजातलवणाख्यनामलवणविशेषे । हि सड । गुणा.—बलपुष्टिकरं रुच्यमयूनां हितञ्च । रा.नि.व ६ ।

**पर्व्वतनिम्बः** । पुं । महानिम्बे ।

**पर्व्वतभेदः** । पुं । करञ्जोडिपाषाणभेदे । भा म १म.मू कृ चि. ।

**पर्व्वतभेदी (इन्)** । पुं । पाषाणभेदे । पाथर कुचि । च द.मू.र.चि.। "पर्व्वतभेदिपत्र्यायाम् ।"

**पर्व्वतमोचा** । स्त्री । गिरिकदल्याम् । वनकदल्याम् । वीचे कला । रा नि.व.११ ।

**पर्व्वतवासिनी** । स्त्री । आकाशमांस्याम् । सूक्ष्मजटामांसी । रा.नि.व १२ ।

**पर्व्वताश्रयः** । पु । महाशिवे । रा.नि व १८।

**पर्व्वताह्वयः** । पु । धाराकदम्बवृक्षे । वै निघ ।

**पर्व्वतोद्भवम्** । क्ली,पु । हिङ्गुले । पारदे । वै निघ ।

**पर्व्वतोद्भूतम्** । क्ली । अभ्रकधातौ । वै.निघ. ।

**पर्व्वपुष्पिका (ष्पी)** । स्त्री । हस्तिशुण्ड्याम् । हातिशुँड़े । वा सू १५ष. । तच्छाकगुण — वातपित्तहर. । च.सू २७ष. ।

**पर्व्वभेदः** । पु । सन्धिभङ्गरोगे । तथा सन्धिदनायां यथा चालने भङ्गायवा जायते । च द ज्व चि । [रा नि व ५ ।

**पर्व्वमूला** । स्त्री । श्वेतायाम् । दूपराजिता।

**पर्व्वयोनिः** । पु। इक्षौ । वेतसे । वंशे । हे च।

**पर्व्वरुट्** । पु । दाडिमवृक्षे । विका. ।

**पर्व्ववल्ली** । स्त्री । गण्डदूर्व्वायाम्, मालादूर्व्वायाम् । गाँठदुबा । रा नि.व.८ ।

**पर्व्वसन्धि** । पु । अङ्गुलिसन्धौ । रा नि व १८ ।

**पर्व्वित.** । पु । (Silurus pobda) पर्व्वत मत्स्ये । श र । [श्च । च द १०श्च ।

**पर्शुका** । स्त्री । पञ्जरास्थनि । भम । सु चि

**पलम्** । क्ली । मांसे । रा नि व १७।१८ । च न्द विष चि । "कर्कटपलहरिताल ।" शुक्तिद्वये, द ती ॥ शुक्तिश्चात्र पल ज्ञेयम् ।' प म १ख । कर्षचतुष्टय । भम । पु । पलाल । हे च । ज टामांस्याम् । लाक्षायाम् । वै निघ ।

**पलका** । स्त्री । पालङ्कीशाके । रा नि व ७ ।

**पलङ्क.** । पु । निष्पावे । शिम्, वर्वटी । रा नि व २२ ।

**पलङ्कर** । पु । पित्ते । त्रिका ।

**पलङ्कष** । पुं । कणगुग्गुली । रा नि व १२ । निष्पावे । शिम् । प सु ।

**पलङ्कषा** । स्त्री । श्वेतनिष्पावे । श्वेत शिम् । रा नि व १६ । गोक्षुरके । मे । च सू ४श्च सञ्ज्ञास्थापने । वै निघ भ ख्या चि वचाद्यघृते । गुग्गुली मे । च द सि यो महापैशाचघृते । वि ज्व अष्टादशाङ्गधूपे पलङ्कषाद्यघृते । पलाशबीजे । वै निघ २भ क्रमि चि माविषवटके । लाक्षायाम् । प सु । वा उ ६श्च महापैशाचघृते । क्षुद्रगोक्षुरके । वै निघ । मक्षिकायाम् । रा नि व १८ । रास्नायाम् । वै निघ २भ भ ख्या चि पलङ्कषातैले । मुण्डीर्याम् । मे ।

**पललम्** । क्ली । तिलकल्क । तिलकुटो । हिं तिलकुटि । रा नि व १६ । सु चि २०श्च । च द हृद्रोग चि । लक्षण—"पललन्तु समाख्यात सैव तिलपिष्टक । पललं मलकृद्वृष्य वातघ्न कफ पित्तकृत् । बृंहण गुरु हृद्यं स्निग्धं मूत्रनिवर्त्तकम् भा । मांसे । रा नि व १०।१८ । शुष्कमांसे सु सू ४२श्च । तिलचूर्ण । वै निघ । भ्रष्ट तिलकल्क । वा उ ३८श्च । पङ्क । मे ।

**पललज्वर** । पु । पित्त । हारा ।

**पललाशय** । पु । अजीर्णे । त्रिका । गण्डरोगे । श र ।

**पलाग्नि** । पु । पित्ते । हारा ।

**पलाङ्ग** । पुं । शिशुमारे । शुशोक । हारा ।

**पलाण्डु** । पु । (Allium Cepa) Onion Fr Ognon मूलशाकविशेषे । पेँयाज । हि पियाज पियज । म श्वेतकान्दा । कं उल्लि । तें नीरुल्लिपेट्टु । ता वेङ्गयम् । वम् कान्द । पारस्य बुल्लिगड्डलु । रा नि व ६ । स श्वेत हारिद्रवर्णभेदेन द्विधा । तयोर्हारिद्री रक्तो वा राजपलाण्डुरित्युच्यते । गुणा —कटु बल्य गुरु कफपित्तघ्न हृद्य रोचन स्निग्ध वान्तिप्रद । रा नि व ७ । "पलाण्डुस्तु बुधैर्ज्ञेयो रसोनसदृशो गुणै । स्वादु पाके रसेऽनुष्ण कफकृन्नातिपित्तल । हरते केवल वात बलवीर्य्यकरो गुरु ।' भा । "वातहर सहभावात् ।" सु सू ४०श्च । "पलाण्डुर्वातकफहा शुक्रल शूलगुल्मनुत् । च चि १६श्च । बल्य, ज्वरे उदरे शूले लघितस्य कारी पामाया कर्णशूले वरटादिदंशे च हित । द्रव्यगुणाकरम् । "पलाण्डुनुपपूर्व स्यात् शिशिर पित्तनाशन । कफहृद्दीपनश्चैव वह्निद्राकरस या ॥" See राजपलाण्डु ।

**पलाशम्** । क्ली । समांसवेसवारादिसिद्धभक्ते । पोलाओ । एतत्साधनविधि यथा—छागमांसस्य शराव तण्डुलस्य शराव, घृतस्य शरावचतुर्थांश लवैलालवङ्गानां प्रत्येक माषत्रय मरिचतैलपत्रयो प्रत्येक तोलकद्वय कुङ्कुमस्य माषक, आर्द्रकधान्ययोश्च प्रत्येक तोलकद्वय लवणस्य पटतोलक द्राक्षायाश्च पलमिति । पाकराजेश्वर ।

**पलाप** । पु । करिगण्डे । श मा ।

**पलापहा** । स्त्री । नैपालिके । वै निघ ।

**पलार्द्धम्** । क्ली । सुवर्णकद्वये । ४तो । च कल्प १२श्च । [भम

**पलाल** । पु । नि शस्यधान्यनाले । पोयाल

**पलालजशाक** । पुं क्ली । पलालजातशाके पोयाल छाटु । गुणा —"स्वादुपाकरसा रुचा दोषघ्नाश्च पलालजा ।" राज २प ।

**पलालदोहद** । पु । आम्रवृक्षे । श मा ।

**पलाशम्** । क्ली । अरुके । टेसपाद । रा नि व ६ । पर्णे । पाता । भम. ।

**पलाश** । पु । किंशुके । शिमूल । सु सू ३८क भ्यष्ठादि । च सू २क यवागूप्रकरणे । (Butea frondosa) Butea gum स्वनामख्यातमश्च तरुवर्गीयवृक्षे । पलाश गाछ । प सु । हिं धा रा । म पलस । क मुत्तलु । तें मोदुग । उत् पराग । वम् खरकरी । ता परसन् । गुणा — कषायोष्ण कृमिघ्न । तद्बीज पामाकण्डूददुरुमन्दी षघ्न कृमिघ्न लघूष्ण कटुपाकि रुचघ्न । भा । तत्पुष्पम् उष्ण कटु कुष्ठघ्नञ्च । "कटुतिक्तकषाय स्वादुपाकि ।" रा नि व १०। भा । स च रक्तपी तश्वेतनीलपुष्पभेदेन चतुर्विध । किंशुकेन गुणसा म्यऽपि सिती विज्ञानदो भवति । तत्तैल गाम्भा रीतैलगुण । भूमिकूष्माण्डे । पारीषवृक्षे । पलाश पिपुन । शय्या । मे । सु चि २ अ-।

**पलाशक** । पु । शय्यां । जटा । लाक्षायाम् । रा नि.व २३ । किंशुके । शिमुल । सु सू ३८क सु ष्वकादि । पलाशवृक्ष । श र. । [निघ ।

**पलाशगन्धजा** । स्त्री । वमलोचनाभेदे । वै

**पलाशच्छदनम्** । क्ली। तमालपत्र । वै निघ।

**पलाशतरुज** । पु । कोमलपलाशपल्लवे । च द पि ज्व लिपे । "पलाशतरुजैर्दद्यात् ।"

**पलाशतरुशोणितम्** | **पलाशनिर्यास** } पु । तद्वृक्षनिर्यासे । पलाशेर आठा । गुणा —"पलाशभवनिर्यासो ग्राही च चपयेद्गु षम् । ग्रहणीं सुखजान् व्याधीन् कासान् स्वेदा तिनियमम् ॥" केचित् । भैष ने री चि ।

**पलाशन:** । पु । शारिकायां । त्रिका ।

**पलाशपर्णी (र्णी) (वल्ली)** । स्त्री । अश्व गन्धायाम् । रा नि व ४ । पलाशीलतायाम् । वै निघ । [नि व ७।

**पलाशलोहिता** । स्त्री । चिञ्चीमाके। रा

**पलाशबीजम्** । क्ली । पलाशबीजे । पलाश पापड़ा । रा नि व १० । गुणा —कृमिहारि मल दुक्‌हरम् । वा चि ८५. । See पलाश ।

**पलाशा** । स्त्री। गन्धशट्याम् । शट्याम् । प सु। कुष्माण्डे । पलाशीलतायाम् । वै निघ ।

**पलाशाख्य (ख्या)** । पुं क्ली । नाड़ीहिङ्गौ। रा नि.व ६ ।

**पलाशाम्भा** । स्त्री । यमानिकायाम् । वै नि घ । (म्बा) गन्धपत्रायां । रा नि व १० ।

**पलाशिका** । स्त्री । पलाशीलतायाम् । रा नि व ३ । भूमिकुष्माण्ड । र मा । शय्यां । ला चायाम् । रा नि व २३। आम्रातके । कदलीवृक्षे । वै निघ ।

**पलाशी** (इन) । पु । चीरीवृक्षे । शिवनि । प. सु । वृक्षसामान्य । त्रिका । स्त्री (शी) । नागरदेशे प्रसिद्धाया स्वनामख्यातलतायाः, काश्मीरे शटीति ख्यातायाम् । लता गुणा —लघु मुखदोषारी चक्रघ्नी पित्तकोपनी पथ्या च । रा नि व ३। ला चायाम् । रा नि व २३ । [शिंखा त्रिका ।

**पलिक्नी** । स्त्री । वृद्धायाम् । अम । बालगर्भ

**पलिघ** । पु । काचकलसे । मे ।

**पलितम** । क्ली । केशशुक्लतायाम् । रा नि व १८।२२ । निदान लक्षणे—"क्रोधश्र कश्रमकृत शरीरोष्मा शिरोगत । पित्तञ्च केशान् पचति पलितं तेन जायते ॥ सु नि १३अ । शैलजे । रा नि व २२ । मरिचे । वै निघ । पु गुग्गुलौ । कपालरोगे । वैनिघ. । तापे । कर्दमे । मे । केशपाशे । हे च । चि । ३७ । (ता) वृद्धायां । जटा.। [फुलन गाछ । वै निघ ।

**पलितघ्न** । पु । पुष्पवृक्षविशेषे । तगर

**पलिनी** । स्त्री । कृष्णोदुम्बरे । काट् डुमुर । वै निघ. ।

**पली** । स्त्री । गृहमक्षिकायाम् । वै निघ ।

**पल्यङ्गन** । पु । हरिके । वै निघ. ।

**पल्ल** । पु । पलाल । Poison । च चि १८.च पिप्पल्यादिके ।

**पल्लव** । पु क्ली । किसलये त्रिका । तैजपत्रे । भा म १अ ज्व चि । "सम्पल्लवदारुमगन्ध ।" लाक्षारागे । बले । विटपे त्रिका । वलय । श र.।

**पल्लवक** । पु । मत्स्यविशेष । हेमा ।

**पल्लवद्रु.** । पु । अशोकवृक्षे । रा नि व १० ।

**पल्लवाद** । पु । हरिणगे । वै निघ ।

**पल्लवाधार** । पु । शाखायां । श च ।

**पल्लवाद्यम** । क्ली । तालीशपत्रे ।

**पल्लवितम्** । क्ली । लाचारङ्गे । मे. ।

**पल्लवी (इन्)** । पु । वृक्षे । श.मा. ।

**पल्लिका** । स्त्री । सरटे । गोधायां । वै.निघ. । गृहगोधिकायाम् । रा.नि व १९ ।

**पल्लिवाह:** । पु । तृणविशेषे । वम् पीकलगवत । गुण —पशूनामबलदम् । रा नि. व ८ । [नि व.१९ ।

**पल्ली** । स्त्री । गृहगोधायां । टिकटिकी । रा

**पल्लूरम्** । क्ली । शुष्कमांसे । पथ्यापथ्यम् ।

**पल्व:** । पु । राशौ । गौदा । च.चि १४ भल्ला तकचौरे ।

**पल्वलम्** । पु, क्ली । स्वल्पसरोवरे । अम । लक्षण यथा—"अल्प सर पल्वल स्याच्च चन्द्रर्च गे रवौ । न तिष्ठति जल किञ्चित् तत्तस्य वारि पल्वलम् ॥" भा । See अलम् ।

**पल्वलावास:** । पु । कच्छपे । रा नि व.१९ ।

**पल्वलोदकम्** । क्ली । पल्वलजले ।

**पव:** । पु । वायौ । श च. । निष्पावे, धान्यादीनां निर्तुषीकरणे । बओना, पाछड़ान । अम । क्ली । गोमये । श.च ।

**पवन:** । पु । वायौ । रा नि.व.२१ । पीतमुद्ग राजौ । रा नि.व ४ । See मार्कव । मत्स्यरङ्गे । रा.नि.व.८ । क्ली । जले । श.मा. । आमघटादिपा कस्थाने । पोयान । मे. । [वि । मे. ।

**पवनद्विप:** । पु । गुग्गुलौ । वै निघ. । निष्पा

**पवनरिपु:** । पु । एरण्डवृक्षे । रा.नि व ८ ।

**पवनरिपुजटा** । स्त्री । एरण्डमूले । वै निघ २भ अभिन्यासज्व.चि. ।

**पवनव्याधि:** । पु । वायुरोगे । निका. ।

**पवनाल:** । पु । (Andropogon saccharatus) देवधान्ये । देधान, जनार । द्वि पुने रा । गुणा —हिम स्वादु लोहित श्लेष्मपित्तकृत् गुरुश्च तुवरो वृष्य क्लेदकृच । भा पू.१भ.धान्यव ।

**पवनाश: (न.)** । पु । सर्पे । हला । अम. । मौषके । र.मा म । [गरुडे । हला. ।

**पवनाशनाश:** । पु । मयूरे । वै.निघ. ।

**पवनी** । स्त्री । वनबीजपूरके । रा नि.व.११ ।

**पवनेन्द्रिय:** । पु । गर्भविकारसम्भूतशुक्रहीनपु रुषविशेषे । कदाचिद्दुष्टो वायु गर्भस्थस्य शुक्रस्था न समूल हत्वा तमशुक्र करोति, स पवनेन्द्रिय । यथा—'शुक्राशय गर्भगतस्य हत्वा करोति वायु पवनेन्द्रियत्वम् ।" च शा २भ ।

**पवमिष्ट:** । पु । निम्बूवृक्षे । वाताबीजवृ । वै.निघ । महानिम्बे । र मा. । [लि । श च. ।

**पवनाम्बुज:** । पु । परूषकवृक्षे । क्ली । तत्फ

**पवमान:** । पु । वायौ । रा.नि.व.२१ ।

**पवाक** । पु । कारवेल्ले । निका ।

**पवि:** । पु । वज्रे । शौटे । रा नि व.११ । स्नु हीवृक्षे । वै.निघ.२भ.षय चि.त्रैलोक्यचिन्तामणि रसे ।

**पवितम्** । क्ली । मरिचे । रा नि व.६ ।

**पवित्रम्** । क्ली । मधुनि । घृते । रा नि,व १४। १५ । ताम्रे । जले । भीमसेनीकर्पूरे । कुशे । मे. । घर्षणे । विश्व ।

**पवित्र: (क)** । पु । तिलवृक्षे । रा नि.व १६। पुत्रजीवकवृक्षे । रा नि व ९ । (क) दमनकवृक्षे । रा.नि.व.१० । उदुम्बरवृक्षे । अश्वत्थवृक्षे । रा नि. व.११ । शरपत्रदर्भे । रा नि.व.८ । हिज्जलवृक्षे । हरिद्रायाम् । तिलकवृक्षे । वै निघ. । क्ली । जले । अम । जाले । श.र. ।

**पवित्रधान्यम्** । क्ली । यवे । रा.नि.व.१६ ।

**पवित्रा** । स्त्री । अम्लिकायाम् । गङ्गा अश्वत्थ । रा नि व ११ । तुलसीवृक्षे । श मा. । हरिद्रायाम् । रा.नि व.६ । शमीवृक्षे । वै.निघ. ।

**पशु:** । पु । जन्तुभेदे । अम. । उदुम्बरवृक्षे । यज्ञडुमुरेर गाछ । श.च । छागे । निका. । स ग्राम्यारण्यभेदेन चतुर्दशविध । गौरविरजोऽश्वो ऽश्वतर गर्दभ मनुष्यश्चेति सप्त ग्राम्या. । महिष वानरऋक्षसरीसृपरुरुपृषतमृगाश्चेति सप्तारण्या । मांसगुणा —"लघव शीतमधुरा. सकषाया हि ता नृणाम् ।" राज. ।

**पशुक्रिया** । स्त्री । मैथुने । है.च ।

**पशुगन्धा (न्धिका)** । स्त्री । अजगन्धायाम् ।

वनतुलसी । वा.सू.३५अ.वत्सकादि: । "पशुगन्धा पक्षकोलकं हन्ति ।"

**पशुपल्वलम्** । क्ली । कैवर्त्तमुस्तके । श.च. ।

**पशुमोहनकारिका** । स्त्री। चन्द्रशूरे । भा.।

**पशुमोहनि (नी) का** । स्त्री । कटुकायाम्। रा.नि.व.३ ।

**पशुराज: (ट)** । पुं । सिंहे । श.च. ।

**पशुहरीतकी** ।. स्त्री । आम्रातकफले । आमडा । त्रिका. ।

**पश्चात्कर्म्म** । क्ली । बलवर्णाग्निकार्य्ये । पेयाद्यसंसर्ज्जने । निःशेषातङ्कस्यानुबन्धोपचरणाय यत् क्रियते तस्मिन् कर्म्मणि । सु.सू.५अ. ।

**पश्चाद्रुज:** । पुं । बालानां व्रणरोगविशेषे । "दुष्टमलादिभिर्मातुः स्तन्यं सम्पिबतः शिशोः । यदा प्रकुपितस्पित्तं गुदं समभिधावति । तदा स जायते तत्र जलौकोदरसन्निभः । व्रणः सदाहः सारक्तः ज्वरकार्श्यकरः परः । हरितं पीतकं वापि वर्च्चस्तेन भवेद्ध्रुवम् । व्रणः पश्चाद्रुजो नाम व्याधिः परमदारुणः ॥" रस.र.बाल चि. ।

**पश्चिमवात:** । पुं । पश्चिमदिग्भववायौ । पश्चिमे बातास । गुणाः—विषदी रूक्षपरुषः खरः स्नेहबलापहः । पश्चिमो मारुतस्तीक्ष्णः कफमेदो विशोषणः । सद्यः प्राणचयकरः शोषणस्तु शरीरिणाम् ॥" सु.चि.१अ. ।

**पक्ष:** । पुं, क्ली । विन्दुजाले । पक्ष्मे । त्रिका. ।

**पक्षिका** । स्त्री। वारिपर्ण्याम् । टोकापाना। श.मा. ।

**पक्ष:** । पुं । शरीरे । पिच्छे । हे.च. । पक्षती । डाना । अम. । पार्श्वे । पक्षदशाहीरात्रे । बले । चुल्लीरन्ध्रे । राजहस्तिनि । मे. । पक्षिणि । श.र. । गरुति । पाखा । भ. । केशपाशे । वै.निघ. ।

**पक्षघात:** । पुं । पक्षवधरोगे । निदा. । See पक्षवधः ।

**पक्षचर:** । पुं । हस्तिनि । मे. ।

**पक्षति:** । स्त्री । पक्षमूले । पाखना । अम. ।

**पक्षधर:** । पुं । पक्षिणि । वै.निघ. ।

**प्रपक्ष:** । पुं । सीमन्तलतायाम् । वै.निघ. ।

**पक्षभाग:** । पुं । पार्श्वभागे । गजपार्श्वभागे । अम. ।

**पक्षमार्ज्जार:** । पुं । पक्षविड़ाले । वै.निघ. ।

**पक्षमूलम्** । क्ली । पक्षती । डानार मूलभाग । अम. ।

**पक्षवध: (वात:)** । पुं । वातव्याधिविशेषे । पक्षाघात । निदा. । "गृहीत्वार्द्धं तनोर्वायुः शिराः स्नायुर्विशोष्य च । पक्षमन्यतरं हन्ति सन्धिबन्धान्विमोचयन् । कृत्स्नोऽर्द्धकायस्तस्य स्यादकर्म्मण्यो विचेतनः । एकाङ्गरोगं तद्विदन्ये पक्षवधं विदुः ॥" मा.नि. ।

**पक्षवाहन:** । पुं । पक्षिणि । श च. ।

**पक्षविन्दु:** । पुं । क्रौञ्चपक्षिणि । कोँचबक । वै.निघ. ।

**पक्षसुन्दर:** । पुं । लोध्रत्वचे । हारा. ।

**पक्षालु:** । पुं । पक्षिणि । श.च. ।

**पक्षिक:** । पुं। पक्षिराजशाली । रा नि.व.१६।

**पक्षिणी** । स्त्री । वनकार्पास्याम् । वै.निघ. ।

**पक्षिपात:** । पुं । पतङ्गज्वरे । गजवै. ।

**पक्षिराजशालि:** । पुं । स्वनामख्यातशालिधान्यविशेषे । पक्षिराज धान । मं पाखियाशालि । रा.नि.व.१६ । [नि.व.१६ ।

**पक्षिलावण्य:** । पुं । पक्षिराजशाली । रा.

**पक्षिशाला** । स्त्री । पक्षिकुलाये । त्रिका. ।.

**पक्षिसिंह:** । पुं । गरुड़े । त्रिका. ।

**पक्षी (इन्)** । पुं । माक्षिकधातौ । स्वर्णमाक्षिके । र.सा.सं. । विहङ्गमे । पाखी । हिं चिड़िया । स चतुर्विधः विष्किरप्रतुदप्रसहप्लवभेदेन । तत्र विष्किरा लावतित्तिरकपिञ्जलादयः । कपोतपारावतादयः प्रतुदाः । काककङ्कुररादयः प्रसहाः । हंससारसक्रौञ्चादयश्च प्लवा इति । एषां गुणादिकं स्वस्वपर्य्याये द्रष्टव्यम् । आनूपमांसगुणाः— "भान्याः कूलचरा ये तु तेषां मांसं लघूत्तमम् । आनूपश्चलजन्मांसं स्निग्धङ्गुरुतरं स्मृतम् ॥" भा.पू.२भ. । स्थूलकायपक्षिमांसगुणाः—"गुरुभक्षा बहुभुजो ये चोपचितमेदसः । एकदेहेऽपि पूर्व्वाङ्गमगाणां पक्षिणां परम् ॥" उत्तरोत्तरं सदङ्गगुरु-

क्ष्मम्। यथा—"सर्वेषाञ्च शिरःसम्भवीन्द्रवर्मण्य कुड्दम्। पादपुच्छाल्लु मस्तिष्कसुप्तक्रीडाः समीह ना। धातवः शोणितादाश्च गुरवः सु, परम्प रम्॥" राज.। [नेत्ररोगे। अम.भ।

**पक्ष्म।** क्ली। पक्ष्मे। अम.माला। पुष्पकेशरे।

**पक्ष्मकोपः।** पुं। नेत्रवर्त्मगतरोगे। (ভোঁয়ার রোগ, কোতো। लक्षणं यथा—"पक्ष्माशयगता दोषा तीक्ष्णाग्राणि खराणि च। निर्वर्तयन्ति प क्ष्माणि तैर्जुष्टञ्चाक्षि दूयते। उत्पाटितैः पुनः शा न्तिः पक्ष्मभिर्योपजायते। वातातपानलद्वेषी पक्ष्म कोपः स उच्यते॥" सु.उ.३अ.।

**पक्ष्मघातः।** पुं। पक्ष्मगतनेत्ररोगभेदे। पक्ष्म वधरोगे। निदा.।

**पक्ष्मयूका।** स्त्री। पक्ष्मगतकीटे। वै.निघ.।

**पक्ष्मरोधः।** पुं। पक्ष्मगतरोगविशेषे। "पक्ष्मो परोधे सङ्कोच वर्त्मनां जायते तथा। खरताम्नमु खलस्य लोम्नामन्यानि वा पुनः। कण्टकैरिव ती क्ष्णाग्रैः घृष्ट तैरक्षि दूयते। उच्यते चानिलादिद्वि ष्ण्याह शान्तिरुद्धृतैः॥" वा.उ.८अ।

**पक्ष्मशातः।** पुं। पक्ष्मकोपरोगे। लक्षणं— "वर्त्म पक्ष्माशयगतं पित्तं रोमाणि पातयेत्। कण्डू दाहञ्च कुरुते पक्ष्मशातं तमादिशेत्॥" मा.नि।

**पक्ष्मार्शः।** क्ली। नेत्रवर्त्मार्शोरोगे। निदा।

**पक्ष्मोत्सङ्गः।** पुं। पक्ष्मशोथरोगे। निदा.।

**पांशवः।** पु। पांशुलवणे। পাঙা নবণ। रा. नि.व.६।

**पांशुः।** पु। पर्पटके। रा.नि.व.४। भा.म.१ भ.विषमभग्न.चि.। "पुरपांशिजपांशुभिः।" भीमसेनीकर्पूरे। रा.नि.व.१२। चारभूमिकायां। तालकद्वये। पुन्नागवृक्षे। धूली। अम.। शालिधा न्यविशेषे। गुणाः—शालिवत्। च.सू.२७अ.। श स्यार्थे रचितगोमये। সার। मे.। [व१२।

**पांशुकम्।** क्ली। कासीसे। हिङ्गुलकम्। रा.नि.

**पांशुका।** स्त्री। रजस्वलायाम्। वै.निघ.।

**पांशुकासीसम्।** क्ली। धातुकासीसे। हीरक कम्। भा.।

**पांशुखुरः।** पु। अश्वस्य पादतलस्फुटीरोगे। च

चणम् यथा—"पांशुभिः शर्कराभिश्च पूर्यते यस्य कोटरम्। तस्य तस्य विजानीयात् रोगं पांशुखुरं भिषक्॥" ज.द.३८अ। [म्र.मा.।

**पांशुचत्वरम्।** क्ली। पांशुधाने। পাঁশকুড।

**पांशुचन्दनः।** पु। शिवे। त्रिका.।

**पांशुचामरः।** पुं। क्षुद्रकर्कटिकायाम्। दू र्वामयप्रदेशे। मे.। पटभवने। जटा.।

**पांशुजम्।** क्ली। पांशुलवणे। পাঙা নবণ। रमा। मृत्तिकालवणे। সোরা। [रमं।

**पांशुपट्टु।** क्ली। पांशुलवणे। र.सा.स.रसप्रक

**पांशुपत्त्रम्।** क्ली। वास्तूके। বেতো শাক। श्र.मा.।

**पांशुभवम्।** क्ली। मृत्तिकालवणे। वै.निघ.।

**पांशुभिया।** स्त्री। धातकीवृक्षे। धाईफुलेर गाछ। वै.निघ। [हारा।

**पांशुरः।** पु। खञ्जनपीठके। दंशके। ডাঁশ।

**पांशुरागिणी।** स्त्री। महामेदायां। रा.नि. व.५। [श्र। भ व.।

**पांशुलः।** पु। शिवे। पूतिकरञ्जे। কাঁটাকর

**पांशुलवणम्।** क्ली। औद्भिदलवणे। সুলা ল বণ, পাঙা নবণ। पञ्च। गुणा—"औद्भिदम्पां शुलवणं यज्जातं भूमितः स्वयम्। क्षारं गुरु कटु स्निग्धं शीतलं वातनाशनम्॥" भा.पू.१भ.। तीक्ष्णम् अनुष्णं कटु तिक्तं दीपनं दाहशोषकरं ग्राहि पित्तकोपनञ्च। रा.नि.व.६। भेदनं पाचनं पित्तकरञ्च। राज।

**पांशुला।** स्त्री। केतकीवृक्षे। কেয়া গাছ। रजस्वलायाम्। रा.नि.व.१०।१८। [वै.निघ।

**पांशुक्षारः।** पु। चारमृत्तिकायां। সোরা।

**पांसवम्।** क्ली। मृत्तिकालवणे। সোরা। वै. निघ.।

**पांसुः।** पुं। धूली। जटा.।

**पांसुक(ज)म्।** क्ली। पांशुलवणे। मृत्तिकाल वणे। च.द.सन्निपातज्व.चि.कर्णमूलशोथे। "…रिचं पांसुजं पश्चो…॥" [वै.निघ.।

**पांसुक्षारः।** पुं। मृत्तिकाक्षारवणे। সোরা।

**सर्व्वलोहम्** । क्ली । ताम्रे । वै.निघ. ।

**सर्व्ववर्च्चसम्** । क्ली । ताम्रे । वै.निघ. ।

**सर्व्ववर्णिका** । स्त्री । गाम्भारीवृक्षे । जटा. ।

**सर्व्वश्वेता** । स्त्री । सर्पपिकानामप्रायहरकीटविशेषे । सु.कल्प.८अ. । See कीट ।

**सर्व्वसंसर्गलवणम्** । क्ली । औषरलवणे । रा.नि.व.६ ।

[छिकधान्ये । श.च ।

**सर्व्वसङ्गतः** । पुं । षिष्ठकाङ्किधान्यविशेषे, ष

**सर्व्वसरः** । पुं । तन्नामकमुखरोगे । स वातपित्तकफशोणितनिमित्तः । तत्र वातजे वदनं सतोदस्फोटैः समन्तादाचितं भवति । पित्तजे मुखं रक्तपीतसदाहतनुस्फोटाचितं भवति । कफेनाल्परुकण्डूयुतैः सवर्णैर्व्याप्तं भवति । रक्तजे च पित्तलक्षणं भवति । सु.नि.१६अ. ।

**सर्व्वसहः** । पुं । गुग्गुलौ । प.मु. ।

**सर्व्वसाधनम्** । क्ली । स्वर्णे । वै.निघ. ।

**सर्व्वसिद्धिः** । पुं । श्रीफले । বেল । श.च. ।

**सर्व्वस्नेहः** । पुं । चतुःस्नेहेषु । चि.यो.वा.व्या.चि.शाल्वणस्नेहे । See स्नेहचतुष्टयम् ।

**सर्व्वहितम्** । क्ली । मरिचे । रा.नि.व.६ ।

**सर्व्वक्षारः** । पुं । क्षारविशेषे । সাবান । साबुन इति लोके । सबुखार इति दाक्षिणात्ये । गुणाः—अतिसारः वरुष्यः वस्तिशोधनः गुदावर्त्तकृमिघ्नः मलमूत्रविशोधनश्च । रा.नि.व.६ । मुष्ककवृक्षे । घण्टापाटल । वै.निघ. ।

**सर्व्वाख्यः** । पुं । पारदे । পারা । रस.कौ. । भैष.वा.र.चि.हारदशायसे ।

**सर्व्वाङ्गकम्पारिरसः** । पुं । वातव्याध्यधिकारे रसः । पाठः—"मृत सूतं मृतं ताम्रं मर्दयेत् कटुकद्रवैः । एकविंशतिवारञ्च शोष्यं पेष्यं पुनः पुनः । चणमात्रा वटी भक्ष्या…… ।" रस र. ।

**सर्व्वाङ्गसुन्दरः** । पुं । रसोऽयं विदेषनाधिकारोक्तः । पाठः—"शुद्धसूतञ्च गन्धञ्च विषञ्च जयपालकम् । कटुत्रयञ्च त्रिफला टङ्कणञ्च समांशकम् ।" मात्रा १ गुञ्जामिता । পারা, গন্ধক, বিষ, জয়পালবীজ, ত্রিকটু, ত্রিফলা, সো-হাগার খৈ প্রত্যেকে সমভাগ। মাত্রা ১ রতি। र.सा.सं. । अन्य. क्षयाधिकारे यक्ष्माधिकारे च—"रसगन्धकतुल्यांशौ द्वौ भागौ टङ्कणस्य च । मौक्तिकं विद्रुमं शङ्खं मारणीयं प्रयत्नतः । हेमभस्मार्द्धभागञ्च सर्व्वं खल्वे निधापयेत् । निम्बद्रवस्य योगेन पिण्डिका कारयेद्भिषक् । पश्चाद्गजपुटं दद्यात्स्वाङ्गशीतलञ्च समुद्धरेत् । हेमभस्मसमं तीक्ष्णं तीक्ष्णार्द्धं दरदो मतः । एकीकृत्य समस्तानि श्लक्ष्णचूर्णानि कारयेत् … ।" নীবসরূপে সোহাগার খৈ করিয়া উত্তমরূপে তাহা চূর্ণ করত সেই খই ২ তো. পারা ১ তো. গন্ধক ১ তো. মুক্তাভস্ম, প্রবালভস্ম, শঙ্খভস্ম প্রত্যেকে ২ তো. সোণা ॥০ তো. । একত্র নিমছালের রসে মাড়িয়া গোলক প্রস্তুতকরত সেই গোলক বদ্ধমূষায় রাখিয়া গজপুটে তীব্র জ্বালে পাক করিবে। শীতল হইলে তুলিয়া লৌহ ॥০ তো. ও হিঙ্গুল ।০ আনা দিয়া একত্র মাড়িয়া রাখিবে। মা০ ২ র। অনু. পিপুলচূর্ণ ও মধু। रस.कौ. । भैष. ।

**सर्व्वाङ्गसुन्दरी** । स्त्री । वैद्यकग्रन्थविशेषे ।

**सर्व्वानुकारिणी** । स्त्री । शालपर्ण्याम् । শালপাণি । रा.नि.व.४ । — [তেউড়ী । अम ।

**सर्व्वानुभूतिः** । स्त्री । श्वेतत्रिवृति । শ্বেত

**सर्व्वान्नीनः** । त्रि । सर्व्वान्नभक्षके । वा.चि.१अ. । "सर्व्वान्नीनो भवेत्तथा ।"

**सर्व्वायनी** । स्त्री । श्वेतत्रिवृतायां । वै.निघ. ।

**सर्व्वाम्लम्** । क्ली । सर्व्वविधप्रशस्ताम्लद्रव्येषु, काञ्जिकसुरासौवीरकदधिमस्त्वादिषु । चि.यो.शालवणस्नेहे ।

**सर्व्वाघः** । पुं । रुद्राक्षवृक्षे । वै.निघ. ।

**सर्व्वाक्षिरोगः** । पुं । सर्व्वगतनेत्ररोगे । स षोड़शविधः—वाताभिष्यन्द अधिमन्थः हताधिमन्थः अन्यतोवातः शिक्ताक्षिपाकः पित्ताभिष्यन्दः कफाभिष्यन्द रक्ताभिष्यन्दः शुष्काक्षिपाकः सशोफाक्षिपाकः अक्षिपाकात्ययः अम्लोषितः सन्निपाताभिष्यन्द वातपित्ताभिष्यन्दः वातकफाभिष्यन्दः पित्तश्लेष्माभिष्यन्दश्च । वा.उ.१५अ. । एते विशेषाः स्वस्वपर्य्याये द्रष्टव्याः । See नेत्ररोग. ।

सर्व्वाची । स्त्री । दुम्धिकायां । धिकई । वै निघ. ।

सर्व्वौषध(धि)गणः । पुं । कुष्ठाद्यौषधिवर्गे । कुष्ठजटामांसीवचाहरिद्राशैलेयचन्दनमुरामांसीकर्पूरमुस्तास् । "कुष्ठमांसीहरिद्राभिर्वचाशैलेयचन्दनैः । मुराकर्पूरमुस्ताभिः सर्व्वौषधमुदाहृतम् ॥" रा.नि.व.२२ । "मुरामांसी वचा कुष्ठं शैलेयं रजनीद्वयं । शटी चम्पकमुस्तञ्च सर्व्वौषधिगणः स्मृतः ॥" ज्योतिःशास्त्रम् ।

सर्व्वौषधिः । स्त्री । सर्व्वौषधिगणे ।

सर्षपः । पुं । (Brassica campestris Syn. Dinapis dichotoma.) स्वनामख्यातशस्यविशेषे । सरिषा शाक । हिं सरीसा, सर्षों, जिरिया । गुणाः—रसपाकयोः कटुः स्निग्धः तिक्तः तीक्ष्णोष्णः वातकफघ्नः रक्तपित्ताग्निवर्द्धनः रक्षोघ्नः कण्डूकुष्ठकृमिघ्नश्च । गौरस्तु श्रेष्ठः । भा पू. । तीक्ष्णः वातकफघ्नः उष्णः रक्तपित्तकरः कटुः कृमिकुष्ठघ्नश्च । सिद्धार्थोऽपि तद्गुणः । राज. । स सितासितभेदेन द्विधा । (Brassica nigra) The black mustard. कृष्णसर्षपे । काल सरिषा । हिं कालिराइ, माकड़ाराइ, सर्षों, पियरी सरीस । तें चवली । गुणाः—"...कटूष्णो वातगुल्मनुत् । पित्तदाहप्रदो गुल्मकण्डूकुष्ठव्रणापहः ॥" (Brassica juncea. Syn. Sinapis juncea.) राजिकायाम् । श्वेत सरिषा, राइसरिषा । हिं राजिका । गुणाः—"सिद्धार्थः कटुकोष्णश्च वातरक्तग्रहापहः । रूक्षो रक्षोघ्नो विषभूतव्रणापहः ॥" सर्षपतैलगुणाः.—तिक्तं कटुकं वातकफविकारघ्नं पित्तासृग्दोषदं कृमिकुष्ठघ्नं तिलजवच्चक्षुष्यश्च । सर्षपशाकगुणाः.—"सार्षपं भिन्नं स्वादु त्रिदोषरक्तपित्तकृत् ।" राज २प. । "स्तुषं रक्तपित्तप्रकोपकरं विदाहि कटुकं स्वादु त्रिदश । रा.नि.व.७ । "सार्षपञ्च त्रिदोषघ्नं च बदचाग्निवर्द्धनम् ।" चि.१६च. । "विदाहि हविस्तुल्यं हव्यं तीक्ष्णोष्णमेव च । त्रिदोषं सार्षपं शाकम् ..... ।" सु.सू.४६च. । सर्षपनालगुणाः—"तीक्ष्णोष्णं सार्षपं नालं वातश्लेष्मव्रणापहम् । कण्डूघ्नमिदं दद्रुकुष्ठघ्नं दृष्टिविकारकम् ।" भा पू १भ.शा.व. । सर्षपविशेषे । रूपि । हिं गोरि ।

अस्य बीजं दीपनम् । पत्रं वातघ्नम् । Watts पणरीत्यात्मकमाने । "पणरीत्यत्तु सर्षपः ।" मागधमानमिदम् । प.प्र. । राजिकात्रयपरिमिते माने । "त्रिसृभी राजिकाभिश्च सर्षपः ।" कालिङ्गमानमेतत् । [च. । See कन्दविषम् ।

सर्षपकः । पुं । तन्नामकन्दविषे । सु.कल्प.२

सर्षपतैलम् । क्ली । सर्षपबीजोत्थतैले । See सर्षपः । [मिदम् । भा. । See सर्षप ।

सर्षपनालम् । क्ली । सर्षपदण्डे । नालशाक-

सर्षपा । स्त्री । श्वेतसर्षपे । वै.निघ. ।

सर्षपिकः । पुं । प्राणहरकीटविशेषे । सु.कल्प ८च. । See कीट. ।

सर्षपिका । स्त्री । शूकरोगभेदे । लक्षणं—"गौरसर्षपतुल्या तु शूकदुर्भगहेतुका । पिडका कफरक्ताभ्यां ज्ञेया सर्षपिका बुधैः ॥" सु नि.१४ च. । तन्नामककीटभेदे । गलगोली श्वेतकृष्णराजिः रक्तमण्डला सर्व्वश्वेता सर्षपिका चेति । ताभिर्दष्टे सर्षपिकावर्ज्जं दाहशोफक्लेदा भवन्ति । सर्षपिकया हृत्पीडातिसारश्च भवति । सु.कल्प ८च. । मसूरिकाभेदे । "चतुर्थी सर्षपाकारा पीतसर्षपवर्णिनी । साध्या सर्षपिका ज्ञेयाऽन्यथा विवर्ज्जयेत् ॥" भा ।

सर्षपी । स्त्री । श्वेतसर्षपे । वै.निघ. । खञ्जरिकायां । शक्लन । विका. ।

सर्षपोद्भूतम् । क्ली । श्वेतसर्षपे । वै.निघ ।

सलम् । क्ली । जले । च.टी.भ. । [प.मु ।

सलटुकः । पुं । शतपत्रशाके । नटिया शाक ।

सल्पपत्रम् । क्ली । दारुशर्करायां । शारदिनि । वै.निघ. ।

सलिलम् । क्ली । जले । रा.नि.व.१४ ।

सलिलकुन्तलः । पुं, क्ली । शैवाले । विका ।

सलिलग्रहः । पुं । अश्मरीरोगभेदे । लक्षणं यथा—"हन्ति सततं दमु दृष्टिमानुगत । स्वाभावी कृष्णतैलवर्णं तस्यापि सलिलग्रह ।" च.द.१७च. ।

सलिलजम् । क्ली । कमले । पद्म । भा. ।

**सलिलधरः** । पु । मुस्तायाम् । मूता । वै निघ २भ जिह्वकज्व चि. । [See भरद्वाज ।

**सल्लकट्टुः** । पु । प्रियालवृक्षे । रा.नि.व.११ ।

**सल्लकी (ल्ली)** । स्त्री । (Boswellia thurifera.) Gum olibanum tree. स्वनामख्यातफलशाकलतायाम् । कुँदरुकी । शालविशेषे । यस्य निर्यास शिलारस इत्युच्यते । जगभस्या, सालइ इति लोके । म सल्लकि । क तदिकु । मम्. शालइ । गुणा —तिक्तमधुरा कषाया ग्राहिणी कुष्ठरक्तकफवातार्शोव्रणदोषघ्नी च । रा नि.व.११ । वै निघ २भ.र.अ सा.चि.सल्लक्यादि स्वरसे । सु सू.२५प. । [कल्प. ।

**सवम्** । क्ली । जले । जटा. । पुष्परसे । शब्द

**सवनम्** । क्ली । प्रसवे । शब्दकल्प ।

**सवरम्** । क्ली । जले । त्रिका. । [प सु. ।

**सवररोध्रम्** । क्ली । श्वेतरोध्रे । পাটিয়ালোধ।

**सवर्णकरणम्** । क्ली । विवर्णचतस्थानस्य देह समानवर्णकरणे । सु चि १प ।

**सवहा** । स्त्री । त्रिवृतायां । भ.टी.भ ।

**सविता (तृ)** । पु । अर्कवृक्षे । আকন্দগাছ । रा.नि.व.१० ।

**सवित्रम्** । क्ली । प्रसवकरणे । व्याक. । स्त्री (त्री) । धात्र्याम् । ধাই । भनि. । [निघ ।

**सविभालम्** । क्ली । नखीनामगन्धद्रव्ये । वै

**सवीर्य्या** । स्त्री । शतावर्य्याम् । শতমূলী । रा नि व.४ ।

**सव्यम्** । क्ली । वामकाये । अम. ।

**सव्यभिचारम्** । क्ली । सव्यभिचारं नाम यत् व्यभिचरत्, यथा—"भवेदिदमौषधमस्मिन् व्याधौ यौगिकमथवा नेति ।" च.वि ८अ ।

**सव्यसाची (इन्)** । पुं । अर्ज्जुनवृक्षे । रा.नि. व ९ ।

**सव्रणशुक्लः** । पु । नेत्रकृष्णगतरोगभेदे । लक्षणं यथा—"निमग्नरूपं हि भवेत्तु कृष्णे सूच्येव विद्धं प्रतिभाति यद्वै । स्राव स्रवेदुष्णमतीव रुक् च तत्सव्रणं शुक्रमुदाहरन्ति ॥" सु.उ १अ. ।

**सशल्य. (ल्या)** । पु, स्त्री । भल्लूके । रा.नि व. १९ । नागदन्त्याम् । হাতিশুঁড়ে । र.मा. । [६ ।

**सशाकम्** । क्ली । आर्द्रके । আদা । रा नि.व.

**ससत्त्वा** । स्त्री । गर्भवत्यां स्त्रियाम् । अ र. ।

**ससिद्धः** । पु । सर्जवृक्षे । ধুনোর গাছ । रा. नि व ९ । [धान । हे.च. ।

**सस्यम्** । क्ली । फले । अ.टी.भ । धान्यके ।

**सस्यमारी (इन्)** । पु । महामूषिके । মেটে ইন্দুর । रा नि व १९ ।

**सस्यसंव(स)रः** । पु । लघुशालवृक्षे । अम. । सल्लकीवृक्षे । वै निघ । [६ ।

**सस्यसवरणः** । पुं । अश्वकर्णशाले । रा.नि.व.

**सहम्** । क्ली । बले । मे । मार्गशीर्षमासे । हे च. । पांशुलवणे । रा.नि व.६ ।

**सहकारः** । पु । अतिसौरभयुक्ते आम्रवृक्षे । प सु. । रा.नि व.११ । अम. ।

**सहचरः** । पु । झिण्टीक्षुपे । ঝাঁটি গাছ । मे. । पीतझिण्ट्यां । পীতঝাঁটী । र.मा. । वा सू १५अ. वेल्लन्तरादिव. । "गोकण्टकोल्कटसहाचरवाणका-शा ।" नीलझिण्ट्यां । प सु । सु सू.३८अ सशीधने । [कण्टकशेलुद्वये । सु सू ३८अ डल्लण ।

**सहचरद्वयम्** । क्ली । नीलपीतझिण्टीद्वये ।

**सहचरा (री)** । स्त्री । पीतझिण्ट्यां । र मा । वै निघ. सन्धिक.ज्व.चि वचादि । नीलझिण्ट्यां । प सु ।

**सहजक्षति** । क्ली । सुवर्णे । वै निघ. ।

**सहजरस.** । पुं । स्वरसे । रस चि ९अ ।

**सहण्डुकम्** । क्ली । मांसकृतव्यञ्जनविशेषे । यथा—"छागादिमांस सुहृदं कुट्टितं खण्डितं पुनः । शुद्धमांसविधानेन पचेदेतत् सहण्डुकम् । सहण्डुक गुणमस्ये शुद्धमांसगुण स्मृतम् ॥" भा. ।

**सहदेवा (वी)** । स्त्री । (Sonchus arvensis. Syn. S Orixensis.) बलायाम् । বেড়েলা । बनपाबड़े । बन पालः । हिं सहदेवी बरी । मं सहदेवी । पञ्जा. मांरा । पीतपुष्पबलायाम् । काइसोलि लोके । পীত বেড়েলা । सर्पाक्ष्याम् । शारिवायाम् । मे. । नीलपुष्पबला

याम् । सु सू.३८अ । चि.८अ. । महाश्वेतायाम् । গোবক্ষচাকুলিয়া । रा.नि.व.४ । भा सन्ततादि. ज्व.चि. । पीतदण्डोत्पलायां । পীত ডানকুনী । र मा. । भैष ज्व.चि.पानीयभक्तवट्याम् । दण्डोत्पलायाम् । ডানকুনো । হি চিবডী । च द. शूल.चि.एरण्डद्वादशके । च.वि.८अ. । प्रियङ्गौ । महानील्याम् । वै.निघ ।

**सहपानम्** । क्ली । एकत्रपाने । हे.च. ।

**सहभाद्ली** । स्त्री । प्रसारण्याम् । গন্ধভাদুলি । भैष आमवातचि.लेपे ।

**सहभोजनम्** । क्ली । एकत्रभोजने । अम. ।

**सहरसा** । स्त्री । मुद्गपर्ण्याम् । মুগানী । श. र ।

**सहसानुः** । पुं । मयूरे । उणा ।

**सहस्यः** । पुं । पौषे मासि । अम. । [व.८ ।

**सहस्रकाण्डा** । स्त्री । श्वेतदूर्व्वायां । रा.नि.

**सहस्रजित्** । स्त्री । कस्तूर्य्याम् । মৃগনাভি । वै.निघ. ।

**सहस्रदंष्ट्रः** । पुं । महापाठीनमत्स्ये । বোয়াল মাছ, চিতল মাছ । अम. ।

**सहस्रदंष्ट्री** (इन्) । पुं । मत्स्यविशेषे । বোয়াল মাছ श र. ।

**सहस्रधौतः** । त्रि । सहस्रवार क्षालिते घृतादौ । হাজার বার ধোওয়া ঘৃতাদি । वा चि.१ च. ।

**सहस्रभुत्** । पुं । अम्लवेतसे । भा.पू १भ ।

**सहस्रपत्रम्** । क्ली । कमले । পদ্ম । रा.नि. व.१० । [व.८ ।

**सहस्रपर्व्वा** । स्त्री । श्वेतदूर्व्वायाम् । रा.नि.

**सहस्रपादः** । पुं । कारण्डवपक्षिणि । সারস পাখী । मे ।

**सहस्रभित्** । क्ली । अम्लवेतसे । भा. ।

**सहस्रमूली** । स्त्री । द्रवन्त्यां । रा.नि.व.५ । आखुकर्ण्याम् । মূষাকাণী । वै.निघ. । [श.र. ।

**सहस्ररसा** । स्त्री । मुद्गपर्ण्याम् । মুগানী ।

**सहस्रवीर्य्या** । स्त्री । दूर्व्वायां । र.मा. । च. चि.४अ. । नीलदूर्व्वायां । च शा.८अ. । महाशतावर्य्यां । रा.नि व.४ । श्वेतदूर्व्वायां । रा नि.व.८ च सू.४अ. ।

**सहस्रवेध(धि)म्.** । क्ली । चुक्रनामकाम्लिकभेदे । रा नि.व.१५ । हिङ्गुनि । হিঙ্ । वै. भा. । [निघ.२भ मधुरज्व चि. ।

**सहस्रवेधपापाणः** । पु । हिङ्गुमत्तरे । वै.

**सहस्रवेधिका** । स्त्री । मृगनाभौ । वै निघ ।

**सहस्रवेधी** (इन्) । पु । अम्लवेतसे । हिङ्गुनि रा.नि व.६ । मृगमदे । মৃগনাভি । रा.नि व.१२ चुक्रे । টকপালং । प.मु. ।

**सहस्रांघ्री**
**सहस्राङ्घ्री** } स्त्री । ह्रस्वपीलुवृक्षे । वै.निघ. ।

**सहस्रा (स्त्री)** । स्त्री । अम्बष्ठायां । আম্ডা । भा. । मयूरशिखायां । वै.निघ. ।

**सहाः (स)** । पु । हेमन्तकाले । मे. । मार्गशीर्षमासि । अम. । स्त्री (हा) । घृतकुमार्य्यां । प मु । माषपर्ण्यां । মাষাণী । च.द.बाल.चि.सहादिकाने । मुद्गपर्ण्यां । মুগানী । सु सू.३८अ. । सर्पकङ्कालिकायां । श च. । शुक्लकिण्ट्यां । श.च. । रास्नायां । र.मा. । स्वर्णक्षीर्य्याम् । শেয়ালকাঁটা । प मु. । पीतदण्डोत्पलायाम् । পীত ডানকুনী । र.मा. । तरणीपुष्पवृक्षे । रा.नि व.१० । देवताडवृक्षे । দেয়াতাডা । रा.नि.व.२ । सेवतीपुष्पजातौ । भा.रैवतीपद्मचि । "सहा विदारी ग्रीतानाम् ।" मलभेदजे । মেইদী । मे. ।

**सहाचरः** । पुं । नीलपीतझिण्ट्याम् । নীল ও পীতঝাঁটি । श.र. । वा.सू १५अ. । "नीलदण्डोत्कटसहाचरबाणकाशा ।" सु.चि.१०अ. ।

**सहाद्वयम्** । क्ली । मुद्गपर्णी माषपर्णी च । सु मधुरजीवनीयगणे ।

**सहारः** । पु । आम्रवृक्षे । उणा. ।

**सह्यम्** । क्ली । स्वास्थ्ये । सहिष्णुतायाम् । सम धुरे । श.र. । [निघ. ।

**सक्षीरा** । स्त्री । क्षीरिणीवृक्षे । ক্ষিরাই । वै

**साकु(कु)रुण्डः** । पुं । सन्नामप्रसिद्धे । संकुरुण्ड इति गुर्ज्जरे ख्यात । गुणा —कषाय,

रुचिकरः दीपनः सारकः श्लेष्मवातघ्नः वस्तरोधनः छश्च । रा.नि.व.६ । वै.निघ.२भ.श्व सा.चि.सा खण्डचूर्णे ।

**साकुकम्** । क्ली । शकुनिमुद्रे । यवे । व्याक. ।

**सागरकम्** । क्ली । सामुद्रलवणे । वै.निघ. ।

**सागरगामिनी** । स्त्री । सूक्ष्मैलायां । छोटि एलाच । रा नि.व.६ ।

**सागरजम्** । क्ली । लवणे । वै.निघ. ।

**सागरजमलः** । पुं । समुद्रफेने । वै.निघ. ।

**सागरोत्थम्** । क्ली । सामुद्रलवणे । रा नि.व. ६ ।

**सागरोद्भूतः** । पुं । शङ्खे । शाँख । वै.निघ. ।

**साङ्ख्यः** । पुं । ऋषिविशेषे च. ।

**साङ्गुष्ठा** । स्त्री । गुञ्जालतायाम् । र.मा. ।

**साङ्घातिकः** । त्रि । मारात्मके ।

**साचिवाटिका** । स्त्री । पुनर्नवायाम् । र मा ।

**साञ्जनः** । पुं । गृहगोधायाम् । कृकलासे । कांकलास । श.च. ।

**सातला** । स्त्री । पीतदुग्धस्नुहुग्भेदे । मनसा-विशेष । वम्. वडिलसोतुली को छिरियचटक नख । गुणाः- कफपित्तघ्नी लघु तिक्ता कषाया विसर्पकुष्ठविस्फोटव्रणघ्नी च । रा.नि.व.४ ।

**सातीलकः** । पुं । कलायभेदे । मटर । च. टी रा ।

**सात्म्यम्** । क्ली । यद्यस्य हितं सुखाय स-म्पद्यते तत्तस्य सात्म्यम् । तच्च द्विविधं चेष्टाख्यमा हाराख्यञ्च । चेष्टाख्यं कायवाङ्मनोभेदात्त्रिविधं, आहाराख्यञ्च रसभेदात् षड्विधम् । सु.सू १०च ख. । औषधादिजनितसुखानुबन्धे, व्याधिगुणवि-परीते आहारविहारादौ । "हेतुव्याधिविपर्यस्त विपर्यस्तार्थकारिणां । औषधाद्विहाराणामु-पयोगं सुखावहम् । विद्यादुपशयं व्याधेः स हि सात्म्यमिति स्मृतम् ॥" मा.नि. । सात्म्यं नाम तत् यदात्मन्युपशेते । तत्त्रिविधं प्रवरावरमध्यविभागेन । तत्र सर्वरसं प्रवरम् एकरसमवरं मध्यन्तु प्रवराव रमध्यम् । च वि.१च ।

**सादः** । पुं । अवसादे । उपतायां । वै.निघ. ।

**सादनी** । स्त्री । कटुकायां । कट्की । रा.नि.व. ६ ।

**साद्दश्यः** । पुं । कुरङ्गमृगे । निका. ।

**साधकम्** । क्ली । तन्नामकपित्ते । भा. । See पित्तम् । पुं । तन्नामकहृदयस्थायी येन मनोऽभि-लाषः सिध्यति । सु.सू.२१श्व । दमनकवृक्षे । वै. निघ. । [जीवकवृक्षे । वै.निघ । द्रव्ये । श्व ।

**साधनम्** । क्ली । शिश्ने । रा.नि.व.१७ । पुत्र-

**साधारणदेशः** । पुं । जाङ्गलानूपोभयदेश-लक्षणयुक्ते प्रदेशे । लक्षणं-यथा—"उभयगुणयुक्तो वा नातिरुच्च न शिशिरं न च खरबहुलश्चेवाभितः कणकाद्य । भवति च जलकीर्णो नाति शीतं न चोष्णं समप्रकृतिसमेतं विद्धि साधारणञ्च ॥" भचि. ४च. ।

**साधारणमृगः** । पुं । शूकरादौ, यथा— "शूकरा वृगमृङ्गाद्याः सलिलाश्रयमाथिता । म कराद्याश्च गण्डाका गवयाश्च तथापरे । महिषा-द्याश्च ये चैव ते च साधारणा मताः ॥" भचि. २०च. ।

**साधिका** । स्त्री । सुषुम्नौ । हे.च. ।

**साधुः (क.)** । पुं । दमनकवृक्षे । वै.निघ. । साधुवृक्षे । रा.नि.व.८ । [भा. ।

**साधुपुष्पम्** । क्ली । स्थलपद्मे । स्थलपद्म । श.

**साधुवृत्तः** । त्रि । हिताहारविहारकारिणि ।

**साधुवृक्षः** । पुं । कदम्बवृक्षे । कदम गाछ । श.च. । वरुणवृक्षे । वरुण गाछ । रा.नि.व.९ ।

**साध्वसम्** । क्ली । भये । श्व. ।

**साध्वी** । स्त्री । मेदायां । रा.नि.व.५ । दुग्धपा-षाणे । मूलशक्ति । प.मु. ।

**सानन्दः** । पुं । गुच्छकरञ्जे । रा.नि.व.९ ।

**सानसिः** । पुं । सुवर्णे । उणा. ।

**सानुजः** । पुं । तुम्बुरुवृक्षे । रा.नि.व.११ । पुण्डरीकवृक्षे । पुण्डरिया गाछ । रा.नि.व.१२ ।

**सानुबाधनः** । त्रि । कालान्तरमारके । च. सू.१च. । [गाछ । वै.निघ. ।

**सानुमानकः** । पुं । पुण्डरीकवृक्षे । पुण्डरिया

**सान्दृष्टिकम्** । क्ली। तात्कालिकफले । वै निघ.।

**सान्द्रम्** । क्ली। तक्रे । घोल। वै.निघ.।

**सान्द्रपुष्पः** । पु । विभीतकवृक्षे । श.च.।

**सान्द्रप्रसादमेहः (हिन्[इन्])** । पु । कफजमेहविशेषे । लक्षण यथा—"यस्य मेहयति मूत्र किञ्चित्किञ्चित् प्रसीदति । सान्द्रप्रसादमेहीति तमाहु श्लेष्मकोपत ॥" च.नि.४अ ।

**सान्द्रमेहः** । पुं । मेहरोगभेदे । घनाविल सान्द्रञ्च मेहति । सु.नि.६अ.।

**सान्ध्यकुसुमा** । स्त्री । त्रिसन्धिपुष्पवृक्षे । यस्य पुष्प त्रिकालमेव विकसति । रा नि.व १०।

**सान्नाय्यम्** । क्ली । घृते, हविषि । त्रिका.।

**सान्निपातिकः** । पु । त्रिदोषजरोगे । रा. नि.व २१ । त्रि । त्रिदोषसम्बन्धिनि ।

**सान्निपातिकी** । स्त्री । सन्निपातजन्ययोनिरोगे। लक्षणम्—" . विभिर्दोषै योनिगर्भाशयाश्रितैः । यथास्वोपद्रवकरैर्व्यापत्सा सान्निपातिकी ॥" वा उ.३३अ.।

**साब्दी** । स्त्री। द्राक्षाविशेषे । शब्दकल्प: ।

**सामजः (योनिः)** । पुं । गजे । मे ।

**सामत्रयम्** । क्ली। हरीतकी शुण्ठी गुडूचीषु । वै निघ.।

**सामवातः** । पुं । आमयुक्तवातरोगे। लक्षण —"वायु सामो विबन्धाग्निसादतन्द्रान्त्रकूजनै । वेदनाशोथनिस्तोदैः क्रमशोऽङ्गानि पीडयत् ॥" भा ।

**सामान्यम्** । क्ली । एकत्वबुद्धिकरजातौ । यदनेकासु भिन्नदेशकालासु गवादिव्यक्तिषु अयं गौरयं गौरित्यादिप्रकारा एकाकारा बुद्धि' तत् सामान्यम्। च.सू १अ.।

**सामुद्गकः** । पुं । सपुटे । वा.उ.२८अ ।

**सामुद्गसन्धिः** । पु । योनौ ऽङ्गतसन्धिषु । भा. अंसपीठगुदनोऽस्नितम्बेषु सन्धौ । सु.शा ५अ.।

**सामुद्रम्** । क्ली। समुद्रजलवणे। करकच, পাঙা। हि पांगा। गुणा —लघु हृद्यं पलित जनकं पित्तकरं दीपन रुच्यञ्च । रा.नि.व.६। समुद्रफेने । रस.र.ठकुरलवङ्गादिचूर्णे । नारिकेले । द्वीपान्तरवचायां । ८ोपचिनि । वै निघ.। पु । मत्स्यविशेषे । सु.कल्प.८अ.।

**सामुद्रमत्स्यः** । पुं । तिमितिमिङ्गिलकुलिशपाकमत्स्यादिषु । तन्मांसगुणा —गुरु स्निग्धं मधुर नातिपित्तल वातहरमुष्णं वृष्य श्लेष्मवर्द्धनञ्च। सु सू.४६अ.।

**सामुद्राद्यचूर्णम्** । क्ली । उदराधिकारे चूर्णम् । সামুদ্রিলবণ, সচললবণ, সৈন্ধবলবণ, যবক্ষার, যমানী, বিড়ঙ্গ, হিঙ্গু, পিপুল, চিতামূল, শুঁট, প্রত্যেকে চূর্ণ সমভাগ। ঘৃত মিশ্র সেবন করিবে। भा.कौ.।

**सामुद्रिका** । स्त्री । सविषजलायुकायाम्। সবিষ জোঁক । सु.सू १३ । See जलायुका ।

**साम्ब(म्भ,म्भा)रम्** । क्ली । शाटलवणे । শাম্ভরিলবণ । रा नि व.६ ।

**साम्भरी** । स्त्री । रक्तलोध्रवृक्षे । श.च ।

**साम्राणिककर्द्दमम्** । क्ली । अवादिगन्धद्रव्ये । খাটাশী, মৃগনাভি । रा.नि.व १२ ।

**साम्राणिजम्** । क्ली । महापारेवतफले । रा. नि.व ११ ।

**सायकः** । पु । शरे । रा.नि.व ८।

**सायकपुङ्खा** । स्त्री । शरपुङ्खायां । শরপুঙ্খ। रा.नि.व.४ ।

**सायङ्कालः** । पुं । सायाह्ने ।

**सायोन्निद्रा** । स्त्री। मल्लिकाविशेषे। यसाय विकसति । गुणैर्वार्षिकीतुल्या । रा.नि.व १० ।

**सारः** । पु । मज्जायां । মাংস্। मकुल.११अ.। अम. । दाडिम्बवृक्षे । वै.निघ.७भ.। पियालवृक्षे । वङ्गे । सुडे । पुण । क्वाथे । वै.निघ.। वस्थारे । रा.नि.व ६ । रोगे । धरषि । वले । अम. । दधिसरे । দৈত্যের নাশা । श.च. । कर्पूरे । रा. नि व.१२ । मकुल १२अ. । শোলীঅঙ্গে । वै.निघ २ भ वा.व्या.मत्स्यतैलाधि. । काष्ठान्तर्भूतपरिपक्वनिर्यासे । শক্ত শাঁটা। "स्वती निर्यासेषु सारसालसर्जसमोचरसादिकम् ।" च.सू.१अ. । शाल सारे । मु.चि.१८अ। সাঁই । भा । नवनीते । रा. नि.व १५। पानक । পানা, শর্বত । दिग्दर्शन-

स्थिरपदार्थं, स चाष्टविधः—यथा त्वग्रक्तमांसमेदोऽस्थिमज्जाशुक्रसत्वानि। तत्र स्निग्धश्लक्ष्णमृदुप्रसन्नसूक्ष्माल्पगम्भीरसुकुमारलोमा सप्रभेव च त्वक्सारार्णा। सा च सारता सुखसौभाग्यादीनि आचष्टे। कर्णाक्षिमुखजिह्वानासौष्ठपाणिपादादीनि स्निग्धरक्तानि श्रीमन्ति भ्राजिष्णूनि रक्तसाराणां। सा सारता सुखमुद्दधता मेधा मन स्विन्नसौकुमार्य्यादीन्याचष्टे। मांससाराणां शङ्खललाटकृकाटिकाक्षिगण्डादीनि स्थिरगुरुमांसोपचितानि भवन्ति। सा सारता क्षमाधृतिविद्यासुखारोग्यबलप्रभृतीनि आचष्टे। मेदःसाराणां बलवर्णनेत्रकेशलोमनखदन्तौष्ठमूत्रपुरीषेषु विशेषतः स्नेहः। सा च सारता वित्तैश्वर्य्यसुखोपभोगप्रदानान्यार्जवसुकुमारोपचारताश्चाचष्टे। अस्थिसाराः पार्ष्णिगुल्फजान्वरत्निजत्रुचिबुकशिरःपर्व्वस्थूला स्थूलास्थिनखदन्ता महोत्साहादयो भवन्ति। मज्जसारा मृदङ्गा बलवन्तः स्निग्धवर्णस्वरा स्थूलदीर्घवृत्तसन्धय दीर्घायुषो बलवन्तश्च। श्रुतविज्ञानवित्तापत्यसम्मानभाजश्च सौम्या सौम्यप्रेक्षणाश्च क्षीरपूर्णलोचना इव प्रहर्षबहुला स्निग्धवृत्तसारसमसंहतशिखरदशना प्रसन्नस्निग्धवर्णस्वरा भ्राजिष्णवो महास्फिजश्च शुक्रसाराः स्त्रीप्रिया स्त्रीप्रियोपभोगा बलवन्तश्च। सुखैश्वर्य्यारोग्यवित्तसम्मानापत्यभाजः स्मृतिमन्त भक्तिमन्त कृतज्ञा प्राज्ञा शुचयो महोत्साहा दक्षा धीरा समरविक्रान्तयोधिनः सत्वसारा।" च वि.८अ.। क्ली। जले। मे.।

**सारकः** । पुं। जैपालवृक्षे। प.मु.। वै.निघ. १अ.चित्रविध्न.चि.। पीतमुद्गे। धान्यके। वै. निघ.। त्रि। विरेचके। [रा.नि.व ८।

**सारखदिरः** । पु। दुःखदिरे 'ग' व वावला।

**सारगन्धः** । पुं। चन्दनवृक्षे। श च.।

**सारघम्** । क्ली। सरघाकृतमधुनि। माक्षिकमधु। जटा.। सुश्रुत—"तस्मात्प्रवरं सर्वं सारघं मातिमोहनं। काले चापि प्रयुक्तं स्यात् कामलार्थं विनाशनम्। नातिशीतं न च दर्वं दीपनं बलकृन्मतं। चतौसारे ग्रहदोषे चले वा पवने हितम्।" चवि. १८अ.।

**सारङ्गः** । पु। मृगविशेषे, चित्रमृगे। हरिणविशेषे। मे। श.र.। तन्मांसगुणा—"आह्लादं स्निग्धं मधुरं लघु वृष्यञ्च। रा.नि.व.१७। विष्किरजातीयवातकपक्षिणि। रा.नि.व.१८। सु.सू. ४६अ.। हस्तिनि। वै.निघ.। कर्बुरवर्णे। "सारङ्गः कबर ख्यातः।" नकुल १अ.। छत्रे। राजहंसे। मे.। सिंहे। केशे। मयूरे। कोकिले। कर्पूरे। क्ली। पुष्पे। चन्दने। शङ्खे। पद्मे। स्वर्णे। भ्रमे। कार्य्यकोष।

**सारजम्** । क्ली। नवनीते। मेदि। श.च.।

**सारजासवः** । पुं। शालचन्दनादिसारोत्थविशतिविधासवेषु। च.सू २५अ.।

**सारणः** । पु। अङ्गवक्षायाम्। गन्धभाडुलि। भरणि। आम्रातकवृक्षे। श च.। अतीसाररोगे। हे च.। नवनीते। क्ली। गन्धभेदे। धरणि।

**सारणा** । स्त्री। रसस्य संस्कारविशेषे। रस. चि.३अ.।

**सारणि (णी)** । स्त्री। प्रसारण्याम्। गन्धभाडुलि। त्वचा.। रा नि.व.५। मद.व.१। नकुल.१२अ.। पुनर्नवायां। वै निघ.।

**सारण्ड.** । पु। सर्पाण्डे। सर्पाडिम। जटा.।

**सारतरुः** । पु। कदलीवृक्षे। धनञ्जय। खदिरवृक्षे। वै निघ.।

**सारतैलम्** । क्ली। सुश्रुतोक्तक्षुद्ररोगतैले, शिंशपागुरुसरलदेवदार्व्वादितैले। सु चि.२०अ.।

**सारद्रुमः** । पु। खदिरवृक्षे। रा.नि व.८।

**सारपाकम्** । क्ली। तन्नामकफलविषभेदे। सु. कल्प २अ.। See फलविषम्।

**सारपादपः** । पु। धामनवृक्षे। श र.।

**सारफल.** । पुं। सारामे। वै निघ।

**सारबन्धका** । स्त्री। क्षविकायाम्। वै निघ.।

**सारभाण्डम्** । क्ली। कस्तूरीसमाण्डे। मन्दकम्प। [कम्प ८अ.। See कीटः।

**सारमण्डूकः** । पु। मण्डूकजातीयकीटे। सु.

**सारमूषिका** । क्ली। दिव्यदामीकताया। Sec. सातड़ा। रा.नि.व.१। See वनरो। [श.र.।

**सारमेय.** । पु। कुक्कुरे। यमु। स्त्री। कस्तूर्यां

**सारलोहम्** । क्ली । लौहसारे । इस्पात् । त स लक्षणम् —"यमाभ्रकिखराकाराणद्धान्यत्र लिपिते । लौहे सुर्यस्य सूक्ष्माणि तत्सारमभिधीयते ॥" गुणाः—"लौह साराढ्य इत्यात् वहणी मतिसारकम् । अर्शसर्वाङ्गजं वात शूलञ्च परिणामजम् । कर्दिञ्च पीनस पित्त श्वासमायुञ्च्यपोहति ॥" भप पू १भ.धा.व.। [इचि.।

**सारवर्गः** । पु । क्षीरवृक्षवर्गे । भा म.३भ.प्रमे

**सारवृक्षः** । पु । धामनवृक्षे । वै.निघ.।

**सारशल्यः** । पु । श्वेतखदिरे । वै.निघ.।

**सारसम्** । क्ली । कमले । रा.नि व १० । स रोजले । वै.।

**सारसः** । पु । सवजातीयोभचरपक्षिविशेषे । सारस पाखी । तन्मांसगुणाः —मधुरसस कषायः महातीसारघ्न पित्तहर ग्रहण्यर्शोघ्नश्च । रा.नि.व १७ । तदक्ष कण्डआद्यग्रकजननी श्रयोऽतिकर्षी गुरुश्च। अत्रि.२१अ.। स्त्री। सारसपत्राम् । चै.च.।

**सारसङ्ग्रहः** । पु । वैद्यकग्रन्थभेदे चक्रपाणिकृते । [भिदे ।

**सारसङ्ग्रहनिघण्टुः** । पुं । वैद्यकनिघण्टु

**सारसजलम्** } **सारसाम्बु** } क्ली । सरोवरजले । वै निघ.।

**सारसैन्धवम्** । क्ली । सैन्धवे । च द.रतिवल्ल भमोदके ।

**सारा** । स्त्री । कृष्णत्रिवृतायाम् । काल ठेउड़ी । श र.। सातलायाम् । शीतकृष्ण ननमा । वै.निघ.। दूर्व्वायां । श.च.। असृमतृफलायाम् । कला गाछ । रा.नि.व.११ ।

**सारासुखः** । पु । स्वादुपाकरसयुक्ते कृष्णयुक्त धान्ये । वा सू १७म.हेमा ।

**साराम्लम्** । क्ली । निम्बुभेदे । गोंडालेबु । गुणाः—अर्शं पित्तघ्नं गुरु वातघ्न कफकरञ्च । वै निघ ।

**सारालः** । पुं । तिले । श च ।

**सारिका** । स्त्री । पक्षिविशेषे । शालिक पाखी । अम.।

**सारिणी** । स्त्री । कार्पासे । कार्पास गाछ । रा नि व.४ । महाबलायाम् रा नि व ४ । कपिलशिशपायां । कपिलवर्ण शिशु । रा नि.व ६ रक्तपुनर्नवायां । रा.नि.व ५ । दुरालभायां । रा. नि व.४ । प्रसारण्या । गन्धभादुलिया । रा.नि.व ५ । [वै.निघ.।

**सारितम्** । क्ली । कृष्णाञ्जने । काल सुर्म्मा ।

**सारिवा** । स्त्री । अनन्तायां । अनन्तमूल । हिं गौरियासाउ । म वम्. उपलसरी । "अम्बुपत्रा दुग्धगर्भा वल्ली स्वनामप्रसिद्धा ।" सु चि.८भ.ड.। वा.सू.१५भ.। सारिवोशीरकाश्मर्येति चक्रदत्त । शाली । शालिशाकृ । वै निघ । कृष्णसारिवायां । सा इन्द्रजम्बूत्वचा सुगन्धा कलम्बकेति ख्याता । श्यामालता । हि करियासाउ । See अनन्ता, सारिवा ।

**सारिवादिगणः** । पुं । सारिवोशीरकाश्मर्यचन्दनद्वयवष्टीमधुपरूषकक्रते कषाये । स दाहपिपासलटज्वरघ्नश्च । वा सू १५अ.।

**सारिवाद्वयम्** । क्ली । श्यामामसखी । शालमालता, अनन्तमूल । अ.ह्र वातपित्तज्व चि.। "मधुकं सारिवे द्राक्षा ।"

**सारी** । स्त्री । सप्तलायाम् । ठेकाँटा मनसा । रा.नि.व.८ । शारिकापक्षिणि । श र. । [एच ।

**सारोदकम्** । क्ली । सालसारोदके । च.चि.

**सारोद्वारः** । पु । वैद्यकग्रन्थविशेषे । [भ ।

**सारोष्ट्रिकः** पु । मौराष्ट्रदेशजविषे । च.टी.

**सार्ङ्गेरम्** । क्ली । गुञ्जायाम् । रा नि.व ६। *

**सार्जः** । पुं । सर्जरसे । धूनो । श.मा ।

**सार्द्रः** । त्रि । आर्द्रे । भिजा । अम ।

**सार्व्वगुणम्** । क्ली । क्षीरलवणे । रा.नि व ६।

**सार्व्वभौमः** । पुं । गजे । हाती । त्रिका ।

**सार्व्वसहम्** । क्ली । यतिकालवणे । सोरा। वै निघ.। [पु । श्वेतसर्षपे । वै निघ.।

**सार्षपः** । त्रि । सर्षपसम्बन्धी, शाकतैलादौ ।

**सार्षपतैलम्** । क्ली । सर्षपतैले । See सर्षप ।

**सार्षपशाकम्** । क्ली । सर्षपशाके । सरिषा शाक । चरि: १६ अ । See सर्षप: ।

**साल:** । पुं । वृक्षे मे । शिंशपावृक्षे । वरुण वृक्षे । त्रिका. । मत्स्यविशेषे । शाल माछ । अ. टी भ. । शाकवृक्षे । शेगुन गाछ । कुणपे । वै. निघ. । रालि । धुनो । रा.नि.व.१२ । सर्जवृक्षे । रा.नि.व ६ । स्वनामख्यातवृक्षे । शाल गाछ । हिं खसुया । मं साजरा । क सज्जर दामर । गुणा: —कटु तिक्त: उष्ण: हिम. स्निग्ध: अतीसारपित्तदोषघ्न. कण्डूकुष्ठविस्फोटकवातघ्नश्च । रा.नि व. ६ ।

**सालज: (क:)** । पुं । सर्जरसे । धुनो । प. मु. । सर्जतरौ । धुनोर गाछ । रा.नि.व.६ ।

**सालनिर्य्यास:** । पुं । सर्जरसे । धुनो । र. मा. । [श.र. ।

**सालपर्णी** । स्त्री । अंशुमत्यां । शालपाणि ।

**सालपुष्पम्** । क्ली । स्थलपद्मे । श.र. ।

**सालरस:** । पुं । शालनिर्य्यासे । धुनो । रा. नि.व.१२ । [ल्प: ।

**सालवेष्ट:** । पुं । सर्जरसे । धुनो । शब्दक-

**साससार:** । पुं । शालभेदे । "शाल: शङ्कु: तस्य सार: ।" इति डल्लण: । सु.सू.३८अ ।

**सालाहक:** । पुं । कुकुरे । शृगाले । शब्दकल्प:

**सालिमकन्द:** । पुं । काबेलदेशीयकन्दभेदे । शालममिछ्रि । गुणा:—उष्णवीर्य्य: मधुर: वृष्य: धातुवर्द्धक: तिक्त: गुरु: रसायन: पुष्टिकर: चयमेहपित्तरक्तविकारघ्नश्च । वै.निघ. ।

**सालूर:** । पुं । भेके । श.र. । [टी भ. ।

**सालेय:** । पुं । मधुरिकायाम् । मउरी । अ-

**साल्विक:** । पुं । पक्षिविशेषे । शालिक । म.च. ।

**सावर:** । पुं । लोध्रविशेषे । श्वेत लोध । श. र. । लोध्रे । रस.र मगरी.चि.कामीमाचघृते ।

**सावररोध्र:** । पुं । श्वेतरोध्रे । "श्वेत: स्थूल त्वक् ।" सु.सू.३८अ. अम्बष्ठादि. ।

**सावरिका** । स्त्री । निर्विषजलौकायाम् । निर्विष जोंक । सु.सू.१३अ । See जलायुका ।

**सावर्णलक्ष्यम्** । क्ली । चर्म्मणि । श.र. ।

**सावित्र:** । पुं । गर्भे । श.र ।

**सावित्री** । स्त्री । आमलकीवृक्षे । वै निघ. ।

**साशयन्दक:** । पुं । गृहगोधायाम् । टिकटिकि । शब्दकल्प: ।

**साशूक:** । पुं । कम्बले । हारा. । [त्रिका. ।

**सास्थिताम्रार्द्धम्** । क्ली । कांस्ये । कौंसा ।

**सास्ना** । स्त्री । गोगलकम्बले । अम. । रास्नायां । वै.निघ. ।

**सास्राव:** । त्रि । अश्रुयुक्ते, स्रावयुक्ते । मा.चि. ।

**साहसम्** । क्ली । बलात्स्त्रियादिग्रहादिके ।

**सिंह:** । पुं । रक्तशिग्रौ । लाल सजिना । रा. नि.व.७ । पशुराजे । अयं बिलेशय: । सिंह । हि शेर । तन्मांसगुणा:—मधुरं गुरु स्निग्धं बल्यं वातघ्नम् उष्णवीर्य्यं नेत्ररोगे अर्शसि च हितम् । सु.सू.४६अ. । वकुलवृक्षे । वै.निघ. ।

**सिंहकेश(स)र:** । पुं । वकुलवृक्षे । सिंहजटायाम् । सिंहेर जटा । त्रिका. । [निघ. ।

**सिंहचिचा** । स्त्री । माषपर्ण्यां । माषाणी । वै.

**सिंहच्छदा** । स्त्री । श्वेतदूर्व्वायां । रा.नि.व.८ ।

**सिंहतुण्ड:** । पुं । सेहुण्डवृक्षे । स्नुहीवृक्षे । मनसा गाछ । रा नि.व ८ ।

**सिंहनादगुग्गुलु:** । पुं । आमवाते औषधम् । क्वाथार्थं—त्रिफला म १ प चतुर्गुणे वारिणि क्वाथयित्वा पादशेष: कार्य्य: । गुग्गुलु: ८ तो. नवनीतसारगन्धकं १ म. एरण्डतैलं १ म. एकत्र पाच्य: । क्वाथार्थ—आमला, हरीतकी, बहेड़ा प्रत्येके ३ प. जल चतुर्गुण (३६ प.), शेष चतुर्थांश (৯ प.) । गुग्गुल ৮ तो. नवनीतसारगन्धक ৬৪ तो. एरण्डतैल ৬৪ तो. सकल एकत्र करिया पाक करिबे । भा.की. । रस.र. ।

**सिंहनादिका** । स्त्री । दुरालभायां । म.च. ।

**सिंहपत्रा** । स्त्री । माषपर्ण्यां । माषाणी । वै. निघ. । [ह । रा नि.व.७ ।

**सिंहपर्णी** । स्त्री । वासकवृक्षे । वाकस् गा-

**सिंहपिप्पली** । स्त्री । सैंहलीपिप्पल्यां । रा. नि व.६ ।

**सिंहपुच्छिका (च्छी)** । स्त्री । कदम्बीप वसदृशदीर्घपत्रपृश्निपर्णीविशेषे, काटवाभिहृष ष्कोति ख्याते । छোট চাকুলে । र.मा. । रा नि. व.४ । "सिंहपुच्छी गुहाविका ।" च.द.शूल चि. एरण्डद्वादशके । माषपर्ण्यां । माषाणी । प मु. ।

**सिंहपुष्पी** । स्त्री । पृश्निपर्ण्यां । চাকুলে । रा. नि.व.४ ।

**सिंहमुखः** । पुं । वासकवृक्षे । वै निघ. ।

**सिंहमुखी (वदना)** । स्त्री । वासकपुष्पवृ पे বাকস গাছ । रा.नि.व.४ । वै.निघ श्वास चि.सिंहादिकषाये । (नवरवराजव्रगाई) । मा षपर्ण्यां । माषाणी । धारस्वतिकायाम् । थावि माটী । वै निघ. ।

**सिंहल(क)म्** । क्ली । राजरीतौ । ভান পি তল । रा.नि.व.१३ । वङ्गे । इ.च. । त्वचि । गु डत्वक् । रा.नि.व.६ । [व.६ ।

**सिंहलस्था** । स्त्री । सैंहलीपिप्पल्यां । रा.नि.

**सिंहलस्थानः** । पु । तालसदृशवृक्षतरौ । छ टো वृक्ष । श मा. । [छ । वै.निघ ।

**सिंहवल्लभा** । पु । शाटरूपवृक्षे । বাকস্ গা

**सिंहविक्रान्तः** । पु । अश्वे । हारा. ।

**सिंहविन्ना (हन्ता)** । स्त्री । माषपर्ण्याम् । माषाणी । वै निघ. । रा.नि.व.३ ।

**सिंहा** । स्त्री । बृहत्यां । वै निघ । नाड्यां । रा. नि व.१८ ।

**सिंहाणम्** । क्ली । लौहमले । मण्डूर । प मु. । नासामले । পোঁটা, সিকনী । श र ।

**सिंहाननः** । पु । वासकवृक्षे । বাকসগাছ । भा म.१भ.काण्डकुलज्व.चि. । "कलिङ्गसिंहानन शर्वरीभि ।"

**सिंहास्मृतघृतम्** । क्ली । चर्मसि घृतम् । पा ठ —"पचेद्वारिचतुर्द्रोणे कण्टकार्य्यमृतामृतम् । वचाग्निफलत्र्यीपपूतिकलकखिङ्गकैः । सकासम र्थविडङ्गैश्च सिद्ध दुर्नामनिद्गृतुत् ॥" कण्टकार्य्यम तयो प्रत्येक प्रस्थ पर्व निलिखा वा । अम १२६ म. श्री. ६४ म. । पूतिकलक् = करञ्जलक् । कां स्मर्थं = गाम्भारीफलम् । च द. ।

**सिंहाली** । स्त्री । सिंहलीपिप्पल्याम् । सिंहपिप्पल । वै निघ. । [निघ ।

**सिंहासनम्** । क्ली । लौहकिट्टे । मण्डूर । वै.

**सिंहास्यः** । पुं । वासकवृक्षे । বাকস গাছ । र.मा. । वै निघ.२भ.सिंहास्यादिकषाये । भैष. स्त्रीरो.चि कुष्ठ चि. ।

**सिंहास्यादिः** । पु । शोथे कषायविशेष । "सिंहास्यामृतभण्टाकीक्वाथ कृत्वा समाचिकम् ।" भैष.शोथ चि । ;

**सिंहिका (ही)** । स्त्री । बृहत्यां । रा नि व. ४ । प मु. । वासकक्षुपे । বাসক । रा नि व ४ । कण्टकार्य्यां । কণ্টিকারী । वै निघ जीर्णज्व.चि लवङ्गादिकषाये । तच्छाकगुणाः—"जरा तु सि हिका प्रोक्ता सातीसारे प्रशस्यते ।" चनि.१६५. । (ही) वार्ताक्यां । नृहत्यौ । त्रिका. । कण्टका र्य्यां । प मु. । वै निघ.जिमक.ज्व चि.कास.चि. सिंहास्यादि । बृहत्कण्टकार्य्यां । छ बड़ीकटैया । भा.म.१भ.ज्व.चि.श्वास.चि. । "सिंही व्याघ्री ता लमूली ।" शिरायाम् । नाड्याम् । रा.नि.व.१८ । स्वर्णक्षराटिकायाम् । मुद्गपर्ण्यां । मुगानी । रा. नि.व ३ । [धिकारे भग्नगव्याहते ।

**सिंहीफलम्** । क्ली । बृहतीफले । च.द ह्यो

**सिंहीलता** । स्त्री । लताबृहत्यां । भा. । मुद्ग पर्ण्यां । रा.नि.व.३ ।

**सिकता** । स्त्री । लोणिकाशाके । वन शनि शाक । प मु. । बालुकायां । रा.नि.व.१३ । श र्करायां । वै.निघ. ।

**सिकतामेहः** । पु । प्रमेहभेदे । यत्र रोगी बालुकानुविद्ध चरन्त मेहति । सु नि.६भ. ।

**सिकतारूपम्** । क्ली । खण्डे । খাঁড় । भा. ।

**सिकतिलः** । पु । सिकतामयभूमौ । रा.नि. व.२ । [श्वास चि. ।

**सिकासिः** । पुं । सत्कासिकायाम् । प्रयोगः

**सिक्ता** । स्त्री । बालुकायाम् । वै निघ. ।

**सिक्थ(क)म्** । क्ली । सिक्थके । मम, सि-

टी। रा नि व.१३। नील्यां। नील। इति च।

**सिघ्न(घ्ना)ण(क)म्।** क्ली। काचपात्रे। द्वारा.। नासिकामले। পোঁটা, সিকনি। रा नि.व.१८। नासारोगभेदे। निदानादि—"कफ प्रवृद्धा नासाया रुद्धा स्रोतांस्यपीनसम्। कुर्य्यात् सघुर्घुरं श्वास पीनसाधिकवेदनम्। अवेरिव सव त्यस्य प्रक्लिन्ना तेन नासिका। अजस्र पिच्छिल पीत पक्व सिङ्घाणक घनम्॥" वा उ १८अ.। अपरस्य रोगविशेषे। लक्षण—"वातिके पैत्तिके चैव श्लैष्मिके सान्निपातिके। सिङ्घाणके प्रवक्ष्यामि लक्षण मेवञ्च तथा॥ तनुस्राव सफेनञ्च वातिक तन्त्रकीर्त्तितम्। रक्तपीतासिते स्रावैर्विन्द्यात पित्तसमुद्भवम्॥ घनेन दधिवर्णेन कफजश्चैव निर्दिशेत्। नानावर्णेन जानीयादसाध्य सान्निपातिकम्॥" अ.द.। लौहकिट्टे। मधुर। वै.निघ.।

**सिङ्घान:।** पुं। कुरण्डकी। चिका.। [१८।

**सिङ्घिनी।** स्त्री। नासिकायाम्। रा.नि.व.

**सिञ्चिता।** स्त्री। पिप्पल्यां। श प.।

**सिञ्चितिका।** स्त्री। सेव इति प्रसिद्धे फले। সেওফল। सा च द्विधा क्षुद्रक्षुद्रभेदेन। क्षुद्रफल गुणा—हृद्य गुरु धातुवर्द्धकं पाके रसे च शीत कफकरञ्च। महत् शीतं कषाय क्षुद्रसमगुणञ्च। बदरफले। वै.निघ.।

**सित:।** पु। भूर्जवृक्षे। स्थूलजीरके। प सु। धवद्रुमे। ধাওয়া গাছ। रमा। क्ली। रौप्य। दृष्टे। रा नि व १३। मूलके। মূলো। रा.नि.व. ७। चन्दने। रमा। श्वेततिले। वै निघ।

**सितकङ्गु:।** स्त्री। सर्ज्जरसे। ধুনো। वै.निघ.।

**सितकटभी।** स्त्री। श्वेतकटभीवृक्षे। रा.नि. व.८। See कटभी।

**सितकण्टकी** / **सितकण्टा(रिका)** } स्त्री। श्वेतपुष्पकण्टकार्य्यां। रा नि व ४।

**सितकण्ठ:।** पु। दात्यूहपक्षिणि। ডাক পাখী। श र.।

**सितकर:।** पुं। भीमसेनीकर्पूरे। ভীমসেনী কর্পূর। रा नि.व १२। स्त्री (रा)। नीलदूर्व्वायाम्। वै निघ।

**सितकर्णी।** स्त्री। वासकवृक्षे। বাসক গাছ। रा.नि.व.१०।

**सितकल्याणघृतम्।** क्ली। स्त्रीरोगाधिकारे घृतम्। घृत ४ श दुग्ध १६ श। कल्कार्थ—कुमुदपुष्प पद्मकाष्ठ गौरचमूल गोधूम रक्तशालि मुद्गपर्णी चीरकाकोली गान्धारीबीज यष्टीमधु वा व्यालक गौरचतण्डुलामूलम् उत्पल तालमञ्जा भूकुष्माण्ड शतावरी शालपर्णी जीरक त्रिफला गोडुम्बाबीजम् आमकदली च प्र. ४तो. जल ८ श. एकत्र पाच्यम्। घृत ४ শ. দুগ্ধ ১৬ শ.। কল্কার্থ—কুমুদফুল, পদ্মকাষ্ঠ, বেণার মূল, গম দাদখানি চাউল, মুগানী, ক্ষীরকাঁকলা, গান্ধারবীজ, যষ্টিমধু, শ্বেত বেলেড়া, গোরক্ষচাকুলিয়ার মূল, নীলোৎপল, তালমজ্জা, ভূঁইকুমড়া, শতমূলী, শালপাণি, জীরা, ত্রিফলা, গোলকবীজ, কাঁচা কলা প্রত্যেকে ৪ তো জল ৮ শ পাক করিবে। [मा.।

**सितकाञ्चन.।** पु। श्वेतपुष्पकाञ्चनवृक्षे। श.

**सितकारिका।** स्त्री। क्षुद्रवाट्यालके। ক্ষুদ্র বেলেড়া। वै निघ।

**सितकुम्भी।** स्त्री। श्वेतपाटलायां। শ্বেতপুষ্পপারুল। रा नि.व.१०।

**सितगुञ्जा।** स्त्री श्वेतगुञ्जायां। रा.नि व.२३।

**सितचन्दनम्।** क्ली। श्रीखण्डचन्दने। সাদা চন্দন। च द.खदिरवटी। [তো। वै निघ.।

**सितचिल्ली।** स्त्री। श्वेतवास्तुके। ছুদে বে

**सितचिह्न:।** पु। (Lacerta scincus) वल्मीकमत्स्ये। বেলেগুড়গুড়ি মাছ। द्वारा।

**सितच्छत्रा।** स्त्री। शतपुष्पायां। শুল্ফা। श्रम.।

**सितच्छद:।** पु। राजहंसे। হাঁস পক্ষি না। वै निघ.। हंसे। इ.च। स्त्री (दा)। श्वेतदूर्व्वायाम्। रा.नि.व ८। [रा.नि व ११।

**सितज:।** पुं। मधुशर्करायाम्। মধুর চিনি।

**सितजफल.।** पुं। मधुनारिकेलवृक्षे। रा. नि व ११।

**सितजलजम्।** क्ली। श्वेतपद्मे। वै निघ.।

**सितला** । स्त्री । मधुशर्करायां । रा.नि.व.१४।

**सितजाम्रक:** । पुं । बहुरसालायवृक्षे । रा.नि.व.११ । [कोरा । भैष.बाल.चि. ।

**सितजीरकम्** । क्ली । शुक्लजीरके । श्वेत

**सितदर्भ:** । पुं । श्वेतकुशे । श्वेतकुश । म पादरीकुशी । क बिलियबुद्दकुशि । गुणा — ल न्मूल हिम मधुरं कच्य पित्तघ्न रक्तज्वरतृष्णायास . कामश्वासघ्न । एतदभावे साधारणकुशो याह्य । रा.नि.व.८ । [कै । रा नि.व.६ ।

**सितदीप्य:** । पु । श्वेतयमान्याम् । श्वेतजीर

**सितदूर्वा** । स्त्री । श्वेतदूर्वायाम् । प सु ।

**सितद्रु: (म:)** । पुं । मोरटभेदे । नताक , डाव । र.मा. । अर्जुनवृक्षे । वै.निघ ।

**सितधातु:** । पु । खटिकायाम् । थड़िमाटी। रा.नि.व.१३ ।

**सितपद्मम्** । क्ली । श्वेतपद्मे । वै निघ ।

**सितपर्णी** । स्त्री । अर्कपुष्पिकायां र.मा. ।

**सितपक्ष:** । पुं । शुक्लपक्षे । (शब्दकल्प) । ४वे । श र ।

**सितपाटला (लिका)** । स्त्री । शुक्लपुष्पपाटलवृक्षे । श्वेत पारल । म श्वेतपाडलि । कं बिलियहादरि । गुणा:—सिता उष्णा गुरु वा तघ्नी हिक्कावमिकफघ्नी शोथघ्नी च । रा.नि.व.१०।

**सितपुङ्खा** । स्त्री । श्वेतपुष्पशरपुङ्खायाम् । रा. नि व.४ ।

**सितपुष्पम्** । क्ली । कैवर्तमुस्तके । जटा. । पुं । श्वेतपुण्डरीहितके । श्वेत रोहित । रा.नि.व ८ । काशवृक्षे । केसेधास । तगरवृक्षे । रा.नि. व ८ । श.र. । हीपान्तरखर्जूरीवृक्षे । पिंडीखे जूर गाछ । शिरीषवृक्षे । वै.निघ. । स्त्री (ष्पा) । मल्लिकायाम् । मल्लिका फूलेर गाछ । श र. । (ष्पी) श्वेतापराजितायाम् । रा.नि.व.२ । नागदन्त्याम् । हातिशुंड़ । रा.नि.व.५ । नागवल्ली लतायां । पानलता । वै.निघ. ।

**सितमरिचम्** । क्ली । श्वेतमरिचे, शग्रु बी शाक्षनवीजमिति वृद्धा । रा.नि.व.६ ।

**सितमाष:** । पु । (Dolichos catjang.) राजमाषे । हारा. । [शादा गाछ । वै.निघ ।

**सितमोघा** । स्त्री । श्वेतपाटलवृक्षे । श्वेत

**सितरज:** । क्ली । कर्पूरे । वै निघ. ।

**सितराग:** । पु । रौप्ये । वै.निघ ।

**सितलता** । स्त्री । चित्रकूटे ख्याता अमृतस वालतायाम् । नक्रदन्तिका । रा.नि व.३ ।

**सितलशुन:** । पु । शुक्लरसोने । वै.निघ. ।

**सितवर्णा** । स्त्री । चीरिकावृक्षे । प.सु ।

**सितवर्षाभू:** । पु । श्वेतपुनर्नवायाम् । रा. नि.व.५ । [प सु ।

**सितवल्लरी** । स्त्री । भूमिजम्बूवृक्षे । वनवाम।

**सितवल्लि(ल्ली)जम्** । क्ली । श्वेतमरिचे । रा. नि.व ६ । [मा..।

**सितवार: (क:)** । पुं । शालिञ्चशाके । रै

**सितवारिक:** । पुं । सिन्दनीपिप्पल्याम् । वै.निघ. । [वै.निघ चयचि.लघुशिवगुट्यां ।

**सितशर्करा** । स्त्री धवलशर्करायाम् । चिनि

**सितशा(सा)यका** । स्त्री । श्वेतपुष्पशरपुङ्खायाम् । रा नि व.४ ।

**सितशिंशपा** । स्त्री । श्वेतपुष्पशाल्मलीवृक्षे । श्वेत शिमुल । श्वेतशिंशपायाम् । श्वेत शिशु । वै.निघ. । रा नि.व ८ ।

**सितशिम्बिक:** । पुं । गोधूमे । गम । वै.च.।

**सितशिम्बी** । स्त्री । श्वेतशिम्ब्याम् । वै.निघ ।

**सितशि(सि)वम्** । क्ली । सैन्धवलवणे । वै. निघ. । स्त्री । शमीवृक्षे । प.सु. ।

**सितशूक:** । पुं । यवे । प सु. । रा नि व.१६।

**सितशू(सू)रण:** । पुं । श्वेतसूरणे । श्वेत ओल वा वन ओल । रा.नि व.७ । [नि.व १६ ।

**सितसर्षप:** । पुं । गौरसर्षपे, सिद्धार्थे । रा.

**सितसार: (क:)** । पु । शालिञ्चशाके । रा. नि व ८ । च.द सु क.चि. । "तण्डुल युक्त श्वेत सारकस ।" [रा.नि.व.४ ।

**सितसिंहि: (ही)** । स्त्री । श्वेतकण्टकार्याम् ।

**सितसूर्य्या** । स्त्री । शुक्लसूर्य्यावर्त्ते । वै म.मू.क्ल वि । [गी । वै.निघ. ।

**सितचार** । पुं । श्वेतटङ्कयो । শ্বেত সোহা

**सितक्षुद्रा** । स्त्री । श्वेतकण्टकार्य्याम् । रा. नि.व.४।२३ ।

**सिताशु.** । पु । कर्पूरे । (शब्दकल्प) ।

**सिताशुतैलम्** । क्ली । कर्पूरतैले । रा नि व १५ ।

**सिता** । स्त्री । शर्करायाम् । চিনি । गुणा — "सिता सुमधुरा रुच्या वातपित्तास्रदाहहृत् । मूर्च्छाच्छर्दिज्वरान् हन्ति सुशीता शुक्रकारिणी ।" रा नि व १४ । धात्रीद्राक्षासिताना वा ।" च.द ज्वरचि. । च मू ४अ. । वचायाम् । বচ । सोमराज्याम् । সোমরাজ । सितदूर्व्याम् । শিউলি ছোপ । प.मु. । आमलक्या । আমলা । गोरोचनायाम् । গোরোচনা । वल्ली । सुरामेद्रे । रा. नि.व २३ । यौथि । मुक्तमित्रतायां । শ্বেত তেউড়ী । विसल्लिपुष्पवृक्षे । श्वेतपुनर्नवायाम् । वै. निघ । आस्फोतके । হাপরমালী । गिरिजापराजितायां । रमा । मल्लिकापुष्पवृक्षे । श्वेतपाटलिकायाम् । শ্বেত পারুল । रा.नि.व.१० । श्वेतकण्टकार्य्याम् । रा नि व.४ । विदार्य्याम् । ভূঁইকুমড়া । रा नि.व ७ । श्वेतदूर्व्वायाम् । प मु. । मु मू २६अ । च मू.५अ । श्वेतनिम्बायाम् । শ্বেত নিম । रा नि व १२ । See श्वेतनिम्ब । कुटुम्बिन्याम् । रा नि व.५ । वायमाणालतायाम् । बला लता । গোরালিয়া । तेजन्याम् । लताफटकी मूसा । रा.नि.व ३ ।

**सिताखण्ड:** । पु । मधुजशर्करायां । मधुर চিনি, মালখণ্ড । गुणा —अतिमधुर चक्षुष्य कृच्छ्रर्दिवमकफपित्तहिक्कापित्तासदोषघ्न । रा. नि व.१४ ।

**सिताख्य. (ख्या)** । पु । श्वेतमरिचे । वै. निघ । श्वेतदूर्व्वायाम् । रा नि व.८ ।

**सिताग्र.** । पु । कण्टके । কাঁটা । हारा. ।

**सिताङ्क.** । पु । वास्तुशाकभेदे । শ্বেতও ড়ি শাক । हारा । [रा नि व ८ ।

**सिताङ्ग.** । पु । श्वेतरोहितवृक्षे । [illegible]

**सिताजाजि: (जी)** । स्त्री । श्वेतजीरके । শাদা জীরে । रा नि.व.६ ।

**सिताच्चयम्** । क्ली । त्रिशर्करायाम् । "गुडी सिता हिमोत्था मधुरा चेति मिश्रित । सिताच्चयम् ॥" रा नि.व २२ ।

**सितादि.** । पु । गुडे । रा नि.व.१४ ।

**सितानन:** । पु । बिल्ववृक्षे । वै निघ. ।

**सितापाङ्ग:** । मयूरे । विका. ।

**सिताफलम्** । क्ली । (Anona squamosa) The custard apple. स्वनामख्यातफले । আতা, নোণা । हि सिताफल । मा सिताफल । पक्वफल पाचक । बीज क्रमिघ्नम् । कश्चित् ।

**सिताब्जम्** । क्ली । श्वेतकमले । रा नि व.१० ।

**सिताभ:** । पु । कर्पूरे । श टी.रा. ।

**सिताभा (सा)** । स्त्री । तक्कारायाम् । रा. नि व.४ ।

**सिताभ्र: (क)** । पुं । कर्पूरे । अम. ।

**सिताम्बु(म्भो)जम्** । क्ली । श्वेतकमले । चरा ।

**सितार्क (क)** । पु । श्वेतार्कवृक्षे । শ্বেত আকন্দ গাছ । रा नि.व.१० ।

**सितार्ज्जक.** । पु । श्वेतपत्रक्षुद्रतुलस्याम् । ছোট শ্বেত তুলসী । हि श्वेताजबला । म पां डरा आजवला । गुणा —कटूष्ण कफवातनेत्ररोगघ्न रुच्य सुखप्रसवकरश्च । रा.नि व.१० ।

**सितालता** । स्त्री । अमृतस्रवालतायाम् । रा नि व ३ । श्वेतदूर्व्वायाम् । रमा. । च.मू.४अ. ।

**सितालर्क: (र्का)** । पु, स्त्री । श्वेतमन्दारके । শ্বেত ও বক আকন্দ । रा.नि व १० ।

**सितालिकटभी** । स्त्री । श्वेतकिण्टीके । रा नि व ८ । [हारा. ।

**सितालिका** । स्त्री । परपुष्टी । ঝিনুক ।

**सितावर:** । पुं । सुनिषण्णके । শুশুনীশাক । गुणा —समग्राही त्रपाय उष्ण त्रिदोषघ्न मेधा रुचिकर रसायन दाहज्वरहरश्च । रा नि व ४ । See सु-दक्ष । [रा नि व ४ ।

**सितावरी** । स्त्री । शकुल्याम् । সোমরাজ ।

**सिताश्मजम्** । क्ली । पाषाणोदके । शिला-जल । वै.निघ. । [वै.निघ. ।

**सितासिता** । स्त्री । वाकुच्या । सोमराज ।

**सिताह्वयः** । पु । श्वेतशिग्रौ । श्वेत सजिना । रा नि व.७ । श्वेतरोहितके । श्वेत रोहा । रा नि व.८ । श्यामशाली । काल धान । कश्चित् ।

**सिताह्वया** । स्त्री । श्वेततुलस्याम् । रा नि व. १० । श्वेतपाटलवृक्षे । वै.निघ ।

**सिताह्वा** । स्त्री । सितपाटलीवृक्षे । शादा पारुल गाछ । रा नि.व.१० ।

**सिति** । पु । सुनिषण्णकशाके । वै.निघ. ।

**सितिवार (कः)** । पु । कुटजवृक्षे । सुनि षण्णकशाके । भा. । श्रम चि ।

**सितिसारकः** । पु । शालिञ्चशाके । च द.

**सितेतरः** । पु । कृष्णशाली । कुलत्थके । रा नि.व १६ ।

**सितेक्षु** । पु । श्वेतेक्षौ । रा नि व १४ ।

**सितैरण्ड.** । पु । श्वेतैरण्डे । रा नि.व ८ ।

**सितोचटा** । स्त्री । श्वेतगुञ्जायाम् । वै निघ. ।

**सितोत्पलम्** । क्ली । श्वेतोत्पले । वै निघ ।

**सितोदरा** । स्त्री । वराटिकाभेदे । कडिवि शेष । रा नि व १३ ।

**सितोद्भवम्** । क्ली । श्वेतचन्दने । (शब्दकल्प )।

**सितोपलम्** । क्ली । शुक्लखडिकायाम् । फुल खडि । निका. । पु । स्फटिके । रा नि व १३ । स्त्री (ला) । शर्करायाम् । चिनि । मत्स्यण्डिका याम् । मिछरि । हे.च. । सु.सू ४४अ. ।

**सितोपलादिलेहः** । पु । राजयक्ष्माधि कारे लेह । "सितोपला तुगाक्षीरी पिप्पली ब हुला त्वच. । अन्त्यादूर्ध्वं द्विगुणित लेहयेत् क्षौद्र सर्पिषा ॥" गुडत्वक्चूर्ण १ भ. एलाचूर्ण २ भ पिप्पलचूर्ण ४ भ. वंशलोचन ८ भ. चिनि १६ भ । रस.र. ।

**सिद्धः** । पु । गुडे । रा नि.व.१४ । कृष्णधुस्तू रे । रा.नि व.१० । ढाकर वाजार वा भोजने । निका । कृष्णनिर्गुण्ड्याम् । काल निसिन्दा । श तसर्षपवृक्षे । वै निघ. । क्ली । सैन्धवलवणे । रा. नि व.६ । त्रि । अव्याहतशक्तौ । वा.उ ३९अ ।

**सिद्धक.** । पु । सिन्धुवारवृक्षे । निसिन्दा गाछ। रा नि.व.४ । शालवृक्षे । रा.नि.व.९ । [निबौ ।

**सिद्धजलम्** । क्ली । काञ्जिके । छाश । पक्व

**सिद्धधातु** । पु । पारदे । विका ।

**सिद्धनामकः** । पु । अम्लातकवृक्षे । आबूट॥ वै.निघ ।

**सिद्धपुष्पः** । पु । श्वेतकरवीरवृक्षे । रा नि व. १० । [१६ । See सिद्धार्थ ।

**सिद्धप्रयोजनः** । पु । श्वेतसर्षपे । रा नि व

**सिद्धप्राणेश्वर.** । पु । ज्वरादीसारे औषधम् । पाठ – गन्धेशाभ्र पृथग्वेदभागमत्यत्र भागिकम् । सर्जिटङ्कयवक्षारा॰ पञ्चैव लवणानि च । वराग्नी पैन्द्रवीजानि हिजीराग्नियमानिका । सहिङ्गु वी जसारश्च शतपुष्पा सुचूर्णिता । सिद्धप्राणेश्वर सू त ॥ मा १ माषा । गन्धक, पारा, अभ्र प्रत्येके ४ तो. साजिमाटी, सोहागार खै, यवक्षार, पञ्चलवण, त्रिफला, त्रिकटु, इन्द्रयव, जीरा, कृष्णजीरा, चितामूल, यमानी, हिङ्गु, विडङ्ग, शुलफा प्रत्येके चूर्ण १ तो जले मर्दन, वटी १ माषा । रस चि.भैष ।

**सिद्धमन्त्रप्रकाशः** । पुं । वोपदेवकृतमन्त्र शास्त्रे । [विशेष । रा नि व.१९ ।

**सिद्धमोदकः** । पुं । तवराजखण्डे । मानवणो

**सिद्धयोगशतकम्** । क्ली । वृन्दकृते प्रसिद्धे चकमयग्रन्थभेदे । [ल. । खनिजधात्वादौ । मौ ।

**सिद्धरसः** । पु । पारदे शब्दकल्प सप्तम्या

**सिद्धवस्तिः** । पु । वस्तिभेदे । "यष्टमूलम नि क्वाथेतैल मागधिका मधु । ससैन्धव सयष्या ह. सिद्धवस्तिरिति स्मृत ॥" भा. ।

**सिद्धसलिलम्** । क्ली । काञ्जिके । छाश ।

**सिद्धसाधनः** । पु । सिद्धार्थे । श्वेत सरिषा। रा नि.व.१६ ।

**सिद्धा** । स्त्री । ऋद्धौ । रा नि व.५ ।

**सिद्धान्तः** । पु । निर्णये, निश्चये । "सिद्धान्तो

नाम य परीचकैर्बहुविधं परीक्ष्य हेतुभि साध यित्वा स्थाप्यते निर्णय, स सिद्धान्त' स चोक्तश्च तुर्विध — सर्वतन्त्रसिद्धान्त", प्रतितन्त्रसिद्धान्त, "अधिकरणसिद्धान्त", अभ्युपगमसिद्धान्त इति। तत्र सर्वतन्त्रसिद्धान्तो नाम सन्ति निदानानि स न्ति व्याधय सन्ति सिद्धुपाया साध्यानामिति। प्रतितन्त्रसिद्धान्तो नाम तस्मिंस्तस्मिन् तन्त्रे तत्तत्प्र सिद्धं — यथान्यत्राष्टौ रसा षडन्यत्र; पञ्चेन्द्रिया णि यथान्यत्र षडिन्द्रियाणि । अधिकरण- सिद्धान्तो नाम यस्मिन्नधिकारे संस्तूयमाने सिद्धा न्यन्यान्यपि अधिकरणानि भवन्ति। यथा—'न मुक्तः कर्मानुबन्धिक कुरुते निस्पृहत्वादिति प्रस्तुते सिद्धा कर्मफलमोक्षपुरुषप्रेत्यभावा भवन्ति। अ भ्युपगमसिद्धान्तो नाम यमर्थमसिद्धमपरीक्षितम नुपदिष्टमहेतुक वा वादकाले अभ्युपगच्छन्ति भिषज ॥" च वि.८अ.।

**सिद्धार्थ.(कः)** । पु । (Cruciferae, sinapis.) स्वनामख्यातसर्षपे । श्वेत सरिषा । हि राजिका । तें नल्लसरिषेचेट्टु, तलावाल । सु. सू.३८अ.शिरोविरेचने । वा.सू.१५अ. । गुणा — कटुतिक्तोष्ण वातरक्तघ्न ग्रहदोषघ्न लन्दोषहर. कण्ड्र विषभूतव्रणघ्नश्च । रा.नि व.१६ । नदीवटे । रा.नि.व ११ । [वा.उ.५अ.।

**सिद्धार्थयुग्मम्** । क्ली । पीतकृष्णगौरसर्षपे ।

**सिद्धिः** । पुं । ऋद्धौ । वृद्धि । रा.नि.व ५ । साध्यसाधनज्ञाने । च.सू १अ. । प्रशमनोपाये । यथा — रोगसिद्धि' । वा.कल्प.६अ । हृद्धौ । वृ द्धि । मे. । मेषशृङ्गी । मेडाशिङ्गे । वै निघ.।

**सिद्धिदः** । पु । पुत्रजीववृक्षे । जियापूता । रा.नि व.९ । महाशालवृक्षे । वै निघ. । [कल्प

**सिद्धिली** । स्त्री । चुद्रपिपीलिकायाम् । शब्द

**सिद्धिसाधकः (नः)** । पु । श्वेतसर्षपे । रा. नि.व.१६ । दमनकवृक्षे । वै निघ ।

**सिद्धिस्थानम्** । क्ली । चरकोक्तान्तिमस्थाने ।

**सिद्धोदकम्** । क्ली । काञ्जिके । कॉञ्जि छाटा ।

**सिद्धौषधिः** । पुं । औषधिवर्गभेदे । तैलकन्द सुधाकन्दक्रोडकन्दरुदन्तीसर्पाक्षीषु । "तैलकन्द सुधाकन्द क्रोडकन्दो रुदन्तिका । सर्पाक्षीनयुता पञ्च सिद्धौषधिकसञ्ज्ञका" ॥" रा नि.व २२ ।

**सिध्मम** । क्ली । क्षुद्रकुष्ठभेदे । किलासरोगे । छुलि । इ.च । लक्षणं यथा — "कण्डूयुतं श्वेतम पायि सिध्म विद्यात्तनु प्रायश ऊर्ध्वकाये ।" सु.नि. ५अ ।

**सिध्मपुष्पिका** । स्त्री । सिध्मरोगभेदे । सा लग्नता अलाबुपुष्पवत् शुक्ला च । वि र. ।

**सिध्मलः** । त्रि । किलासरोगिणि । विका. ।

**सिध्मला** । स्त्री । शुष्कमीने । शुटकी माछ । टिका । कुष्ठरोगिण्याम् । वै निघ. । मत्स्यविक्र त्री । मे. ।

**सिध्मवान्** । त्रि । सिध्मरोगिणि । वै.निघ. ।

**सिध्मा** । स्त्री । किलासरोगे । छुलि, ध्योम, कछू, पाचडा । इ च ।

**सिध्रः** । पु । वृक्षे । उत्सा । [अमरभ ।

**सिध्रका** । स्त्री सीध इति ख्याते वृक्षविशेषे ।

**सिन.** । पुं । ग्रामे । (व्याक.) । क्ली । शरीरे । उणा । त्रि (नी) । एकनेत्रे । शब्दकल्प ।

**सिन्दुकः** । पु । क्षुपजातीये सिन्धुवारवृक्षे । रा.नि.व.४ ।

**सिन्दुरम** । क्ली । सिन्दूरे । वै निघ. ।

**सिन्दु(न्धु)वार** । पुं । (Vitex trifolia.) निर्गुण्ड्याकारशुक्लपुष्पवृक्षे, श्वेतनिर्गुण्डीक्षुपे । इ शुभ्र गाछ । शादा निशिन्द । हि सम्भालु । म लिङ्गुर । तें वेविलि । वम् निगुण्डी । सा निर्गु चि श्वेतपुष्पा — कटु तिक्त कफवातक्षयापह. कण्डूकुष्ठघ्न शूलकासघ्नश्च । रा नि व.४ । विषघ्नी व्रणकुष्ठक्षयघ्न । राज. । नीलपुष्पा —"सिन्धु वारदल तत्र वातश्लेष्महर लघु ।" "सिन्दुक स्मृ तिदस्तिक्त कषाय कटुको लघु । केश्यो नेत्र हितो हन्ति शूलशोथाममारुतान् । क्रमिकुष्ठारु चिश्लेष्मज्वरान् ..... ॥" भा. ।

**सिन्दु(न्धु)वारच्छदा** । स्त्री । वननिर्गुण्ड्याम् । वै निघ । [काल निशिन्दा । वै निघ ।

**सिन्दु(न्धु)सहा** । स्त्री । लघुनिर्गुण्ड्याम् ।

**सिन्दूरम्** । क्ली । (Plumbi oxidum rubrum) Red lead, सीसकस्योपधातौ ।

'सिन्दूर । हिं दा सिन्दूर । ते चेन्दुरमु । ता. चेन्दूरम् । पारस. सिरिंज् गुणाः –"सीसोपधातु सिन्दूरं गुणैस्तत्सीससम्मतम् । संयोगजप्रभावेन तस्याप्यन्ये गुणा स्मृताः । सिन्दूरमुष्णं वीसर्पकुष्ठकण्डूविषापहम् । भग्नसन्धानजननं व्रणशोधनरोपणम् । दुग्धाख्ययोगतस्तस्य विगुहिर्गदिता बुधैः ।" भा.पू.१भ.धा.व. । पु । पुष्पवृक्षविशेषे । मे. ।

**सिन्दूरकारणम्** । क्ली । सीसधातौ । है.च. ।

**सिन्दूरपुष्पी (री)** । स्त्री । खनामख्यातपुष्पवृक्षे । हि सेन्दरिया । म शेंद्री । गुणाः – कटुका तिक्ता कषाया वातश्लेष्मघ्नी शिरोरोगघ्नी भूतघ्नी च । रा.नि.व.१० । 'सिन्दूरी विषपित्तास्रकृष्णावातिहरी हिमा ।" भा (री) रोचन्याम् । घातक्याम् । रक्तचेलिकायाम् । मे ।

**सिन्दूरा** । स्त्री । श्वेतनिर्गुण्ड्याम् । भाषा है अूव । वै.निघ. ।

**सिन्धु.** । पु । पाञ्चालदेशीयनदे तज्जल सुरद्रिसलिलतुल्यगुणम् । रा.नि.व १४ । नीलसिन्धुवारवृक्षे । नील निशिन्दा गाछ । सैन्धवलवणे । च द.स्व भेदचि.गर्भाधिकारे । वाल्मी । द म । मी. सिन्धुवारवृक्षे । भाषा निशिन्दा श.च. । श्वेत टङ्कणे । रा.नि.व ६ ।

**सिन्धुकः** । पु । नीलसिन्धुवारवृक्षे । रा.नि.व. ४ । श्वेतसिन्धुवारवृक्षे । श.च ।

**सिन्धुकफ.** । पु । समुद्रफेने । श.र. ।

**सिन्धुकरम्** । क्ली । श्वेतटङ्कणे । भाषा सोहागा । रा.नि.व.६ । [जटा. १४]

**सिन्धुजम् (न्म)** । क्ली । सैन्धवलवणे भम ।

**सिन्धुज.** । पु । पारदे । टङ्कणे । रा.नि.व. ६ । (जा) स्त्री । मुक्ताशुक्तौ । वै.निघ. ।

**सिन्धुजातम्** । क्ली । मुक्तायाम् । वै.निघ. ।

**सिन्धुपर्णी** । स्त्री । गाम्भारीवृक्षे । वै निघ ।

**सिन्धुपुची** । स्त्री । मौक्तिकशुक्तौ । वै.निघ. २भ.कामक.स्व.चि. ।

**सिन्धुपुष्पः** । पुं । शङ्खे । शाँख । श च । कदम्बवृक्षे । बकुलवृक्षे । रा.नि व.२२ ।

**सिन्धुमन्थजम्** । क्ली । सैन्धवलवणे । र.मा. ।

**सिन्धुरः** । पु । हस्तिनि । है.च. । निर्गुण्डीवृक्षे । निशिन्दा गाछ । र.मा.सं.जातीफलाद्यां ।

**सिन्धुरद्वेषी (इन्)** । पुं । सिंहे । व्याक. ।

**सिन्धुलताग्रम्** / **सिन्धुवक्त्राग्रम्** । क्ली । प्रवाले । पला । वै. निघ. ।

**सिन्धुलवणम्** । क्ली । सामुद्रलवणे । र.मा. ।

**सिन्धुवारः (कः) (वितः)** । पु । सिन्दुवारवृक्षे, निर्गुण्ड्याकारशुक्लपुष्पवृक्षे । श्वेत निशिन्दा गाछ । श.र. । च.द.विषाधिकारे विषतैले । च.सू.४अ. । वा.उ.२६अ. ।

**सिन्धुवारदलम्** । क्ली । निर्गुण्डीपत्रे । निशिन्दा पाता । च.द कफज्व.चि । "सिन्धुवारदलक्वाथः ।"

**सिन्धुवेषणः** । पुं । गाम्भारीवृक्षे । श च. ।

**सिन्धुसम्भवम्** । क्ली । फटिकारिकायाम् । फटकिरि । प.मु. ।

**सिन्धूत्प्लवः** । पु । कर्पूरजरसे । वै निघ ।

**सिन्धूद्भवम्** / **सिन्धूद्गतम्** । क्ली । सैन्धवलवणे । प.मु. । वै. निघ. । भ वा.ध्या.चि. ।

**सिन्धूपलम्** । क्ली । सैन्धवलवणे खारा ।

**सिप्र. (प्र.)** । पु । घर्मे । स्वेदे । मे. । स्त्री (प्रा) । महिष्याः ।

**सिम्बा (म्बिः)** । स्त्री । शमीधान्ये । भ दि रूपकी । शिम्बा । शुंटी । भ. । मखीनामगन्धद्रव्ये । रा.नि.व १२ ।

**सिम्बिजा** । स्त्री । शिम्बिधान्ये । भा. ।

**सिम्बितिका** । स्त्री । सेमवृक्षे । सेम गाछ । सु.सू.४६अ. ।

**सिम्बितिकाफलम्** । क्ली । सेमफले । सेम फल । "सेम मधुरविपाक हृद्य कफकृद्गुरु बल्यं पाके च मधुरं शिशिरं रुचिप्रकरम् ।" भा. गुणा –कषायं स्वादु सराहि शीतमुष्ण । सु.सू. ४६अ. ।

**सिम्बी** । स्त्री । निष्पाव्याम् । रा.नि.व.७ । भा दिग्धा सिम्बी पुष्पकसिम्बी चैनि । सिम्बीशर्

**स्तनसम्भत्** । स्त्री । प्रशस्तोरस्कस्तने । लक्षणं यथा – नात्यूर्द्ध्वौ नातिलम्बौ नातिकृशौ नातिपीनौ युक्तपिप्पलकौ सुखप्रपानौ चेति । च.शा.८अ. ।

**स्तनान्तरम्** । क्ली । हृदये । है.च. । भावि वैधव्यसूचकहृदयस्थचिह्नविशेषे । शब्दकल्प ।

**स्तनितफलः**
**स्तनितोद्भवः** } पुं । उदुम्बरवृक्षे । যজ্ঞডুমুর গাছ । विकण्टकवृक्षे । বৈঁচী গাছ । रा.नि.व.११ ।

**स्तन्यम्** । क्ली । दुग्धे । रा.नि.व.१५ । तदुक्त —"रसप्रसादो मधुरः पक्वाहारनिमित्तजः । कृत्स्नदेहात् स्तनौ प्राप्तः स्तन्यमित्यभिधीयते ॥" "आहाररसयोनित्वादेव स्तन्यमपि स्त्रियाः । तदेवापत्यसंस्पर्शात् दर्शनात् स्मरणादपि । ग्रहणाच्च शरीरस्य शुक्रवत् सम्प्रवर्त्तते । स्नेहानिरन्तरस्तत्र प्रस्रवे हेतुरुच्यते ॥" तत् शुद्धं दुष्टञ्च—तयोः परीक्षा यथा—"नीरे स्तन्य यदेकीस्यात् अविवर्णमतन्तुमत् । पाण्डुरं तनुशीतञ्च तद्दुग्धं शुद्धमादिशेत् । कषाय सलिलप्लावि स्तन्यं मारुतदूषितम् । पित्तादम्लञ्च कटुकं राज्योऽम्भसि तु पीतिकाः । कफदुष्टन्तु तोये निमज्जति च पिच्छिलम् । द्वन्द्वजन्तु द्विलिङ्गं स्यात् त्रिलिङ्गं सान्निपातिकम् ॥" भा. ।

**स्तन्यजननः** । त्रि । स्तनदुग्धवर्द्धके । च.सू.४ ।

**स्तन्यशोधनः** । त्रि । स्तन्यदोषहरे । सु ।

**स्तन्यसम्पत्** । क्ली । प्रशस्तस्तन्ये । तच्च प्रकृतिवर्णरसगन्धयुक्तं भवेत् । च.शा ८अ. ।

**स्तन्या** । स्त्री । कलम्बीशाके । प.सु ।

**स्तब्धः** । त्रि । दृढे । स्थिरे । व्याक. ।

**स्तब्धता** । स्त्री । दृढतायां । दार्ढ्ये । मा.नि ।

**स्तब्धरोमा** (न्) । पुं । शूकरे । अम ।

**स्तभः** । पुं । छागे । श र. ।

**स्तम्बः** । पुं । वीहितकवृक्षे । রমনা গাছ । प्रकाण्डहीनतरुमात्रे । अम. । तृणादिगुच्छे । चामर । [निघ ।

**स्तम्बकः** । पुं । अवककवृक्षे । ঢেঁকি । वै.

**स्तम्बकरिः** । पुं । धान्ये । अम. । धान्यमात्रे । श.र. ।

**स्तम्बेरमः** । पुं । हस्तिनि । प सु ।

**स्तम्भः** । पुं । स्तब्धतायां । कायजडतायाम् । अ म.भ. । मा.नि । "निद्रानाश भव. स्तम्भ ।"

**स्तम्भकः** । पु । रक्तबीजे । থুনখারাপী । वै. निघ । [वेदनाविशेषे । सु.सू २२अ ।

**स्तम्भनम्** । क्ली विष्टम्भभावे । वायुजन्यव्रण

**स्तम्भनीक्रिया** । स्त्री । शिराव्यधव्रणमुखावचूर्णनादिना स्रावनिवारणकार्ये । च.द.शिराव्यध चि. । [कन्दे रा.नि व.७ ।

**स्तवक(काह्व)कन्दः (कः)** । पुं । गुलुच्छ-

**स्तवकफलः** । पुं । तेजोवत्याम् । তেজফল, তাম্বূল । वै निघ. ।

**स्तवकमञ्जरी** । स्त्री । अश्मीकवृक्षे । वै.निघ, ।

**स्तवकशालिनी** । स्त्री । घृतकुमार्य्याम् । प सु. ।

**स्तिमितः** । त्रि । स्थिरे । मन्दे । मा.ज्व नि. ।

**स्तीरम्** । क्ली । वज्रे । वै.निघ. ।

**स्तीर्व्विः** । पुं । रुधिरे । तृणजातौ । उणा. ।

**स्तुटिः** । पु । भरद्वाजपक्षिणि । वै.निघ । [१२ ।

**स्तुत्या** । स्त्री । नलिकानामगन्धद्रव्ये । रा.नि.व. [भा. ।

**स्तुनकः** । पुं । छागे । श.च. ।

**स्तुभः** । पुं । छागे । अ.टी.भ । स्त्री । छाग्यां ।

**स्तूपकः** । पुं । वटकादिभक्ष्यद्रव्ये । वै निघ. ।

**स्तेमः** । पुं । आर्द्रीभावे । अम. ।

**स्तेयी** (इन्) । पुं । वनमूषिके । वै निघ. ।

**स्तैमित्यम्** । क्ली । आर्द्रतायां । अङ्गानामार्द्रपटावगुण्ठितत्वे इव भावे । "स्तैमित्यं स्तिमितो वेग. ।" मा.नि. । भा.म.१भ.शेषज्व.चि. । मन्दतायाम् । रा.नि व.२० ।

**स्तोकः (कः)** । पुं । चातकपक्षिणि । रा.नि. व.१९ । अम. । रक्तबीजे । খুনখারাপী । (कः) वयस्नाभविषे । वै.निघ. ।

**स्तोमम्** । क्ली । मस्ते । मस्तके । शब्दकल्प: ।

**स्त्यानः** । त्रि । आर्द्रे । भा.कुष्ठचि. । स्निग्धे । क्ली । आलस्ये । विद. । शि. ।

नदिड वकाल्यौ इतचलितैकपक्षानेव । उद्विग्न सुललितचतुरन्पदौ स्कन्दार्तो भवति च गाढ मुष्टिवर्चा ॥" सु उ.२७अ. । तदुत्पत्ति यथा "स्कन्द सृष्टो भगवता देवेन त्रिपुरारिणा । बिभर्ति चापरां संज्ञां कुमार इति स ग्रह ॥" सु उ २७अ. । [वि.११ ।

**स्कन्द(न्ध)तरुः** । पु । नारिकेलवृक्षे । रा नि

**स्कन्दनम्** । क्ली । रेचने । त्रिका । शोषणे । व्याक ।

**स्कन्दसखा** । पु । स्कन्दापस्मारे । सु उ २७अ ।

**स्कन्दांशक** । पु । पारदे । रा नि व.१३ ।

**स्कन्दापस्मार** पु । बालग्रहविशेषे । लक्षणं यथा "निःसंज्ञो भवति पुनर्भवेत् ससंज्ञः संरब्धः करचरणैश्च नृत्यतीव । विण्मूत्रे सृजति विनद्य जृम्भमाणः फेनं वा सृजति च तत्सखाभिपन्नः ॥" सु उ.२७अ । "स्कन्दापस्मारसंज्ञो यः सोऽग्निना सिमद्युतिः । स च स्कन्दसखा नाम विशाख इति चोच्यते ॥" सु उ.२७अ. ।

**स्कन्धः** । पु । शरीरावयवविशेषे । काँध । रा. नि व १८ । तरोर्मूलादिशाखापर्यन्तभागे । गाछेर गुँडि । चम । शरीरे । मे ।

**स्कन्धजः** । पु । शल्लक्यादौ । "पर्व्वयोनय इक्ष्वाद्याः स्कन्धजाः शल्लकीमुखाः ।" है.च । वटवृक्षे । मद.व ५ । [चम ।

**स्कन्धदेशः** । पु । हस्तिस्कन्धे । स्कन्धप्रदेशे ।

**स्कन्धफलः** । पु । नारिकेलवृक्षे । रा नि व.११ । उदुम्बरवृक्षे । यज्ञडुम्बुर । श.च. । स्त्री (ला) । खर्जूरवृक्षे । भा । [पाथा । है.ध. ।

**स्कन्धमल्लकः** । पुं । कङ्कपक्षिणि । काँक

**स्कन्धरुहः** । पु । वटवृक्षे । वट गाछ । रा नि. व.११ । [निदानम् ।

**स्कन्धरोगः** । पुं । चक्रशाने चरबाहुकादौ ।

**स्कन्धवन्दना** । स्त्री । मधुरिकायां । मौरी । श.च. ।

**स्कन्धशृङ्गः** । पु । महिषे । शब्दकल्प. ।

**स्कन्धा** । स्त्री । शाखायां । लतायां । शब्दकल्प ।

**स्कन्धी** (इन्) । पुं । वृक्षे । र.मा. ।

**स्खल** । वि । स्खुते । चम । वा.उ ३६अ. ।

**स्फोटिका** । स्त्री । हापुत्रिकायां, खञ्जनिकायाम् । त्रिका ।

**स्तनः** । पु । कुचे । रा.नि.व.१८ । तन्नामक मर्मस्थाने । सु शा ६अ । [चि. ।

**स्तनकील** । पु । स्तनविद्रधौ । च द.स्त्रीरो.

**स्तननम** । क्ली । कुन्थने । मे ।

**स्तनन्धय** । पु स्तनपायिशिशौ । रा.नि व १८ । स्त्री (या, यी) । स्तनपायिबालिकायाम् । रा नि.व १८ । [नि व १८ ।

**स्तनपायिका** । स्त्री । बालिकायाम् । रा

**स्तनपीडा** । स्त्री । स्तनरोगे । निदा ।

**स्तनमुखम्** । क्ली पु । चूचुके । रा.नि व.१८

**स्तनयित्नु** । पु । मुस्तके । चम. । रोगे । है च ।

**स्तनरोग** । पुं । स्त्रीणां स्तनजव्याधौ । स्तनेर रोग । सम्प्राप्ति –"सक्षीरौ वाप्यदुग्धौ वा दोष प्राप्य स्तनौ स्त्रियाः । रक्तं मांसञ्च संदूष्य स्तनरोगाय कल्पते यावन्तो गलगो यैव का रणैः सम्भवन्ति हि । तावन्त स्तनरोगा स्यु. स्त्री णां तैरेव हेतुभि । धमन्यः संवृतद्वारा कन्यानां स्तनसंश्रिता दोषाविसरणात्तासां न भवन्ति स्तनामयाः तासामेव प्रजातानां गर्भिणीनाञ्च ता पुनः । स्वभावादेव विवृता जायन्ते सम्भवन्ति ते ॥" सु नि १७अ ।

**स्तनरोहित.** । पु । तन्नामकमर्मस्थाने, तस्य स्थानं स्तनचूचकयोरूर्द्ध्वम् उभयतो द्व्यङ्गुल भागे । सु शा. ।

**स्तनविद्रधि** । पु । स्तनोपरिजातस्फोटके । ठूनको वा मेयेर उपर फोड़ा । है च । रस र स्तनरो चि ।

**स्तनहस्तः** } पु, स्त्री । चुचुके । स्तनेर बोंटा । है च. ।
**स्तनशिखा** }

**स्तनव्रणः** । पु । स्तनोपरिजातक्षते । रस.र स्तनरो चि. । [द.स्त्रीरो चि ।

**स्तनशोष.** । पु । स्तनदुग्धतारोगविशेषे । च

**स्थलशृङ्गाटः (कः)** । पुं । चुद्रगोचुरे । छोट गोक्षरी । रा.नि.व.४ । गोचुरे । र.मा. ।

**स्थला (ली)** । स्त्री । जलशून्याकृत्रिमभूमौ । अ टी.म ।

**स्थलेरुहा** । स्त्री । गृहकुमार्य्याम् । घृतकुमारी । रा.नि.व.५ । दग्धावृचे । कुरहीति कौङ्कणे ख्याता । रा.नि.व.८ । सितपाटलावृचे । श्वेत पारुल । रा.नि.व.१० ।

**स्थलेशयः** । पु । क्रोडवक्रुरङ्गादौ । तन्मांसं सर्व्वगुणकरम् । रा.नि.व.१० ।

**स्थविका** । स्त्री । मचिकाभेदे । सु.कल्प ८अ. ।

**स्थविरम्** । क्ली । शैलेये । शैलज । रा.नि.व. १२ । वा.चि.३अ. । पुं । वृद्धे । रा.नि.व.१८ । कदम्बवृचे । वै.निघ. । वृद्धदारके । वीश्ताडक । "मूलं स्थविरस्य भिषजा चैभि." भा.म.४भ वृद्दारो व्यञ्जयव्यञ्चि. । स्त्री (रा) । महाश्रावणिकायाम् । रा.नि.व.५ । वृद्धायाम् । रा.नि.व.१८ ।

**स्थविरदारु** । क्ली । वृद्धदारुणि । वीश्ताडक । "स्थविरदारुरास्ना. समा. ।" भा.म.१भ स-त्रिकत्र.चि. ।

**स्थाणुः** । पुं । जीवके । शब्दकल्प. ।

**स्थाणुकर्णी** । स्त्री । महेन्द्रवारुणीलतायाम् । बड माकाल । रा.नि.व.३ ।

**स्थाणुरोगः** । पुं । अश्वस्य पादरोगविशेषे । लक्षण — "प्राट्काले व्रणो यस्य जङ्घायामुपजायते । स्थाणुरोग, स विज्ञेय, दुष्टशोणितसम्भव. ॥" अ.दे.१८अ. । [शब्दकल्प ।

**स्थानकम्** । क्ली । आलवालै । हे.च फेणे ।

**स्थानचञ्चला** । स्त्री । वर्वरीवृचे । अ.च ।

**स्थानमृगः** । पु । कर्कटे । मत्स्ये । कच्छपे । मकरे । वै.निघ. ।

**स्थापना** । स्त्री । समर्थनायां । "प्रतिज्ञाया एव हेतुभिर्दृष्टान्तोपनयनिगमैः स्थापनायाम् । पूर्व्वं हि प्रतिज्ञा पश्चात् स्थापना ॥" च.वि.८अ ।

**स्थाप(यि)नी** । स्त्री । पाठायाम् । आद्ना म । रा.नि.व.६ ।

**स्थालम्** । क्ली । मुक्तादिपात्रे । थाल । अम. ।

**स्थालिका** । स्त्री । मचिकाविशेषे । सु.कल्प ८अ. । [तानि हिसप्ततिसङ्ख्यकानि । च.शा. ।

**स्थालिकास्थि** । क्ली । अर्व्वुदाकारास्थनि ।

**स्थालिद्रुमः** । पु । नन्दीवृचे । तूणगाछ । वै.निघ. ।

**स्थालिपर्णी** । स्त्री । आरण्यग्रन्थायां । वै.निघ. ।

**स्थाली** । स्त्री । सङ्कीर्णमुखपात्रविशेषे । थालि । उखिकायाम् । अम. । रक्तपाटलवृचे । रक्त पारुलगाछ । मे. । [शब्दकल्प. ।

**स्थालीपक्वम्** । क्ली । स्थालीपाचितान्नादौ ।

**स्थालीपाकः** । पु । भानुपाकानन्तर लौहस्य स्थाल्यां पाकविधौ । लौहद्विगुणत्रिफलया षोडशगुणेनाष्टावशेषक्काथ कृत्वा लौहमालोड्य स्थाली मध्ये रसशोषणपर्य्यन्त पचेत् । तथा हस्तिकर्णपलाशशतावरीभृङ्गराजकेशराजानाम् एकस्य वा स्वरसेन, अभावे लौहसमानां त्रिफलामष्टगुणतोये नि.क्काथ्य पादशेषक्काथेन स्थालीपाकं कुर्य्यात् । त्रिफलाया पुन स्वरसलाभेऽपि स्वरसो न ग्राह्य इति ज्ञेयम् । र.सा.स. ।

**स्थालीवृचः** । पु । अश्वत्थविशेषे । गया अश्वथ । हि वेलियापीपर । गुणा — स्वादु कटुः तिक्त, तुवर रूच कटुपाकरस याही विषपित्तकफापह. । भा. । [वै.निघ ।

**स्थावरः** । त्रि । स्थितिशीले । पु । नन्दीवृचे ।

**स्थावरविषम्** । क्ली । कन्दमूलखनिजादिविषेषु । तेषु नागोपमङ्गो नाम विषभेदो श्रेष्ठो । "नागो देहकरो श्रेष्ठ, क्षीडे चैवोपमङ्गक. ।" रा.नि.व.६ । दार्विकवत्सनाभसैकवमलुकसक्तुकसर्षपकालकूटदर्दुरहालाहलमर्दकमिषम्, क्षीडारिद्रकर्कटरक्तशृङ्गीप्रदीपनकैःसप्तधेति । र.सा.स. । "विषन्तु गरलं च्वेडस्तस्य भेदानुदाहरे । वत्सनाभ सहारिद्र सक्तुकञ्च प्रदीपन. । सौराष्ट्रिक. शृङ्गिकश्च कालकूटस्तथैव च । हालाहलो ब्रह्मपुत्रो विषभेदा अमी नव ॥" भा.पु.१भ. । एतदर्क्कगुणा.—"भेदेन गलगण्डाद्या वातरोगाः प्रशाम्यन्ति च ।" अर्क.चि । अथच स्थावरविषाणि प्रयान्ति समाप्तौ पञ्चपञ्चाशत् । तानि च मूलपत्रफलनिर्यासक्षीरधातुकन्दाख्यभेदभिन्नानि । तत्र मूल-

**स्थेन** । पु । चमते छत्रा. ।

**स्त्री** । स्त्री । नार्य्याम् । मेघ्रेनाम्रव । वयोभेदेन तासां बालादि यथा—'बालेति गीयते नारी यावत् षाडशवत्सरा । तस्मात् परन्तु तरुणी यावत् स्यात् त्रिंशत भवेत् । तत ऊर्द्ध्वं भवेत् प्रौढा यावत् पञ्चाशत पुन । वृद्धा तत पर ज्ञेया सा रतोत्सववर्जिता ॥ 'पञ्चपञ्चाशती नारी सप्तसप्तति पुमान् । द्वावेतौ न प्रसूयेते प्रसूयेते व्यतिक्रमात् ॥'' ङ्वैराज ५प । स्त्रीसमर्गगुणा स्त्रीसमर्गशब्दे द्रष्टव्या । [मञ्जिन गाछ । त्रिका ।

**स्त्रीचित्तहारी** (इन्) । पु । श्रीभाञ्जनवृचे ।

**स्त्रीचिह्नम्** । क्ली । योनौ । जटा. ।

**स्त्रीधर्म्मः** । पु । स्त्रीरजसि । हे च. ।

**स्त्रीधर्म्मिणी** । स्त्री । रजस्वलायाम् । अम ।

**स्त्रीनवनीतम्** । क्ली । मानुषीस्तन्यजातनवनीते । गुणा —बल्य लघुपाकं चक्षुष्य सर्व्वरोगघ्न दीपन विषघ्न । रा.नि.व.१५ ।

**स्त्रीनिरीचणदोहदः** । पुं । तिलकपुष्पवृचे । वै.निघ. । [अम. ।

**स्त्रीपुंसलचणा** । स्त्री । पीठायां स्त्रियि ।

**स्त्रीप्रियः** । पुं । आम्रवृचे । त्रिका. ।

**स्त्रीबीजः** । पुं । श्यामाकवृचे । श्यामा घास । वै निघ । [नि व ५ ।

**स्त्रीमलापहा** । स्त्री । धूम्रपत्रायाम् । रा

**स्त्रीमुखमधुदोहदः** । पु । वकुलवृचे । रा. नि.व.१० ।

**स्त्रीरञ्जनम्** । क्ली । ताम्बूले । शब्दकल्प ।

**स्त्रीरोगः** । पु । विंशतिविधयोनिरोगे । See योनिव्यापत् ।

**स्त्रीसमर्गः** । पुं । स्त्रीसेवायां । गुणा —"बाला तु प्राणदा प्रोक्ता तरुणी प्राणधारिणी । प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत् ॥" राज ५प ।

**स्त्रीसुखः** । पु । शिग्रुवृचे । सजिना गाछ । वै निघ ।

**स्थगिका** (सम्ध) । स्त्री । चक्राङ्गुलिनिवेशी बेष्ट बन्धनभेदे । ताम्बूलकरङ्काकारबन्ध इति डल्लन । सु सू.१८ष । लक्षण—"स्थगिकां स्थगिकाकारां मेढ्राङ्गुष्ठाङ्गुलार्पिताम् । यथास्वमौ षधे पूर्णा कल्पयेत सुसमाहित ॥" इति । सु. चि.१८ष ङ. ।

**स्थगु** । क्ली । कुब्जभावे । कूँज । शब्दकल्प ।

**स्थपनी** । स्त्री । भ्रूमध्यस्थमर्म्मणि । सु.शा.६ष्ठ । See उत्क्षेपमर्म्म ।

**स्थपुटम्** । त्रि । विषमोन्नते । हारा. ।

**स्थलकन्दः** । पु । आरण्यशूरणे । वन ओल । र मा. ।

**स्थलकमलम्** । क्ली । स्थलपद्मे । स्थलपद्म । गुणा शीतल कटु तिक्त कषाय कफवातघ्न मूत्रकृच्छ्राश्मशूलश्वासकासविषघ्न । रा.नि व.१० ।

**स्थलकुमुदः** । पु । श्वेतकरवीरवृचे । रा नि व. १० ।

**स्थलजा** । स्त्री । वल्लीयष्टिमधुनि । वै निघ ।

**स्थलतण्डुलगन्धः** । पुं । पवित्रशालौ । पक्षिराज धान । रा.नि व.१६ ।

**स्थलपद्म(क)म्** । क्ली । स्वनामख्यातपुष्पविशेषे । स्थलपद्म । हि मेंटतामर । तैं स्थलपद्ममेतु छ्मु । गुणा —"पद्मगुणा कटुस्तिक्ता कषाया कफवातजित् । मूत्रकृच्छ्राश्मशूलघ्नी श्वासकासविषापहा ॥'' भा. ।

**स्थलपद्मः** (क.) । मानके । मानकचू । र मा ।

**स्थलपद्मिनी** (न्नी) । स्त्री । स्थलपद्मवृचे । स्थलपद्म । गुणा —शीता तिक्ता शीता स्तन्या मवाश्मिमेहभूतानीमश्मघ्नी च । रा नि व ५ ।

**स्थलपिण्डा** । स्त्री । पिण्डीतर्जूरिकायाम् । वै.निघ. ।

**स्थलपुष्पा** । स्त्री । भेकपर्णवृचे । रा नि व ५ ।

**स्थ(स्थू)लभण्टा** (की) । स्त्री । हस्तिकायां । त्रिकण्टि । वै निघ । मद ।

**स्थ(स्थू)लमञ्जरी** । स्त्री । अपामार्गे । र मा ।

**स्थलमर्कटः** । पुं । करमर्दकवृचे । वै निघ ।

**स्थ(स्थू)लरुहा** । स्त्री । स्थलपद्मिन्याम् । रा नि.व ५ । वै.निघ. ।

रसुन । रा.नि.व.७। शूरणे । वनशूरणे । वै.
निघ । हस्तिकन्दे । माणकन्दे । मान कचु ।
सुखालो । थाम आलू । रा.नि.व.७ २२ ।

**स्थूलका** । स्त्री । आमहरिद्रायां । वै.निघ. ।

**स्थूलकुमुदः** । पुं । श्वेतकरवीरे । वै निघ. ।

**स्थूलग्रन्थिः** । स्त्री । महामरीचवायाम् । म
हाभरी वच । वै.निघ । [शाक । रा.नि.व.४ ।

**स्थूलचुञ्चुः** । पुं । महाचुञ्चुवृक्षे । চেঁচুকো

**स्थूलचम्पकः** । पुं । श्वेतचम्पके । वै.निघ. ।

**स्थूलजीरकः** । पुं । जीरकभेदे । মোটা কা-
ল জীরা । इ मगरेला । वै.निघ २भ ग्रहणी.चि.
जातीफलादयचूर्णे । गुणाः—कटु तिक्त उष्ण
वातघ्नः गुल्मघ्नः श्लेष्माध्मानहरः अजीर्णक्रिमिघ्नः
दीपनश्च । रा.नि.व ६ ।

**स्थूलतण्डुलः** । पुं । स्थूलशाली । মোটা চৈ
মণ্ডিক ধান । रा.नि व.१६ । प.मु. ।

**स्थूलतालः** । पुं । हिन्ताले । হেঁতাল । रा.
नि व ६ । [वै निघ. ।

**स्थूलतिक्ता** । स्त्री । दार्व्यां । दारुहरिद्रा ।

**स्थूलतिन्दुकः** । पुं । काकतिन्दुके । মাকড়া
গাব । वै.निघ. । [छ । रा.नि.व ६ ।

**स्थूलत्वचा** । स्त्री । काश्मर्याम् । গামার গা

**स्थूलदण्डः** । पुं । देवनाले । महानल । रा
नि.व.८ । [८ ।

**स्थूलदर्भः** । पुं । मुञ्जतृणे । মুঁজ । रा.नि.व

**स्थूलदला** । स्त्री । घृतकुमार्यां । ঘৃতকুমা
রী । रा नि व.५ । [नि.व.८ ।

**स्थूलनालः** । पुं । देवनले । বড় নল । रा.

**स्थूलनासः (सिकः)** । पुं । शूकरे । हे.च. ।
त्रिका. । [वै.निघ. ।

**स्थूलनिम्बुः (कः)** । पुं । महानिम्बुवृक्षे ।

**स्थूलनीलः** । पुं । श्येनपक्षे । বাজ । वै.निघ. ।

**स्थूलपटः** । पुं । कार्पासे । श र. ।

**स्थूलपट्टाकः** । पुं । स्थूलवस्त्रे । श र ।

**स्थूलपत्रः** । पुं । दमनकवृक्षे । দনা । रा.नि.
व १० । सप्तपर्णवृक्षे । ছাতিম গাছ । वै.निघ. ।

**स्थूलपर्णी** । स्त्री । सप्तपर्णवृक्षे । ছাতিম গা-
ছ । वै.निघ. । [निघ ।

**स्थूलपादः** । पुं । गजे । त्रि । श्लीपदिनि । वै.

**स्थूलपुष्पः** । पुं । बकवृक्षे । বাকস গাছ । र
मा. । प.मु । झुण्टुवृक्षे । रा.नि.व.५ । स्त्री (षा)।
पार्वतीयापराजितायाम्, आस्फोतायाम् । হাপ-
রমালী । र मा. । [नि.व २२ ।

**स्थूलपुष्पी** । स्त्री । यवतिक्तालतायाम् । रा.

**स्थूलप्रियङ्गुः** । स्त्री । वरकधान्ये । কামিনী
ধান । वै निघ. ।

**स्थूलफलः** । पुं । शाल्मलिवृक्षे । रा नि.व.८ ।
महाजम्बूवृक्षे । বড় লেবুর গাছ । वै.निघ. ।

**स्थूलफला** । स्त्री । शणपुष्प्याम् । शण । रा.
नि.व.४ । शाल्मलीवृक्षे । শিমুল গাছ । रक्तफल-
वृक्षे । वै निघ. । [व १ ।

**स्थूलभण्टाकी** । स्त्री । महाबृहतीवृक्षे । मद.

**स्थूलमरिचम्** । क्ली । कक्कोलके । कङ्कोल ।
रा.नि.व.१२ । [मार आलू । रा.नि व.७ ।

**स्थूलमूल(क)म्** । क्ली । चाणक्यमूलके । চা

**स्थूलवर्त्मकृत्** । स्त्री । माष्याम् । মাষকলাই ।
श.च ।

**स्थूलवर्बु(वू)रिका** । स्त्री । महावर्बूरवृक्षे ।
बड़ बाबला । "स्थूलवर्बूरिकापत्ररसः पानाद्य
पीडति । सर्वातिसारान्......" शार्ङ्ग.म.१म ।

**स्थूलवल्कलः** । पुं । रक्तलोध्रे । जटा. ।

**स्थूलवृक्षः** । पुं । महावकुलवृक्षे । वै.निघ. ।

**स्थूलवृक्षफलः** । पुं । शिम्बिपिण्डीतकवृक्षे ।
मयना वृक्षविशेष । रा.नि व.८ । [व.६ ।

**स्थूलवैदेही** । स्त्री । गजपिप्पल्याम् । रा.नि.

**स्थूलशरः** । पुं । शरविशेषे । स मालवदेशे स-
मासा ख्यातः । ग्रामशर, মোটা শর । गुणाः—
मधुरः सुतिक्तः कफश्वासनिवारकः बलवीर्यकरः
निवर्हिनोत्ब दुपहातकरश्च । रा.नि.व ८ ।

**स्थूलशालिः** । पुं । शालिधान्यविशेषे महानाम
शालि । মোটা চৈমণ্ডিক ধান । मं बडीशालि ।

विषाणि-अष्ट, पत्रविषाणि पञ्च, फलविषाणि द्वादश, पुष्पविषाणि पञ्च, त्वक्सारनिर्यासविषाणि सप्त, क्षीरविषाणि त्रीणि, धातुविषे द्वे, कन्दविषाणि च त्रयोदशेति पञ्चपञ्चाशत्। गुंणादि स्व स्वपर्य्याये मन्यम्। सु.कल्प २अ.। [६।

**स्थावरादिः** । क्ली । वत्सनाभविषे । रा.नि.व.

**स्फिकः** । पुं । कटिप्रोथे, स्फिचायाम्। फिँक्। श.र.।

**स्थितिः** । स्त्री। आयुर्वेदनिश्चये। च.द.।

**स्थिरः** । पु। धवहृचे। धाओया गाछ। भा.। हृचसामान्ये। त्रिका। त्रि। कठिने। धरणि।

**स्थिरकः** । पु। शाकहृचे। শেগুন গাছ। वै निघ।

**स्थिरकुसुमः** । पु। बकुलहृचे। रा.नि.व १०।

**स्थिरगन्धः** । पु। स्वर्णचम्पकहृचे। रा.नि व. १०। स्त्री (आ)। पाटलहृचे। श्वेतकेतकीहृचे। रा.नि.व.१०। [मा.।

**स्थिरच्छदः (दा)** । पुं, स्त्री। भूर्जहृचे। र.

**स्थिरच्छायः** । पु। वटादौ,छायातरौ। त्रिका.।

**स्थिरजिह्वः** । पुं.। मत्स्ये। हे.च.। [श.मा।

**स्थिरजीविका (ता)** । स्त्री। शाल्मलीहृचे।

**स्थिरदंष्ट्रः** । पुं। सर्पे। मे.।

**स्थिरपत्रः** । पुं हिन्तालहृचे। হেঁতালগাছ। रा नि.व.९। महातालें। वै.निघ.।

**स्थिरपुष्पः** । पुं। चम्पकहृचे। बकुलहृचे। तिलकपुष्पहृचे। रा.नि.व.१०।

**स्थिरपुष्पी (ष्पिन्)** । पुं। तिलकपुष्पहृचे। रा.नि व.१०। [गाछ। वै निघ।

**स्थिरफला** । स्त्री। कुष्माण्डीलतायां। কুমড়া

**स्थिरमुद्रा** । स्त्री। रक्तकुलत्थे। वै निघ.।

**स्थिरयोनिः** । पुं। वाताहृचे। स्कन्दपु०।

**स्थिररङ्गा** । स्त्री। नील्याम्। নীল গাছ। रा नि.व.४।· [व६।

**स्थिररागा** । स्त्री। ... दारुहरिद्रायाम्। रा नि.

**स्थिरसाङ्गः** । पुं। माषपर्ण्यां। মাষাণী। वै. निघ.। [ग। वै.निघ.।

**स्थिरशाल्मली** । स्त्री। शाल्मलीहृचे। শিমু-

**स्थिरसाधनकः** । पुं। सिन्दुवारहृचे। নিশিন্দা গাছ। रा नि.व.४। [रा.नि व.९।

**स्थिरसारः** । पु। शाकहृचे। শেগুন গাছ।

**स्थिरा** । स्त्री। शालपर्ण्याम्। শালপাণি। रा. नि.व.४।२२। "सारिवातिविषे स्थिरा।" च द. ज्व.चि.पिप्पल्याद्यघृते। च सू.४अ वर्ण्यगणे, वयःस्थापने च। काकोल्याम्। কাঁক্লা। "बृहती कलशी स्थिरा।" भा। शाल्मलीहृचे। শিমুল গাছ। श.च.। वनमुद्गे, माषपर्ण्यां। মাষাণী। आखुकर्णीलतायां। মূষাণীলতা। वै.निघ।

**स्थिराङ्घ्रिः (पः)** । पु। तालहृचे। हिन्तालहृचे। वै निघ.। रा.नि व.९। [चामरसे।

**स्थिरादिः** । पु। स्वल्पपञ्चमूल्यां। च.द.परि-

**स्थिराद्वयम्** । क्ली। शालपर्णीपृश्निपर्ण्यौ। শালপাণি ও চাকুলিয়া। "स्थिरे द्वे।" वा.सू. १५अ.पद्मकादौ। [भ्रम.।

**स्थिरायुः** । पुं। शाल्मलिहृचे। শিমুল গাছ।

**स्थूरः** । पुं। हये। उणा.। मनुष्ये। व्याक।

**स्थूलः** । पु। पनसहृचे। কাঁঠাল গাছ। रा. नि व.११। तूदहृचे। তুঁৎ গাছ। भा.। प्रियङ्गुनामकधान्ये। रा.नि.व.१६। हस्ती। वै.निघ.। त्रि। पीने। चन।

**स्थूलकः** । पुं। तृणविशेषे। উলু। र.मा.।

**स्थूलकङ्गुः** । पुं। वरकधान्ये। কামিনীধান্য। रा.नि.व १६। प सु.। See प्रियङ्गुकः, कङ्गुः।

**स्थूलकणा** । स्त्री। स्थूलजीरके। रा.नि.व.६।

**स्थूलकण्टकः** । पुं। जालबर्बूरके। रा.नि.व ८। [च।

**स्थूलकण्टकिका** । स्त्री। शाल्मलिहृचे। र.

**स्थूलकण्टफलः** । पु। पनसहृचे। वै निघ.।

**स्थूलकण्टा (ली) (कटी)** । स्त्री। बृहत्यां। रा नि व ४।

**स्थूलकन्दः (कः)** । पुं। रक्तलशुने। हस्ति-

शरीरे सायश्री नृणाम् ।” सामु शाखासु सास- न्धेनै ६०० । कोष्ठे २३०, ग्रीवोर्द्धशे ७०, पादा ङ्गुलिषु ३०, वलकूर्चगुल्फेषु ३०, जङ्घायां ३०, जानुनि १०, करौ ४०, वङ्क्षणे १०, सक्थिद्वये ।१५० । कट्यां ६०, पृष्ठे ८०, पार्श्वयो. ६०, उर सि १०, ग्रीवायां ३६, मूर्ध्नि ३४ । सु.शा.५श.। शा. ।

**स्नायुकः** । पुं । तन्नामकरोगविशेषे । नारु रोग । इति महनया । निदान —“शाखासु कुपि तो दोष शोथ कृत्वा विसर्पवत् । भिनत्ति तत्क्षते तत्र सोमा मांसं विशोष्य च । कुर्यात् तन्तुनिभं जीव इत सितद्युतिर्बहिः । शनै शनै' क्षताद् याति छेदात् कोपमुपैति च । तत्पातात् शोकमा नि स्यात् पुन स्थानान्तरे भवेत् । स स्नायुक- इति ख्यात क्रियोक्ता तु विसर्पवत् । वाह्यायदि प्रमादेन जङ्घयोस्तुद्यते क्वचित् । सङ्कोचं खञ्जता चैव छिन्ने जन्तु करोत्यसौ ।” सु. ।

**स्नायुर्मं (न्)** । क्ली । शुक्रगतनेत्ररोगभेदे । ल क्षण यथा —“शुक्ले यत् पिशितमुपैति वृद्धिमेतत् स्नायुर्मेत्यभिपठित खरं प्रपाण्डु ।” सु.उ ४अ. ।

**स्नावः** । पुं । स्नायुशिरायां । शब्दकल्प ।

**स्नावी** । स्त्री । असद्वये । वा शा ४अ. ।

**स्निग्धम्** । क्ली । मधूच्छिष्टे । मोम् । रा नि. व १३ । पु । रक्तैरण्डे । रा नि व.८ । सरलवृक्षे । रा नि व.६ । दुग्धसरे । सरलनिर्यासे । वै.निघ । नि । चिक्कणे । श.र. ।

**स्निग्धकरञ्जकः** । पुं। गुच्छकरञ्जे । वै.निघ.।

**स्निग्धच्छदः** । पुं । वटवृक्षे । वै.निघ. । (दा) स्त्री । बदरीवृक्षे । वै.निघ. ।

**स्निग्धतण्डुलः (ला)** । पुं, स्त्री । षष्टिक श.लिधान्ये । प.मु. । रा.नि.व १६ । See गौर- षष्टिकः ।

**स्निग्धदलः** । पुं । गुच्छकरञ्जे । रा.नि.व.६ ।

**स्निग्धदारु** । क्ली । देवदारुकाष्ठे । रा.नि.व. १२ । पु (रु,कः) । सरलवृक्षे । गन्धकाष्ठविशे ष । रा नि व.१२। शालवृक्षे । वै.निघ.। [निघ.

**स्निग्धनिर्मलम्** । क्ली । छत्रकादौ । वै.

**स्निग्धपत्रः (कः)** । पुं । घृतकरञ्जे । गुच्छ- करञ्जे । रा.नि.व ६ । आवर्त्तक्यां । ऑवमोडा । वै.निघ. । मल्लरकाये । रा नि व.८ ।

**स्निग्धपत्रा (त्री)** । स्त्री । बदरीवृक्षे । जटा । पालङ्कशाके । रा नि.व ७ । लोणिकायाम् । शूनि शाक । वै.निघ । गाम्भारीवृक्षे । गामार गाछ । रा.नि.व.६ ।

**स्निग्धपर्णिका (र्णी)** । स्त्री । मूर्वायाम् । रा नि व ३ । पृश्निपर्ण्यां । चाकुलिया । वै.निघ.।

**स्निग्धपिण्डीतकः** । पु । मदनवृक्षविशेषे । म घोरमैणाहृण । अथ वाराहतुल्यगुण. । रा. नि व.८ ।

**स्निग्धफला** । स्त्री । बालुककर्कटिकायाम् । फूटी । वै निघ. । नाकुल्या । गन्धरास्ना । रा.नि व.७ । [गाछ । वै.निघ. ।

**स्निग्धमज्जकः** । पुं । वाताम्रवृक्षे । बादाम

**स्निग्धराजिः** । पुं । कृष्णसर्पेण राजिमत्यां जाते सर्पविशेषे । सु कल्प ४अ. । See सर्पः ।

**स्निग्धा** । स्त्री मेदायाम् । रा नि व.५ । अ- स्थिसारे । मज्जा । विकङ्कतवृक्षे । बैइचो गाछ । अ द. ।

**स्नुक्** । स्त्री । स्नुहीवृक्षे । मनसा गाछ, मनसा सिजू । र मा. । सेहुण्ड इति ङ. । सु.सू.३८अ. अध संशमनौ । वा सू.१५अ. । "स्नुक् शङ्खिनी ।"

**स्नुकच्छदः** । पुं । क्षीरीशवृक्षे । खिरिश गा- छ । प.मु । क्षीरकञ्चुकीवृक्षे । र.मा. ।

**स्नुकच्छदोपमः** । पुं । वाराहीकन्दे । शुयार आलू । वै.निघ ।

**स्नुग्दलम्** । क्ली । मनसापत्रे । मनसापाता । रस.र बाल.चि । पुं । स्नुहीवृक्षे । मनसा गाछ वा टेकाँटा सिजू । श.च. ।

**स्नुपा** । स्त्री । पुत्रभार्य्यायाम् । वा.चि.६अ. । स्नुहीवृक्षे । मनसा सिजू, टेकाँटा सिजू । श. च. ।

**स्नुहा (हिः, ही)** । स्त्री । (Euphorbia neriifolia. Syn. E. Lgularia Eu phorbia antiqu

र्कं दोडुनेलु। गुणा —स्वादु मधुर शीतल पित्तशमन जीर्णज्वरदाहजठररोगघ्न बालहृद्यू नां हित अग्निबलवीर्यकरञ्च। रा नि व,१६।

**स्थूलशिम्ब** । पु। असितशिम्ब्याम्। रा नि व ७। [१६।

**स्थूलशिम्बी** । स्त्री। श्वेतनिष्पावे। रा नि व

**स्थूलशीर्षा (र्षिका)** । स्त्री। महाम्लक पिपीलिकायाम्। क्षुद्रपिपीलिकायाम्। इ च। सु कल्प ८अ। See पिपीलिका। [निघ।

**स्थूलषट्पद** । पु। वरोली। বোলতা। वै

**स्थूलसायकमुखाख्य.** । पु। स्थूलशरे। रा नि व ८।

**स्थूलस्कन्ध** । पु। लकुचवृक्षे। रा नि व ८।

**स्थूलाशा** । स्त्री। गन्धपत्रायाम्। रा नि व १०।

**स्थूला** । स्त्री। बृहदेलायाम्। বড এলাচ। र मा। शतपुष्पायाम्। শুলফা। मधुरिकायाम् মৌরী। कपिलद्राक्षायाम्। वै निघ। कार्पा स्याम्। रा नि व ४। गजपिप्पल्यां श च। ए र्वारुके। কাকুড়। रा नि व ७।

**स्थूलाङ्ग. (ङ्गी)** । पु, स्त्री। स्थूलशाली। মোটা ধান वै निघ। [क्षीरा। मद व २।

**स्थूलाजाजी** । स्त्री। स्थूलजीरके। মোটা

**स्थूलान्त्रम्** । क्ली। तन्नामककोष्ठाङ्गे। মোটা আঁতড়ি। च शा ७अ। [११।

**स्थूलाम्र.** । पु। महाराजचूतवृक्षे। रा नि व

**स्थूलारुष्कम्** । क्ली। क्षुद्रकुष्ठभेदे। कुष्ठ রোগবিশেষ। अनेन स्थूलानि दारुणशोफा स न्धिषु भवन्ति। सु नि ५अ।

**स्थूलास्य.** । पुं। सर्पे। श च.।

**स्थूली** (इन्)। पु। उष्ट्र। शब्दकल्प।

**स्थूलैरण्ड** । पुं। बृहदेरण्डवृक्षे। বড় ভেরেণ্ডা গাছ। म थोरएरंड। गुणा —रसवीर्य विपाकेषु गुणाढ्य इति। रा.नि व ८।

**स्थूलैला** । स्त्री। (Amomum subulatum) Larger cardamum बृहदेला याम्। বড় এলাচ। हि बड़ एलाइच। मे पेड़ एलाकुल। ता एलम्। म एलदोड़ि। गुणा — शीतला तिक्ता सुगन्ध कफपित्तघ्नी हृद्रोगहरी म लहरी मुखघ्नी च। रा नि व ६। [मि।

**स्थूलोच्चय** । पुं। मुखव्रणे। বয়নফোড়া।

**स्थौणेय(क)म्** । क्ली। ग्रन्थिपर्णे। গাঠিয়ালা। हि थुनेर। तैं सुगन्धद्रव्यम्। नेपाले भटेउर। गुणा —"स्थौणेयक कटु स्वादु तिक्तं स्निग्धं त्रि दोषनुत्। मेधाशुक्रकरं रुच्यं रक्षोघ्नं ज्वरजन्तु जित्। हन्ति कुष्ठास्रतृड्दाहदौर्गन्ध्यतिलकाल कान्॥" भा.। च द वा व्या चि एलादि। सु सू ३८अ। वा सू १५अ एलादि।

**स्थौल्यम्** । क्ली। स्थूलतायां। व्याक।

**स्नपनम्** । क्ली। स्नाने। शब्दकल्प।

**स्नव** पु। क्षरणे। अम।

**स्नसा** । स्त्री। वस्नसायां। स्नायु। इ च।

**स्नानम्** । क्ली अवगाहने। गुणा —"स्नान पवित्रमायुष्यं श्रमस्वेदमलापहम्। शरीरबलस न्धानं कौय्यमोजस्कर परम्॥' राज १प। "र क्तप्रसादनं चापि स्नानमग्नेश्च दीपनम्। उष्णेन शिरसः स्नानम् अहितञ्चक्षुषः सदा॥ शीतेन शि रसः स्नानं चक्षुष्यमिति निर्दिशेत्। श्लेष्ममारुत कोपे तु ज्ञात्वा व्याधिबलाबलम्। काममुष्णं शि रःस्नानं भैषज्यार्थे समाचरेत्। अतिशीताम्बुशीते च श्लेष्ममारुतकोपनम्। अत्युष्णमुष्णकाले च पित्त शोणितवर्द्धनम्। स्नानातिसारज्वरितकर्णशूलानि लार्तिषु। आध्मानारोचकाजीर्णभुक्तवत्सु च गर्हि तम्॥'' इत्यादि। सु चि २४अ।

**स्नानतृणम्** । क्ली। कुशतृणे। श र।

**स्नापक** । त्रि स्नानकारके। च सू १५अ।

**स्नायु** । स्त्री, क्ली। वायुवाहिनायाम्। शरद इति लाके। सा गर्भस्य स्रुतिभिर्निर्भवति। मुग्धबोध। स्नायुश्चतुर्विधा यथा—प्रतानवत्य वृ त्ता पृथ्व्यः सुषिराश्चेति। सु शा.५अ। तत्स्वरूपं यथा—"नेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नु यात्। शिराणां हि मृदु पाक स्नायूनाञ्च ततः खर॥" इति। "यावन्त्यः सन्धयः सन्ति देहिनां तावत्स्नायु निर्मिताम्। सन्धीनामपि यत्नाच्च शिरासु दृढा बद्धाः॥' तदयथा—"प्रतानि मद जाड्ये

**स्फुटा** । स्त्री । फणायाम् । श.टी.रा. ।

**स्फुटिः (टी)** । स्त्री । स्फुटितकर्कटिकायाम् । फुटी । पादस्फोटरोगे । हारा. । श.र. ।

**स्फुटिका** । स्त्री । स्फटिकारिकायां । फट्‌किरि । वै निघ. ।

**स्फुटितम्** । क्ली । काण्डभग्नास्थिभङ्गरोगे । "शूकपूर्णमिवाभात विपुलं "विस्फुटीकृत"मिति लक्षणम् । सु. ।

**स्फुला(ल्ला)रः** । पुं । अग्नौ । श.च. । फुल्कारे । फूँ देओया । ..

**स्फुरः** । पुं । स्फुरणे । फलके । श.टी. ।

**स्फुरणः** । पु । वायौ । क्ली । ईषत् स्पन्दने । कम्पे । श. ।

**स्फूर्ज्जकः** । पु । तिन्दुकवृक्षे । कुचिला गाछ । प.सु । लकुचाकारपत्रकाण्डे श्लीपाकवृक्षे । सु. सू.३८श. । [नटे शाक । रा.नि.व.५ ।

**स्फूर्ज्जथुः** । पुं । तण्डुलीयशाकक्षुपे । काटा-

**स्फूर्ज्जनतरुः** । पुं । मन्दीवृक्षे । वै.निघ. ।

**स्फूर्त्तिः** । स्त्री । स्फुरणे । कम्पने । व्याक. ।

**स्फोटः** । पुं । विस्फोटके । फोड़ा । रा.नि व १० । मुक्तायाम् । वै.निघ. ।

**स्फोटकः** । पुं । पक्षिविशेषे । विस्फोटके । फोड़ा । रा.नि.व.२० ।

**स्फोटकरः** । पुं । भल्लातकवृक्षे । वै.निघ. ।

**स्फोटनम्** । क्ली । विदारणे । स्फोटनवदायुक्त-श्वयथुवेदनाशाम् । सु.सू.२१श ।

**स्फोटलता** । स्त्री । कर्णस्फोटालतायाम् । कानछिड़ा । रा.नि.व.३ । [व.११ ।

**स्फोटबीजकः** । पुं । भल्लातकवृक्षे । रा नि.

**स्फोटहेतुः (कः)** । पुं । भल्लातकवृक्षे । वै. निघ. ।

**स्फोटा** । स्त्री । फणायाम् । शब्दकल्प' ।

**स्फोटिका** । स्त्री । स्फोटके । फोड़ा । हापुषिकापक्षिणि । त्रिका. । [निघ ।

**स्फोटिनी** । स्त्री । कर्कटिकाभेदतायाम् । वै

**स्फोता** । स्त्री । श्वेतोत्पलशारिवायाम् । अनन्तमूल । भा.पू.१भ. । See अनन्ता । [त्रिका. ।

**स्मरकूपकः (पिका)** । पुं, स्त्री । भगे ।

**स्मरगृह(च्छत्र)म्** । क्ली । भगे । योनौ । जटा. । शब्दकल्प' ।

**स्मरणम्** । क्ली । स्मृतौ । हे.च. । [स्पः ।

**स्मरणापत्यतर्पकः** । पुं । कच्छपे । शब्दक

**स्मरध्वजम्** । क्ली । योनौ । श.र. ।

**स्मरमन्दिरम्** । क्ली । भगे । रा.नि.व.१८ ।

**स्मरलेखनी** । स्त्री । सारिकापक्षिणि । श.र. ।

**स्मरवृद्धिः (संज्ञः)** । पु । कामवृद्धिवृक्षे । रा. नि व ४ ।

**स्मरस्तम्भः** । पु । लिङ्गे । त्रिका. ।

**स्मरस्मरा** । स्त्री । वनमल्लिकायाम् । वनमालि । रत्ना. ।

**स्मरस्मर्य्यः** । पु । गर्द्दभे । त्रिका ।

**स्मरागारम्** । क्ली । भगे, योनौ । त्रिका. ।

**स्माराङ्कुशः** । पु । लिङ्गे । त्रिका. । [१० ।

**स्माराधिवासः** । पुं । अशोकवृक्षे । रा नि.व.

**स्मराम्रः** । पुं । राजाम्रे । थाम आम् । रा. नि.व.११ ।

**स्मरासवः** । पुं । तालसुरायाम् । तालेर मद । शब्दकल्प. । लालायाम् । त्रिका. । [निघ ।

**स्मारणी** । स्त्री । ब्राह्मयाम् । विर्मी शाक । वै.

**स्मृतिः** । स्त्री । अनुभूतार्थस्मरणे । च.सू.१ष । सा चाष्टविधकारणेभ्यः सम्भवति—"वक्ष्यन्ते कारणान्यष्टौ स्मृतिर्यैरुपलभ्यते । निमित्तरूपग्रहणात् सादृश्यात् सविपर्ययात् । सत्त्वानुबन्धादभ्यासात् ज्ञानयोगात् पुनः श्रुतात् । दृष्टश्रुतानुभूतानां स्मरणात् स्मृतिरुच्यते ।" च.शा.१ष. ।

**स्मृतिहिता** । स्त्री । मण्डूकपर्णीलतायाम् । थेताप्रराजिता । वै.निघ. ।

**स्मेरविष्किरः** । पुं । मयूरे । शब्दकल्प. ।

**स्यदः** । पुं । वेगे । श्रम. ।

**स्यन्दः** । पुं । स्रवणे । व्याक. ।

**स्यन्दनम्** । क्ली । जल । क्षरणे । मे ।

**स्यन्दन** । पु । तन्नामकवृक्षे । तिनिश, स्यन्दन इति पाश्चात्य । সাদন গাছ । भा म पूतना चि । "स्यन्दनोऽञ्जन एव च ।" च चि ३७ । वि ८५ । तिन्दुकवृक्ष । তেঁদ গাছ । वै निघ ।

**स्यन्दनतैलम्** । क्ली । भगन्दरे तैलम् । पाठ —"चित्रकार्कौ त्रिवृत्पाठे मलपू हयमारकम् सुधां वचां लाङ्गलकीं सप्तपर्णं सुवर्चिका । ज्योतिष्मतीञ्च सम्भृत्य तैलं धीरो विपाचयेत् । एतद्धि स्यन्दनं तैलं भग्न दद्याद्भगन्दरे ॥" सु चि ८७ ।

**स्यन्दनद्रु (म)** । पु । तिनिशद्रुमे সাদন গাছ । रा नि व ९ ।

**स्यन्दनाह्वय** । पु । तिनिशवृक्षे तिन्दुकवृक्षे । তেঁদ গাছ । वै निघ । [प सु ।

**स्यन्दनि** । पु । तिनिशवृक्षे । সাদন গাছ ।

**स्यन्द(न्दि)नी** । स्त्री । मुखलालायां । लाल । रा नि व १८ । तिनिशवृक्षे । সাদন গাছ । रसा स । सूत्रवर्द्धनयां । कश्चित् । [वै निघ ।

**स्यन्दिता** । स्त्री तिन्दुकवृक्षे । তেঁদ গাছ

**स्यमीक** । पु । वल्मीके । উইঢিপি । तरुभेदे । শাই গাছ । मे । स्त्री (का) । नीलिकायाम् । मे ।

**स्युमम्** । क्ली । जले । उषा ।

**स्योनाक** । पु । श्योणाकवृक्षे । শোণা গাছ । वै निघ ।

**स्रंस** । पु । पूगवृक्षे । গুবাক্রিগাছ । वै निघ ।

**स्रंसनम्** । क्ली । विरेचने । "स्निग्धाश्चानीदितेगुल्मे पैत्तिके स्रंसनं हितम् ।" भैष गुल्मचि । ज ठ्वंगदोषस्राध करणे । सु ड ।

**स्रंसिनीफल** । पुं । शिरीषवृक्षे । श मा ।

**स्रंसी (इन्)** । पु । पीलुवृक्ष । আক্রোট । भा । पूगवृक्षे । গুবারি গাছ । वै निघ ।

**स्रक (ज्)** । स्त्री । मालायां । ফুলের মালা । अम ।

**स्रक्तु** । स्त्री । वातकम्पुषि । शब्दकल्प ।

**स्रव** । पु । मूत्र । रा नि व १८ ।

**स्रवणम** । क्ली मूत्र । रा नि व १८ । घर्म्मे । क्षरणे श र व्याक । [लोके । वै निघ ।

**स्रवत्तोया** । स्त्री । रुदन्तीवृक्षे रुदन्तीति

**स्रवद्गर्भा** । स्त्री । पतितगर्भायां गवि । अम ।

**स्रवन्ती** । स्त्री । ओषधिविशेषे श्रावण्याम् । মুণ্ডীরী । भ [इ चि महाद्रावके ।

**स्रवन्तीपतिफेन** । पु । -समुद्रफेणे । सं मौ

**स्रवा** । स्त्री । जीवन्त्या । वै निघ । मूर्व्वायां । धन्टी रा ।

**स्रष्टा (ष्टृ)** । पु वैद्ये वै निघ ।

**स्रस्ताङ्गता** । स्त्री । शिथिलाङ्गतायां । निस्सहायावयवतायां । मा ज्व नि ।

**स्राव** । पु । क्षरणे निस्यन्दे । रसे । निर्यासे । আঠা । वै निघ ।

**स्रावकम्** । क्ली । मरिचे । श च ।

**स्रावणिका (णी)** । स्त्री । ऋद्धी । अध्वकल । मुण्डीर्य्यां । মুণ্ডীরী । भा म कुष्ठ चि ।

**स्रावी (इन्)** । पु । कर्णपाल्योगतरोगे । सु सू १६ अ [कम् ।

**स्राव्य** । त्रि । स्रावयाहें विद्रध्यादौ । वैद्य

**स्रुग्दारु** । पु । विकङ्कतवृक्षे । বৈঁইচী গাছ । रमा । [च ।

**स्रुघ्नी** । स्त्री । स्वर्ज्जिकाक्षारे । সাজিমাটি । इ

**स्रुता** । स्त्री । हिङ्गुपत्र्याम् । श च ।

**स्रुवतरु (द्रुम)** । पु । विकङ्कतवृक्षे । বৈঁইচী গাছ । वै निघ । रा नि व ९ ।

**स्रुव(वा)वृक्ष** । पु । विकङ्कतद्रुमे । বৈঁইচী গাছ । रा नि व ९ । वा सू १५ अ आरग्वधादि । "निम्बाम्रतामधुरसास्रुववृक्षपाठ ।"

**स्रुवा** । स्त्री । शल्लकीवृक्षे । मे । मूर्व्वायाम् । মুগা । प सु ।

**स्रोत (स)** । क्ली । जलवेगे । मे । छिद्रे । रा नि व १८ देहस्थनवद्वारेषु । "येमानैर्देहस्थमन्नाद य सञ्चरन्ति तानि स्रोतांस्युच्यन्ते ।" भा । तद्यथ —"मूलात् स्वादन्तर देहे प्रसृतन्त्वभिवाहि य

**स्वरहा(न्) / स्वरघ्न** । पु । स्वरभङ्गे । रा.नि व २० ।

**स्वरामक** । पु । अक्षोटवृक्षे । आक्रोट गाछ । वै निघ. ।

**स्वरालु** । पु । वचायाम् । श च ।

**स्वरु** । पु । इथिकभेदे । शब्दकल्प ।

**स्वर्गपुष्पम्** । क्ली । लवङ्गे । वै निघ. ।

**स्वर्गलोकेश** । पु । शरीरे । जटा ।

**स्वर्ज्ज (चार)** पु । सर्ज्जिचारे । च द.प रिणामशूले । "हिङ्गुकुश्वचाखर्ज्ज "

**स्वर्ज्जि. (का:)** । पु स्वर्ज्जिचारे । साजिमा टी । रा नि व ६ । यवचारे । सोरा । भा ।

**स्वर्ज्जिकापाक्य.** । पु । स्वर्ज्जिचारे । वै निघ.।

**स्वर्ज्जि(का)चार** । पु । (Coroxylon griffithii) Panjab salt wort or Sajji स्वनामकचारे । साचिक्षार, साजिमाटी । हि साजीखार, कङ्गणखार । गुणा —कटुकष्ण तीक्ष्ण वातकफघ्न गुल्माध्मानकृमिघ्न व्रणादरघ्न च । रा नि व.६ । यवचारा अयेदर्ज्ज श्वासान् वातकफामयान् गुल्महृद्‌द्रहणीपाण्डुमीहानाह मलामयान् । तस्मादल्पान्तरगुण स्वर्ज्जिकाचार उच्यते ॥" राज । [रा.नि.व ६ ।

**स्वर्ज्जी** (न्) । पु । स्वर्ज्जिचारे । साचिक्षार ।

**स्वर्णम्** । क्ली । स्वनामप्रसिद्धधातौ । सोणा । धुस्तूरे । भम । वै निघ.२भ वयाच.कालान्तकर से । नागकेसरपुष्प । नागेश्वर फुल गौरसुवण शाके । सोणानटिया शाक । रा नि व ७।१० । "पुरा निजाश्रमस्थानां सप्तर्षीणां जितात्मनाम् । मरीचिरङ्गिरा अत्रि पुलस्त्य पुलह क्रतु । व सिष्ठ्यति सप्तैते कीर्तिता परमर्षय ॥ पत्नीर्वि लोक्य लावण्यलक्ष्मीसम्पन्नयौवना । कन्दर्पदर्पवि ध्वस्तचेतसो जातवेदस । पतित यद्धरापृष्ठे रेतस्त द्धेमतामगात् ॥ क्षत्रिमयापि भवति तद्रसेन्द्रस्य वै धस ॥' इति स्वर्णोत्पत्ति । "दाहे रक्त सित्त छेदे निकषे कुङ्कुमप्रभम् । तारशुल्वोज्झित स्निग्ध कोमल गुरु हेम सत् ॥' इति परीचा । "स्वर्ण सारादलानां पत्राण्यग्नौ प्रतापयेत् । निषिञ्चेत प्रतप्तानि तैले तक्रे गवा जले । काञ्जिके च कुल त्थानां कषाये सप्तधा पृथक् । एव स्वर्णादिलौ हानां विशुद्धि सप्रजायते ॥' पत्तलीकृतपत्राणि अग्नौ तापयित्वा तप्तानि तैले तक्रे काञ्जिके गोमू त्रे कुलत्थकषाये निषिञ्चेर्निर्वाप्य शोधयत् । एवमे वान्येषां धातूनामपि श धन कार्य्यम् ॥ इति शोध नम् मारण यथा—स्वर्णस्य एक भाग पारदस्य च भागद्वयम् कल्केन मर्दयित्वा गोलकसम गन्धक चूर्ण तदध उपरि च निधाय शरावसपुटे निरुध्य त्रिंशद्वनकरीष चतुर्दश पुटान् दद्यात् । शिला गन्धार्कदुग्धाक्ता स्वर्णाद्या सप्त धातव । म्रियन्ते द्वादशपुटै सत्य गुरुवचो यथा ॥" शिला मन शि ला एषां चूर्णादभि पचाथि लेपयित्वा गज पुटे पचेत् । अथवा रसकज्जलिकया केवलेन वा रसेन स्वर्णपत्र लिप्त्वा हिङ्गुहिङ्गुलसिन्दूरमन शि लाभि स्वर्णसमाभिर्मेलयित्वा धुस्तूररसेन घन म र्दयित्वा गोलक कुर्य्यात् । ततो कुप्पिकामध्य स्थाप्य शरावेणाच्छाद्य वह्निलेप दत्त्वा पलाशभस्म ना पूरयेत् । ततो दिनद्वय गाढाग्नि दद्यादिति । र सा स । गुणा —"सुवर्ण शीतल वृष्य बल्य गुरु रसायनम् । स्वादु तिक्त च तुवर पाके च स्वादु पिच्छलम् । पावन बृहण नेत्र्य मेधास्मृतमतिप्र दम् । हृद्यमायुष्कर कान्तिवाग्विशुद्धिस्थिरत्वकृत् । विषद्वयक्षयोन्मादत्रिदोषज्वरशोषजित् । बल स वीर्य्य हरते नराणां रोगव्रजान् शोषयतीह काये। असौख्यकारच सदा सुवर्णमशुद्धमेतन्मरणच कु र्य्यात् । असम्यक मारित स्वर्ण बल वीर्य्यञ्च नाश येत् करोति रोगान् मृत्युञ्च तद्धन्याद्यत्नतस्तत । भा.पू धा व । [किङ्किणीबैले ।

**स्वर्णकम्** । क्ली । धुस्तूरफले । भैष शिरोरी.वि.

**स्वर्णकण** । पु । कणगुग्गुलौ । रा नि व.१२।

**स्वर्णकद्रू.** । स्त्री। सर्ज्जरसे । धुनो, धूनम । वै निघ. ।

**स्वर्णकमलम्** । क्ली । रक्तपद्मे । वै निघ. ।

**स्वर्णकेतकी** । स्त्री । रक्तकेतकीवृक्षे । सोणा केया । पुष्पगुणा —वर्णकर केशसौगन्ध्यकर स्व र्णवर्ण मदनोन्मत्ततावाहुल्यकर चीक्ष्णकारि च । केतकीस्तन, अतिशीतल कटु पित्तकफघ्न रसा यन बल्य देहदार्ढ्यकरच । रा नि व.१० ।

**स्वर्णगैरिकम्** । क्ली । रक्तगैरिके । रक्त गेरिमाटी । वै निघ । [मगा ।

**स्वर्णचूड** । पुं । पक्षिविशेषे । चाष पक्षी ।

**स्वर्णजम्** । क्ली । स्वर्णमाक्षिके । वै निघ । वङ्ग । हे च ।

**स्वर्णजातिका (ती)** । स्त्री । (Jasminum revolutum) पीतजातीपुष्पवृक्षे । पीत चामिली । वै निघ ।

**स्वर्णजीवन्तिका (न्ती)** । स्त्री । पीतपुष्प जीवन्त्याम् । स्वर्णजीवन्ती । हि सोनाजीवई । गुणा —हृद्या मधुरा चक्षुष्या शिशिरा वातपित्तर क्तदाहघ्नी च । रा नि व ३ ।

**स्वर्णजीवा** । स्त्री स्वर्णजीवन्त्याम् । वै निघ ।

**स्वर्णदी** । स्त्री स्वर्गङ्गायाम् । भम । हरि कान्त्याम् । विशाली रा नि व ५ ।

**स्वर्णदुग्धा** । स्त्री । स्वर्णक्षीरिकायाम् सो णाखिरुई, शेयालकांटा वै निघ ।

**स्वर्णद्रु** । पु महारग्वधवृक्षे बड सोन्दाल । रा नि व ८ ।

**स्वर्णधातु** । पु। स्वर्णगैरिके । स्वर्ण वै निघ ।

**स्वर्णनिभम्** । क्ली । स्वर्णगैरिके । स्वर्णगेरि माटी । वै निघ । [पाठ रस चि

**स्वर्णपत्रम्** । क्ली । पत्राकारसुवर्णपत्र सोणार

**स्वर्णपत्रिका** । स्त्री । सुवर्णमुख्याम् । सो णामुखी । भैष शूल चि हरीतकीखण्ड ।

**स्वर्णपर्णी** । स्त्री । स्वर्णजीवन्त्या वै निघ ।

**स्वर्णपर्पटी** । स्त्री । ग्रहण्यधिकारे रस यथा —पारदस्य पल स्वर्णस्य तोलकम् एकत्रमिश्रयित्वा मर्दयित्वा तेन सह गन्धकस्य पल मिश्रयित्वा स्त्री हस्तेन मर्दयित्वा कज्जलि कार्य्या । अथ यथावि धि पर्पटी पाच्या । भैष । [र मा ।

**स्वर्णपाटक** । पुं । टङ्कणक्षारे । सोहागा ।

**स्वर्णपारे(ले)वतम्** । क्ली । द्वीपान्तरखर्जू रे । महापारेवतफले । रा नि व ११ ।

**स्वर्णपुष्प** । पुं । चाम्पेयवृक्षे । चावना गाछ । अ च स्वधवृक्षे । सोन्दाल गाछ । रा नि व ८ । कपित्थवृक्षे । कुष्माण्डलतायां । वै निघ । मण्डवम्पकवृक्षे । रा नि व ११ । स्त्री (ष्पा । ला ङ्गलिकौषधी । विषलाङ्गुलिय । सातलायाम् । पीतपुष्प तरुणी । रा नि व ४ । सैदमग्रयाम् । मेड शिङ । वै निघ । [गालू । वै निघ ।

**स्वर्णपुष्पध्वजा** । स्त्री । स्वर्णकदलीवृक्षे । से

**स्वर्णपुष्पिका** । स्त्री । लाङ्गलिकौषधी । वि षलाङ्गुलिय । रा नि व ४ । स्वर्णयू थिकायाम् । वै निघ ।

**स्वर्णपुष्पी** । स्त्री स्वर्णकेतक्यां रा नि व १० । सातलायां । रा नि व ४ । आरग्वधवृक्षे । से ण नू श च ।

**स्वर्णफलम्** । क्ली धुस्तूरफले । धुतूराबीज । भैष महालक्ष्मीविलासरसे । स्त्री (ला) । स्वर्ण कदल्याम् रा नि व ११ । [भ सा चि महारसे ।

**स्वर्णबीजम्** । क्ली । धुस्तूरबीज । वै निघ २भ

**स्वर्णभूमि** । स्त्री । मधुरवल्कले । दारचिनि । वै निघ । [रिके । वै निघ ।

**स्वर्णभूषणम्** । क्ली । आरग्वधवृक्षे । स्वर्णगै

**स्वर्णभृङ्गार** । पु। पीतभृङ्गराजे । रा नि व ४।

**स्वर्णमण्डनम्** । स्वर्ण रिके । वै निघ ।

**स्वर्णमाता** । स्त्री । महाजम्बूवृक्षे । बड जाम गाछ वै निघ ।

**स्वर्णमाक्षिकम्** । क्ली, पु । स्वनामख्यातोप धातुविशेषे । स्वर्णमाक्षिक । अस्य स्वर्णसाहित्या त्तथाभिधानम्— किञ्चित् सुवर्णस्य हल्यात् स्वर्ण माक्षिकमुच्यते । "उपधातु सुवर्णस्य किञ्चित्" स्वर्णगुणान्वितम् तथा च काञ्चनाभ वै दीयते स्वर्णमाक्षिकम् ॥ किन्तु तस्यानुकल्पत्वात् किञ्चि द्गुणगुणत्वत । न केवल स्वर्णगुणा वर्तन्त स्वर्ण माक्षिके । द्रव्यान्तरस्य ससर्गात् सन्त्यन्येऽपि गुणा यत " गुणा —"सुवर्णमाक्षिक स्वादु तिक्त वृष्य रसायनम् । चक्षुष्य वस्तिरुक्कण्ड्वर्शोमेहविषोद रान् । अग्र शोथ विष कण्डू त्रिदोषमपि नाशये त् ॥' अपक्व तत् मन्दाग्निम् बलहानिं विष्टम्भ नेत्ररोग कुष्ठादिकञ्च करोति । भा पू १भ धा व । "सिन्धूद्भवस्य भागैक द्विभाग माक्षिकस्य च । मा तुलुङ्गरसैर्वापि जम्बीरोत्थद्रवेण वा । हत्वा तदा

